**बहियाय अणापुच्छा, उब्भामे लभिय सेहमादि तु । नेइ सयं पेसति वा, आसन्नठियाण उ गुरूणं ॥४२४॥**

बहिरुद्ग्रामे उद्ग्रामकभिक्षायां गतः शैक्षकादि लब्ध्वा यस्य सकाशेऽधीते तमनापृच्छय आसन्नस्थितानामनन्तरक्षेत्रस्थितानां गुरूणां निजाचार्याणां स्वयं नयति, अन्यैर्वा स्वगुरुकुलसक्तैः प्रेषयति । विहीए आपुच्छणाए मायाए इति व्याख्यानार्थमाह ॥

**अहवुप्पण्णे सचित्तए मा मे एतअंच्छिती । मायाए आपुच्छइ नायविहिं गंतु मिच्छामि ॥ ४२५ ॥**

अथवेति मायायाः प्रकारान्तरोपदर्शने उत्पन्ने सचित्तादिके चिन्तयति मा मे ममेदं सचित्तादिकमुत्पन्नमेतैर्गुरुभिरांच्छिती इति अपहियतामिति मायया आपृच्छति ज्ञातिविधिस्वजनवर्गं वन्दापयितुं गन्तुमिच्छामि ।

**पव्वावेउं तहियं नालमनालेय पत्थवे गुरुणो । आगन्तुं च निवेयइ लद्धं मे नालबद्धंति ॥ ४२६ ॥**

तत्र गत्वा नालबन्धान् नालसम्बन्धान् अनालबद्धान्वा प्रव्राज्य गुरोः स्वाचार्यस्य प्रेषयति प्रेष्य च पुनरध्यापयितुः समीपे समागच्छति । समागत्य च निवेदयति । यथा मया लब्धा नालबद्धा इति तत्र प्रेषिताः ।

**ण्हाणादिसु इहरा वा दट्ठुं पुच्छा कया सि पव्वइया । अमुएण अमुयकाले इह पेसविया नीया वा त्ति ॥४२७॥**

ये ते त्रिभिः प्रकारैः अपहृताः शिष्यास्तान् जिनस्नानादिषु समवसरणे इतरथा अन्यत्र वा मिलितान् दृष्ट्वा आचार्येण पृच्छा कृता यथा कदा कथं वा प्रव्रजिता अभवन् ततस्ते तत्क्षेत्रं च कालं च पुरुषं कथयन्ति । यथामुकेनामुके काले इह अस्मिन् क्षेत्रे प्रव्राजितास्तथा एवमन्यैः सह प्रेषिताः स्वयं वा तत्र नीता एवं निवेदिते व्यवहारो जातस्तस्मिंश्च व्यवहारे स पराजितस्तत आचार्येण यत्कर्तव्यं तदाह—

**सो उ पसंग णवत्था निवारणठाए मा हु अण्णो वि । काहिति एवं हो, गुरुयं आरोवणं देइ ॥ ४२८ ॥**

व्य. सू. स आचार्यो मा एवं भूत्वाऽन्योऽप्येवं कार्षीदिति प्रसङ्गानवस्थानिवारणार्थं गुरुकमारोपणं मासगुरुप्रभृतिकं पूर्वोक्तं ददाति ॥ अधु-
२२-२३ नाऽब्भुवगमे तस्स इच्छाए इति व्याख्यानयति––

॥ ८० ॥ **अब्भुवगयस्स सम्मं, तस्सं उ पणिवइय वच्छलो कोइ, वियरति तेच्चिय सेहे, एसेव य वत्थपत्तादी ॥४२९॥**

सत्यं मयाऽसुन्दरं कृतं तस्मान्मिथ्या मे दुष्कृतमिति सम्यगभ्युपगतस्य प्रतिपन्नस्य कोऽप्याचार्यः प्रणिपतितवत्सलो ये शैक्षास्तेन दीक्षितास्तानेव वितरति प्रयच्छति । एवमेव वस्त्रपात्रादिकमपि तदुत्पादितं तस्यैव प्रयच्छति । उपसंहारमाह––

**एवं तु अहिज्जंते ववहारो अभिहितो समासेण । अभिधारेंते इणमो ववहारविहिं पवक्खामि ॥ ४३० ॥**

एवमनेन प्रकारेण तुर्भिन्नक्रमः स चाग्रे योक्ष्यते । अधीयाने व्यवहारं समासेन संक्षेपेणाभिहितः । इमं पुनर्व्यवहारविधिमभिधारयति प्रवक्ष्यामि प्रतिज्ञातमेव निर्वाहयति––

**जं होति नालबद्धं घाडियनातीव जाव तहल्लं । भोएहि तिविमग्गंतो, विधं सेसेसु आयरितो ॥ ४३१ ॥**

यद्भवति नालबद्धं, वल्लीबद्धमित्यर्थः । सा च वल्ली द्विधा–अनन्तरा सान्तरा च । तत्रानन्तरा इमे–षड् जनास्तद्यथा–माता पिता भ्राता भगिनी पुत्रो दुहिता च

**वल्लीसंतरणंतर अणंतरा छज्जणा इमे हुंति । मायापिया य भाया भगिणीपुत्तो य धूया य ॥ ४३२ ॥**

सान्तरा पुनरियं मातुर्माता १ पिता २ भ्राता ३ भगिनी च ४ तथा पितुः पिता १ माता २ भ्राता ३ भगिनी ४ च । तथा भ्रातुरपत्यं भ्रात्रीयो भ्रात्रीया वा, भगिन्या वा अपत्यं भागिनेयो भागिनेयी वा, पुत्रस्यापत्यं पौत्रः पौत्री वा, दुहितुरपत्यं दौहित्रो दौहित्री

माउम्मायाय पिया भाया भगिणीएय एव पिउणोपि । भाउ भगिणीए वच्चा, धूया पुत्ताण वि तहेव ॥१॥
उ. ४. भा. वा। उक्तं च–माउम्मायाय पिया भाया भगिणीएय एव पिउणोपि । भाउ भगिणीए वच्चा, ... घाडियनातीवत्ति यो वा
४२९-४३३ परंपरपल्लिया वा एसा । अन्येत्वाहुः—प्रपौत्रप्रपौत्री इत्यादिरपि परम्परवल्ली यावत्स्वाजन्यस्वीकारः, घाडियनातीवत्ति यो वा
॥ ८१ ॥ घटितज्ञातिदृष्टा भाषित इत्यर्थः यो वा तत्र नालबद्धे घटितज्ञातौ वा लाभः । एते ते अनन्तरोदिताश्चिह्नं विमार्गयन्तः सन्तोभिधारयन्तं यान्ति
अभिधारयत आभाव्या भवन्ति शेषेषु पुनरनभिधारयत् स्वाचार्यः श्रुतगुरुस्वामी भवति। शेषा अनभिधारयन्तः श्रुतगुरोराभाव्या भवन्ती-
अभिधारयत आभाव्या भवन्ति शेषेषु पुनरनभिधारयत् स्वाचार्यः श्रुतगुरुस्वामी भवति। अह नो अभिधारन्ती सुयगुरुणो तो उ आभव्वा ॥१॥
त्यर्थः। उक्तं च–जइते अभिधारयन्ती पडिच्छंते अपडिच्छगस्सेव । अह नो अभिधारन्ती सुयगुरुणो तो उ आभव्वा ॥१॥
इयमत्र भावना–येनालबद्धा एव घटितज्ञातयो ये वा तैर्दीक्षितास्तैः सह सङ्केतःपुर्वं कृतो यथा यूयममुकस्याचार्यस्य पार्श्वे व्रजताहं
पुनः पश्चादागमिष्यामि । एवं संकेतं कृत्वा ते पूर्वमुपस्थापितास्ते चाभिधारयन्तो वर्तन्ते । यथाऽअमुकोऽमुकुकाले समागमिष्यति । सोऽपि
च पश्चादागतः सन् तथैव यदि निवेदयाति चिह्नान्यपि च सर्वाण्यपिमिलन्ति तदा पूर्वमुपस्थापितात्तस्य सर्वे। उक्तं च—
संगारो पुव्वकतो, पच्छा पाडिछओ उ सो जातो । तेणं निवेदयव्वं उवठिया पुव्व सेहा से ॥ १ ॥
यदि पुनः कालतश्चिह्नैश्चविसंवादस्तदा गुरोराभाव्य इति, । एतदेव वैतत्येन व्याख्यानयन्नाह—
उवसंपज्जे जत्थ उ, तत्थ पुठो भणातित्त । वयचिंधेहिं संगारं, वण्णसीएयणंतगं ॥ ४३३ ॥
यत्रोपसम्पद्यते स पश्चात्तत्र तैः पृच्छयते, केन कारणेनत्वमागतोऽसि; 'स' प्राह—सूत्रार्थानामर्थायोपसम्पत्तुमेवमुक्त्वा तेन सद्भावः
कथनीयो यथा उपसम्पद्ये इति परिणामात् पूर्वकालमपि युष्माकं पार्श्वे ये नालबद्धा घटितज्ञातयस्तैर्दीक्षिता वा पूर्वमुपस्थितास्तेषां मया
सङ्केतः कृतो यथाहं पश्चात् शीते शीतकाले चशब्दादन्यस्मिन् वा काले उपसम्पत्स्ये । तेषां चैतावद्वय एवं भूतस्य शरीरस्य वर्ण इत्थंभूतं च

शीतकालप्रायोग्यमनन्तकं वस्त्रमेवं वयसा चिह्नैश्च सङ्केतं स्पष्टयति । उक्तं च—

एवेइएहिं दिणेहिं तुज्झसगासं अवस्स एहामो । संगारो एव कातो चिंधाणि य तेसि चिंधेइ ॥ १ ॥ अत्राभाव्य-
विधिमाह—

१८ **नालबद्धाउ लब्भंते, जे य तमभिधारए । जे यावि चिंधकालेहिं संवयंति उवट्ठिया ॥ ४३४ ॥**

यदा तमुपसम्पत्स्यमानमभिधारयन्ति नालबद्धाः पूर्वोपस्थिता यथासोऽत्र सत्वरमुपसम्पत्स्यते, तदा ते नालबद्धास्तेन लभ्यन्ते, ये चापि घटितज्ञातयो नालबद्धादिदीक्षिताश्चिह्नैः कालेन च तेऽपि तस्याभवन्ति, विसंवदन्तस्तुगुरोरथ चिह्नैः संवादोऽस्ति, न कालतस्तथा हि यस्मिन् काले पूर्वमुपस्थिताः कथिता न ते तस्मिन् काले आयाताः, किन्तु कालान्तरे, सोऽपि च सङ्केतदिवसैर्नायातस्ततः स ते चापृच्छयन्ते।
२२ यत्र यदि केनापि कारणेन ग्लानत्वादिना स ते वा नायातास्तदास्ति तत्वतः कालसंवाद इति ते तस्याभाव्याः । एतदेवाह—

**अण्णकाले वि आयाया, कारणेण उ केणवि । ते वि तस्साभवंती उ विवरीयायरियस्स उ ॥ ४३५ ॥**

ये कारणेन ग्लानत्वादिना केनाचित्पूर्वमुपस्थिता अन्यकालेऽपि यस्तेनोपसम्पद्यमानेन कालो निर्दिष्टस्तस्मादन्यस्मिन्नपि काल आयातास्तेऽपि तस्याभवन्ति, विपरीतास्तु कारणमन्तरेण कालविसंवादिन आचार्यस्याभाव्याः । उपलक्षणमेतत् । सोऽपि यदि कारणेन
२६ केनचिन्निर्दिष्टकालादन्यस्मिन् काले समायातस्तथापि तस्याभवन्ति विपरीतास्तु कारणमन्तरेणोपसम्पद्यमानाविसंवादभाज आचार्यस्याभाव्याः ।

**विप्परिणयंमि भावे जइ भावो सिं पुणो वि उप्पण्णो । ते होंतायरियस्स उ अहिज्जमाणे य जो लाभो ॥४३६॥**

सङ्केतकारणादनन्तरं यदि तेषां पूर्वमुपस्थितानां भावो विपरिणतो यथा नामुकस्य पार्श्वे उपसम्पत्तव्यं तस्मिन् विपरिणते भावे पश्चा-

त्पुनरपि केनापि कारणेन उपसम्पदनाभिप्राय उत्पन्नस्तदा ते पूर्वमुपस्थिता भवन्त्याचार्यस्य अधीयानेषु तेषु गाथायामेकवचनं प्राकृतत्वात्, प्राकृते हि वचनव्यत्ययोऽप्यस्ति । यो लाभः सोऽप्याचार्यस्य उपलक्षणव्याख्यानादेतदपि द्रष्टव्यं । सङ्केतकरणादूर्ध्वं यदि तस्य पश्चादुपसम्पद्यमानस्य भावो विपरिणतः पश्चात्पुनरपि कालान्तरेण जातस्तदा ते पूर्वोपस्थिता गुरोराभाव्या यश्च तेषां लाभः सोऽपि गुरुस्तथा च पश्चादुपसम्पद्यमानमधिकृत्य पञ्चकल्पेऽभिहितम् ।

कालेण य चिंधेहिं य, अविसंवादी हि तस्स गुरुणिद्दरा । कालंमि विसंवदिए, पुच्छिज्जइ किंतु आतोसि ॥ १ ॥
संगारय दिवसेहिं, जइ गेलण्णादि दीवए तो उ । तस्सेव उ अहभावो विपरिणतो पच्छ पुणो जातो ॥ २ ॥
तो होइ गुरुस्सेव उ एवं सुयसंपदाए उ । जे यावि वत्थपायादी चिंधेहिं संवयंति उ ॥ ३ ॥
आ भवंती उ ते तस्सा विवरीयायरियस्स उ ॥

यान्यपि च वस्त्रपात्रादि चिह्नैः संवदन्ति यथाऽमुकस्य पार्श्वेऽमुकमीदृशाकृतिवस्त्रं पात्रं वा यत्तन्मदीयमित्यादि तान्यपि गाथायां पुस्त्वं प्राकृतत्वात् । तस्यां भवन्ति विपरीतानि तु चिह्नविसंवादभाञ्जि आचार्यस्य ॥

आभवंताहिगारे उ वट्टंते तप्पसंगया । आभवंता इमे अण्णे सुहसीलादि आहिया ॥ ४३७ ॥

आभवदधिकारे वर्तमाने तत्प्रसङ्गादाभवदधिकारप्रसङ्गादिमे वक्ष्यमाणा इमे आभवन्तः सुखशीलादयः सुखशीलादिप्रयुक्ता आख्याताः तानेव द्वारगाथया संगृह्णन् आह—

सहसीलणुकंपायट्ठिए य संबंधि खमगगेलस्स । सच्चित्ते स सिहाओ पकट्ठए धारए दिसा उ ॥ ४३८ ॥

सुखशीलेन भावप्रधानोऽयं निर्देशः सुखशीलतयाऽनुकम्पया आत्मास्थितस्य सम्बन्धिनः स्वज्ञातेः क्षपकस्य ग्लानस्य वा ये प्रेषिता य श्च सचित्तेष्वपि अशिखाकोऽन्यस्य प्रेषित एतान् स्वकुलसम्बन्धी स्वगणसम्बन्धी वा प्रकर्षयति आकर्षयतीत्यर्थः । धारयति च दिशा वात्मीये इत्येषद्वारगाथासंक्षेपार्थः । साम्प्रतमेनामेव विवरीषुः प्रथमतः सुखशीलद्वारमाह—

१८ सुहसीलयाए पेसेइ कोइ दुक्खं खु सारवेउं जे । देइ व आयट्ठीणं सुहसीलो दुठसीलोत्ति ॥ ४३९ ॥

दुःखं खलु साधून् सारयितुमिति मन्यमानः कोऽपि सुखशीलतया कमपि साधुमन्यस्य प्रेषयति यदि वा कोऽपि सुखशील आत्मार्थिनामात्माश्रितानां दुःखशीलोऽयमिति प्रकाश्य ददाति ।

तणुगंपि नेच्छए दुक्खं सुहमाकंखए सया । सुहसीलतए वावी, सायागारवनिस्सितो ॥ ४४० ॥

२२ तनुकमपि स्तोकमपि नेच्छत्यात्मनो दुःखं किन्तु केवलं सदा सुखमाकांक्षति । ततः सुखशीलतया सातगौरवनिश्रितः स्वयं साधूनादत्ते सर्वे ते भवन्त्याचार्यस्याभाव्याः । गतं सुखशीलद्वारं । साम्प्रतमनुकम्पाद्वारमाह—

एमेव असहायस्स देति कोइ अणुकंपयाए उ । नेच्छइ परमायट्ठी गच्छा निग्गंतु कामो वा ॥ ४४१ ॥

पेसये सो उ अन्नत्थ सिणेहा नयगस्स वा। खमए वेज्जवच्चठा देज्ज वा तहि कोइ तु ॥ ४४२॥

२६ एवमेव स्वसवन्धित्वादिकारणव्यतिरेकेणापि असहायस्य सतः कोऽप्यनुकम्पया ददाति । गतमनुकंपाद्वारमात्मस्थितद्वारमाह—आत्मार्थी आत्माश्रितार्थी सन् परं नेच्छति ततः कमप्यात्मास्थितं करोति यदि वा गच्छान्निर्गन्तुकामः स आत्मार्थी अन्यत्र यस्य यास्यति तत्र कमपि साधुं प्रेषयति । गतमात्मास्थितद्वारं । सम्वन्धिद्वारमाह—स्नेहात् ज्ञातस्य वा स्वजनस्य सोऽन्यत्र प्रेषयति । क्षपकद्वारमाह—

तत्रान्यत्र वा प्रसिद्धक्षपके कोऽपि वैयावृत्त्यार्थं कमपि साधुं दद्यात्सम्प्रति ग्लानद्वारं सशिखाकद्वारं चाह—

**पेसेति गिलणस्स वा अहव गिलाणे सयं आचायंतो । पेसंतस्स असिहो ससिहो पुण पेसितो जस्स ॥४४३॥**

ग्लानस्य वा कोऽपि वैयावृत्त्यकरणाय प्रेषयति साधुं अथवा स्वयं ग्लानः सन् न शक्नुवत्कमपि शिष्यं करोति, सर्वेऽप्येते आचार्यस्याभाव्याः तथा यदि साशिखाकः परस्मै प्रेष्यते तर्हि स यस्य प्रेषितस्तस्यैवाभवति । अथाशिखाकः परस्मै प्रेरितस्तर्हि स प्रेषयितुरेवाभाव्यो न परस्य तथा चाह पेसंतस्स उ असिहो ससिहो पुण पेसितो जस्स । अत्र परः प्रश्नमाह—

**चोदेती कप्पंमी पुव्वं भणियं ति पेसितो जस्स । ससिहो वा असिहो वा असंथरे सो उ तस्सेव ॥ ४४४ ॥**

चोदयति प्रश्नं करोति ननु पूर्वकल्पे भणितं यस्य साशिखो वाऽशिखो वा प्रेषितः स तस्यैवासंस्तरणे सति भवति । ततः कथमत्राशिखाकः प्रेषयितुराभाव्योऽभिहित इति अत्रोत्तरमाह—

**भण्णइ पुव्वुत्तातो पच्छा वुत्तो विही भवे बलवं । कामं कप्पे भिहियं इह असिहं दाउ न लभति उ ॥४४५॥**

भण्यते अत्रोत्तरं दीयते पूर्वोक्ताद्विधिः पश्चादुक्तो विधिर्बलवान् भवति ततो यद्यपि कामं कल्पेऽभिहितं तथापीहाशिखं दातुं न लभते । अन्यच्च—

**संविग्गाण विही एसो असंविग्गे न दिज्जए । कुलिव्वो वा गणिव्वो वा दिण्णं पि तं तु कड्ढए ॥ ४४६ ॥**

एष दानविधिः संविग्नानां भणितो असंविग्ने असंविग्नस्य पुनः सर्वथा न दीयते न दातव्यः, । अथ कथमपि केनापि दत्तो भवति तर्हि तं दत्तमपि कुलसत्को वा गणसत्को वा कर्षयति ॥

खित्तातीआउरे भीते अदिसत्थीव जं दए। सचित्तादि कुलादीओ भुज्जो तं परिकड्ढए ॥ ४४७ ॥

किमपि मे राजप्रद्विष्टादिकं करिष्यति

क्षिप्तादिरादिशब्दात् दृप्तयक्षाविष्टादि परिग्रहः। आतुरो मरणचिह्नान्युपलभ्यात्याकुलो भीतः

न विघ्न इति भयाकुलोऽअदिसत्थी वाधिकृतां दिशं मोक्षकामो यद्ददाति परस्मै सचित्तादिकं तद्भूयः कुलादिरादिशब्दात् गणपरिग्रहः परि-

१८ कर्षयति तदेतत् प्रतीच्छकानधिकृत्योक्तमधुना शिष्यानधिकृत्याह—

नालबद्धे अनाले वा सीसंमि उ नत्थि मग्गणा। दोक्खरक्खरदिट्ठंता, सव्वं आयरियस्स उ ॥ ४४८ ॥

शिष्ये स्वदीक्षितेऽयं नालबद्धोऽयमनालबद्ध इति विषयविभागेन नास्तिमार्गणा किन्तु यत्ते शिष्या लभन्ते सचित्तादि तत्सर्वमाचा-

र्यस्याभवति, केन दृष्टान्तेनेत्याह–द्व्यक्षरदृष्टान्तेन तद्व्यक्षरो दासः खरो गर्दभस्तदृष्टान्तात् दासेन मे खरः क्रीतो दासोऽपि मे इत्येवं लक्षणात् ॥

२२ सूत्रम्–दो साहम्मिया एगतो विहरंति, तं जहा–सेहो रायणिए य तत्थ सेहतराए पलिच्छन्ने, रायणीए अपलिच्छन्ने सेहतराएणं राइणीए उवसंपज्जियव्वे, भिक्खोववायं च दलयइ कप्पागं ॥ २४ ॥ अस्य सूत्रस्य

सम्बन्धद्वारमाह—

चारियसुत्तेभिक्खू थेरो वि य अहिकतो इह तेसिं। दोण्ह वि विहरंताणं का मेरा लेसतो जोगो ॥ ४४९ ॥

२६ चरिकासूत्रे प्राक् भिक्षुः स्थविरश्चाधिकृतस्तत इहास्मिन् सूत्रे तयोर्द्वयोर्विहरतोः का मर्यादा व्यवस्थितिरित्याभिधीयते, एष लेशतः

पूर्वसूत्रेण सहास्य सूत्रस्य योगः सम्बन्धः पुनः प्रकारान्तरेण सम्बन्धमाह—

**साहम्मियतणं वा अणुयत्तित्ति होति मे विसाहम्मी । उवसंपयावहगया इहइं पुवसंपया तेसिं ॥ ४५० ॥**

वहवे साहम्मिया इत्यतः सूत्रात्साधर्मिकत्वमनुवर्तते वाशब्दः सम्बन्धस्य प्रकारान्तरतोपदर्शनार्थः इमावपि चाधिकृतसूत्रोपात्तौ शैक्षरत्नाधिकौ साधर्मिकौ ततः साधर्मिकप्रस्तावादधिकृतसूत्रोपनिपातः तृतीयप्रकारः । भिक्खूगणातो अवकम्म अण्णंगणं उवसंपज्जित्ताणं विहरेज्जा इत्यत उपसम्पत्प्रकृता वाशब्दः प्रागुवदिहाप्यस्मिन् सूत्रे तयोः शैक्षरत्नाधिकयोरुपसम्पदभिधीयते इत्याधिकृतसूत्रारंभ इत्येष सूत्रसम्धन्धः । अस्य व्याख्या द्वौ साधर्मिकौ समानगुरुकुलावेकतः सह तौ विहरतस्तद्यथा–शैक्षो रात्निकश्च तत्र यः शैक्षः सपरिच्छन्नः परिवारोपेतः, रात्निको रत्नाधिकोऽपरिच्छन्नः परिवाररहित इत्यर्थः तत्र शैक्षतरकेण रत्नाधिक उपसम्पत्तव्यस्तथा शैक्षतरको रत्नाधिकस्य भिक्षामुपपातं च विनयादिकं च कल्पाकं कल्पनीयं ददाति एष सूत्रसंक्षेपार्थः । अधुना भाष्यविस्तरः

**सेहम्मि पलिच्छन्ने उवसंपय दोण्हवी पलिच्छातो । वोवत्थे मासलहुओ कारण असई सभावो वा ॥४५१॥**

तौ द्वावपि जनौ सहाध्यायिनौ सब्रह्मचारिणौ । तत्र यः शैक्षतरकः सपरिच्छन्नो द्रव्यपरिच्छदोपेतः परिवारसहित इत्यर्थः । भावपरिच्छेदेन पुनर्द्वयोरपि परिच्छेदोऽस्ति । तत्र शैक्षे द्रव्यतः परिच्छन्ने सति तेन रत्नाधिकस्योपसम्पत् दातव्या । ततो जघन्यतः संघाटो रत्नाधिकस्स देय उत्कर्षतो वहवोऽपि दातव्याः तथा शैक्षकेण रत्नाधिकस्य पुरत आलोचनीयं रत्नाधिकेन शैक्षकस्य पुरतोऽन्यथा वोवन्थे विपर्यासे उभयोरपि प्रायश्चित्तं मासलघु. । तथाकारण ग्लानादिलक्षणे व्यापृततया द्वावेव तौ जनावित्यसति सहायस्याभावे न दद्यादपि सहायं, स्वभावो वा तस्यात्मीयकरणादिलक्षणस्ततो न ददाति सहायं, किन्त्वौचित्येन तस्य कृत्यं कारयति, । एप द्वारगाथा संक्षेपार्थः साम्प्रतमेनामेव विवरीषुः प्रथमतः पूर्वार्धं विवृणोति,

**सज्झंतिवासिणो दोवि भावेण नियमसो छण्णो । रायणिए उवसंपय सेहतरगेण कायव्वो ॥ ४५२ ॥**

तौ द्वावपि सहाध्यायिनावेकस्य गुरोररन्तेवासिनौ च द्वावपि भावेन ज्ञानादिना नियमसो नियमेनच्छन्नौ ज्ञानादिरूपभावपरिवारोपेतावित्यर्थः । द्रव्यपरिच्छेदेन पुनः शैक्षतरक एवोपेतस्तत्र शैक्षतरकेण रात्निको रत्नाधिकस्योपसम्पत्कर्त्तव्या । वोवत्थे मासलहुतो इत्यस्य व्याख्यानार्थमाह—

**आलोइयंमि सेहेण तस्स वियडे पच्चराइणितो । इति अकारणंमि लहुगो अवरोपरगव्वतो लहुगा ॥४५३॥**

प्रथमतः शैक्षतरकेण रत्नाधिकस्य पुरत आलोचनीयं, तेनालोचितः पश्चाद्रत्नाधिकस्तस्य शैक्षतरस्य पुरतो विकटयत्यालोचयति, एतच्चेतौ न कुरुतस्तत इति एतस्याकरणे द्वयोरपि प्रत्येकं लघुको मासः प्रायश्चितं, अवरोपरगव्वतो लहुगा इति यदि शैक्षतरको द्रव्यपरिच्छेदेनाहं परिच्छन्न इति गर्वतो रत्नाधिकस्य पुरतो नालोचयति तदा तस्यापि प्रायश्चित्तं चत्वारो लघुकाः एतदेवोपदेशद्वारेण स्पष्टयति

**एगस्स उ परीवारो बीइए रायणियत्तवादो य । इइ गव्वो न कायव्वो दायव्वो चेव संघाडो ॥ ४५४ ॥**

एकस्य परिवारोऽस्ति द्वितीये रात्निकत्ववादः, रत्नाधिकोऽयमिति प्रवाद इति एवं रूपो गर्वो द्वाभ्यामपि न कर्तव्यः । किन्तु परस्परमालोचयितव्यमन्यथा चतुर्लघुकप्रायश्चित्तापत्तेर्दातव्यश्च शैक्षतरकेण जघन्यतोऽपि रत्नाधिकस्य सङ्घाटः । सम्प्रति भिक्खोवायं च दलाति कप्पागमित्यस्यार्थमाह—

**पेहाभिक्ख किती उ करेंति सो आविते पवाएति । न पहुव्वंत दोण्हवि गीलाणमादीसु च न देज्जा ॥४५५॥**

शैक्षतरस्य शिष्या रत्नाधिकस्य सम्बन्धिनो वस्त्रादेः प्रेक्षां प्रतिलेखनां कुर्वन्ति, । तथा तद्योग्यांभिक्षामानयन्ति । कृतिकर्मविनयो

विश्रामणा च तत् कुर्वन्ति, किमुक्तं भवति यदाज्ञापयति तत्कुर्वन्ति वाचनादिपरिश्रान्तस्य च विश्रमणमिति स चापि रत्नाधिकस्तान् प्रवाचयति सूत्रं पाठयत्यर्थं च श्रावयतीत्यर्थः । कारणे असती इत्यस्य व्याख्यानमाह—न पहुप्पंते इत्यादि ते शैक्षतरशिष्या ग्लानादिषु प्रयोजनेषु व्यापृतास्ततो न प्रभवन्ति प्रपारयन्ति साधव इति सहायं न दद्यात् । यदि वा द्वावेव तौ जनौ. ततः किं दीयतामिति न दद्यात् ।

अधुना सभावो वा इत्यस्य व्याख्यानमाह—

अत्तीकरेज्जा खलु जोवि दिण्णे, एसोवि मज्झंति महंतमाणी ।
न तस्स ते देइ बहिं तु नेउं तत्थेव किच्चं पकरिंति जं से ॥ ४५६ ॥

यो वितीर्णान् साधूनात्मीकुर्यात्, यश्चैषोऽपि शिक्षाधिपतिः शैक्षतरको ममेति महामानी, तस्य तान् साधून् वहिस्तस्मात् स्थानादन्यत्र विहारक्रमेण नेतुं न ददाति, । किन्तु यत्से तस्य कृत्यं करणीयं तत्रैव स्थितस्य सतः कुर्वन्ति अथवा—

वारएण से देइ न य दावेइ वायणं । तहवि भेदमिछंत अविकारी उ कारए ॥ ४५७ ॥

वारेण वारेण तस्य शुश्रूणकमेकैकं साधुं नियुङ्क्ते न च तस्मात्साधूनां वाचनां दापयति, मा स गणभेदं कार्षीरिति हेतोः । अथैवमपि दुस्वभावतया गणभेदं करोति तत आह—तथापि एवमपि क्रियमाणे गणभेदं कर्तुमिच्छति योऽविकारी दुर्भेदः साधु स्तेन तस्य कृत्यं कारयति,—

सूत्रम्—दोसाहम्मिया एगयओ विहरंति तंजहा सेहे य राइणीए य । तत्थराइणीए परिच्छन्ने, सेहतराए अपलिच्छन्ने इच्छा रायणीए सेहतरागंउवसं पज्जेज्जा, इच्छा नो उवसंपज्जेज्जा, इच्छा भिक्खोववायं दलयइ कप्पागं,

व्य. सू. २५ ॥ ८५ ॥ इच्छा नो दलयइ कप्पागं ॥ सूत्र २५ ॥

द्वौ साधर्मिकावेकतःसंहतौ विहरतस्तद्यथा शैक्षो रत्नाधिकश्च तत्र रात्निकः परिच्छन्नः परिवारोपेत इत्यर्थः । शैक्षतरकोऽप-रिच्छन्नः परिवाररहितस्तत्र रात्निके रत्नाधिकस्येच्छा यदि प्रतिभासते शैक्षतरकमुपसम्पद्यते । अथ नेच्छा न प्रतिभासते तर्हि नोपसम्पद्यते

१८ भिक्षामुपपातं च कल्पं यदीच्छा तर्हि ददाति । अथादातुमिच्छा तर्हि न ददाति । एष सूत्रसंक्षेपार्थः । अधुना भाष्यविस्तरः

रायणिय परिच्छन्ने उवसंप पलिच्छओ य इच्छाए । सुत्तत्थ कारणे पुण पलिच्छयं देंति आयरिया ॥ ४५८ ॥

रात्निके रत्नाधिके द्रव्यतः परिच्छन्ने परिवारोपेते सति तेन शैक्षतरकस्य उपसम्पत् परिच्छदश्च इच्छया दातव्यः, । इयमत्र भावना—स यदि शैक्षतरको वमरत्नाधिकस्तुल्यश्रुतो गुरुरत्नाधिकेन सह ततः स रत्नाधिकश्चिन्तयति । मा नूनमेतस्य भिक्षाहिण्डनव्याक्षे-

२२ पेण च सूत्रार्थौ नश्येयुस्ततः संघाटं ददाति,। अथवा मा एष समानगुरुकुलवासी सहाध्यायी द्रव्ये परिच्छदेनापरिच्छदो भूयात्सहाध्यायान्ते वासिस्नेहतः संघाटं ददात्यालोचनां प्रयच्छति । अल्पश्रुतस्य तु परिच्छदमुपसम्पदं वा ददातीति । अथ स शैक्षतरको रत्नाधिकाद्बहुश्रुतस्तदा नियमत उपसम्पत्तव्यः, परिच्छदश्च तस्य दातव्यस्तथा चाह—सूत्रार्थकारणात्सूत्रार्थं गृहीतुकामाः पुनराचार्या उपसम्पद्यन्ते परिच्छदं च ददाति । एतदेव स्पष्टयति—

२६ सुत्तत्थं जइ गेण्हइ तो से देइ परिच्छदं । गहिएवि देइ संघाडे मा से नासेइ तं सुयं ॥ ४५९ ॥

यदि स रत्नाधिकस्ततः सूत्रार्थं गृह्णाति ततः से तस्य ददाति परिच्छदं परिवारं गृहीतेऽपि सूत्रार्थे ददाति सङ्घाटं कस्मादित्याह मा से तस्य भिक्षाटनव्याक्षेपतः प्रतिलेखनाव्याक्षेपतश्च तत् श्रुतं नश्येदिति हेतोः अबहुश्रुतादौ तु न ददाति इत्येतद्भावयति—

उ. ४. भा. ४५८–४६१ ॥ ८६ ॥

अवहुस्सुते न देंती निरुवहते तरुणए य संघाडं । घेतूण जाव वच्चइ तत्थ य गोणीए दिठंतो ॥ ४६० ॥

अवहुश्रुतोऽल्पश्रुतो निरुपहतपश्चेन्द्रियस्तरुणकश्च तस्मिन् सत्स्वपि साधुषु संघाटं न ददाति सहायान्न ददातीति भावः यो वा गीतार्थोपिसन् प्रदत्तान् सहायान्विपरिणम्य गृहीत्वा व्रजति, तस्यापि सत्स्वपि साधुषु सहायान्न ददाति तथा च तत्र दुष्टशीलतया गवा दृष्टान्तस्तमेव भावयति—

साडगबद्धा गोणी जह तं घेत्तुं पलाति दुस्सीलो । इय विप्परिणामेंते न देज्ज संतेवि हु सहाए ॥४६१॥

यथा कस्यापि गौः पलायिता ततः कथमपि लब्ध्वा सती तेन शाटकेन बद्धा यथा सा शाटकबद्धा दुःशीला गौस्तं शाटकं गृहीत्वा पलायते इति । एवममुना प्रकारेण यो विपरिणामयति सहायान् तस्मिन् विपरिणामयति सतोऽपि सहायान्न दद्यात् ॥

सूत्रम्—दोभिक्खुणो एगयओ विहरन्ति नोण्हं कप्पइ अन्नमन्नस्स उवसंपज्जिताणं विहरित्तए, कप्पइण्हं अहाराइणियाए अन्नमन्नं उवसंपज्जिताणं विहरत्तिए ॥ २६ ॥ दोगणावच्छेइया....( जहा २६ )....विहरित्तए ॥ २७ ॥ दोआयरिउवज्झाया....(जहा २६ ) विहरित्तए ॥ २८ ॥ बहवे भिक्खुणो....( जहा २६)....विहरित्तए ॥ २९ ॥ बहवेगणावच्छेइया ( जहा २६ ) विहरित्तए ॥ ३० ॥ बहवेआयरियउवज्झाया ( जहा २६ ) विहरित्तए ॥ ३१ ॥ बहवे भिक्खुणो बहवे गणावच्छेइया बहवे आयरिय उवज्झाया (जहा २६) विहरित्तए ॥३२॥

"दो भिक्खुणो एगतो विहरंति" इत्यादि सूत्र सप्तकं । अस्य सम्बन्धमाह—

व्य. सू. संखहिगारा तुल्लाधिगारिया एस लेसतो जोगो। आयरियस्स व सिस्सो भिक्खु अभिक्खु अह तु भिक्खू ४६२

२६-३२ अनन्तरसूत्रे दोसाहम्मिया इत्यादिलक्षणे द्विकलक्षणा संख्याधिकृता। अत्रापि सैव दो भिक्खुणो इत्यादि वचनात्ततः संख्या-

॥ ८६ ॥ धिकारात्तुल्याधिकारिता पूर्वसूत्रे रत्नाधिकपदेनाचार्य उपात्त आचार्यस्य च शिष्यो द्विधा भिक्षुरभिक्षुश्च। तत्र भिक्षुः प्रतीतोऽभिक्षुर्गणाव-च्छेदक उपाध्याय आचार्यो वा तत् आचार्यसूत्रात्प्रागुक्तादथानन्तरं भिक्षुसूत्रमुक्तं, शेषसूत्रसम्बन्धप्रतिपादनार्थमाह—

एमेव सेसएसु वि गुणपरिवड्ढीए ठाणलंभो व। दुप्पभिइ खलु संखा बहुआ पिंडो उ तेण परं ॥४६३॥

१८ एवमेव पूर्वोक्तप्रकारेणैव शेषयोरपि गणावच्छेदकाचार्यसूत्रयोः सम्बन्धः। तथाह्याचार्यस्य शिष्यो भिक्षुरभिक्षुश्च तत्र भिक्षुसूत्र-मुक्तम्। तदनन्तरमभिक्षोर्गणावच्छेदकस्याचार्यस्य च सूत्रे अथ गुणपरिवृद्ध्या स्थानलाभो भवति। तथा हि भिक्षुर्गुणाधिकत्वेन गणावच्छे-दकस्थानं लभते। गणावच्छेदको गुणाधिकतया आचार्योपाध्यायस्थानमतो भिक्षुसूत्रानन्तरं क्रमेण गणावच्छेदकाचार्योपाध्यायसूत्रे, तथा द्विप्रभृतिका खलु संख्या बहुका भवति,। ततो द्विसंख्या सूत्रत्रयानन्तरं बहुसंख्यासूत्रत्रतःयंबहूनां च परस्परमुपसम्पन्नानां पिण्डो भवति

२२ तेन बहुसंख्यासूत्रत्रयात्परं पिण्डः पिण्डसूत्रमुक्तमिति, एवमनेन सम्बन्धजातेनायातस्यास्य सूत्रसप्तकस्य व्याख्या—; द्वौ भिक्षू एकतः संहतौ विहरतो णोण्हमिति वाक्यालङ्कारे कल्पते अन्योन्यमुपसम्पद्य विहर्तुं, कल्पते ण्हमिति पूर्ववत्। यथा रत्नाधिकतयाऽन्योन्यमुपसम्पद्य विहर्तुमेवं गणावच्छेदकसूत्रमाचार्योपाध्यायसूत्रं च भावनीयमेवं बहुसंख्यासूत्रत्रयं पिण्डसूत्रं चेति सूत्रसंक्षेपार्थः। सम्प्रत्याद्यभिक्षुसूत्र व्याख्यानार्थं माह—

२६ संभोइयाण दोण्हं, खेत्तादिपेहकारण गयाणं। पंथे समागयाणं भिक्खूण इमा भवे मेरा ॥ ४६४ ॥

द्वावाचार्यावन्यास्मन्नन्यस्मिन् क्षेत्रे स्थितौ, तौ च परस्परं सांभोगिकौ तयोः सांभोगिकयोः द्वयोराचार्ययो भिक्षवस्ताभ्यां प्रेषिताः क्षेत्रादिप्रेक्षाकारणगताः क्षेत्रप्रत्युपेक्षणार्थमादिशब्दादुपधिमार्गणार्थं गतास्ते च तथा गच्छन्तः पथि समागताः परस्परं मिलितास्तेषां चैकेन पथा गन्तव्यमतस्तेषां क्षेत्रादिप्रेक्षाकारणगतानां पथि समागतानां भिक्षूणां या मर्यादा सामाचारी सा इयं वक्ष्यमाणा भवति तामेवाह—

**भिक्खुस्स मासियं खलु पलिच्छणाणं च सेसगाणं तु । चउलहुग अपलिच्छन्ने तम्हा उवसंपया तेसिं ॥४६५॥**

यौ द्वौ भिक्षुस्पर्धकपती तयोः शैक्षतरकेण रत्नाधिकस्य पुरतः आलोचयितव्यम्। तेनालोचिते पश्चात् रत्नाधिकेनाशैक्षतरकस्य पुरत एमवकरणे भिक्षोः शैक्षस्य रत्नाधिकस्य प्रायश्चितं खलु मासिकं मासलघु, पलिच्छन्नाणं चेत्यादि। एतद्बहुसंख्याविशिष्टस्य भिक्षुसूत्रस्य व्याख्यानं, परिच्छन्नानां जघन्यतोऽप्यात्मतृतीयाणां शेषकाणां चात्मद्वितीयानां यथोक्तविध्यकरणे प्रायश्चित्तं मासलघु,। तत्र हि यद्येकोऽप-रिच्छन्नस्तर्हि तेनान्य आत्मद्वितीय आत्मतृतीयो वा उपसम्पत्तव्यो नो चेदुपसम्पद्यते तर्हि तस्मिन्नपरिच्छन्नेऽनुपसंपद्यमाने प्रायश्चित्तं च-त्वारो-लघुकास्तं चोपसम्पद्यमानं यो नोपसम्पदा प्रतीच्छति, तस्य मासलघु, यत एवं तस्मात्परस्परमुपसम्पत्तेषां भवति कर्तव्या, । एनामेव निर्युक्तिगाथां भाष्यकृत् व्याचिख्यासुः प्रथमतो भिक्खुस्स मासियं खल्वित्येतद्व्याख्यानयति—

**दो भिक्खू अगीयत्था, सीया एक्को व होज्ज उ अगीतो। राइणिय पलिच्छन्ने पुव्वं इयरेसु लहुलहुगा ॥४६६॥**

द्वौ भिक्षू अगीतार्थौ यदि वा द्वावपि गीतौ गीतार्थौ तयोः परस्परस्यालोचनमन्यथा प्रायश्चित्तं मासलघु,। अथवा एको गीतार्थ एकश्च भवत्यगीतार्थः। तत्र रत्नाधिकेन परिच्छन्ने भावपरिच्छेदोपेते गीतार्थे इत्यर्थः। पूर्वमालोचयितव्यं पश्चादितरेष्वगीतार्थेषु रत्नाधिकेन एवं चेत्ते न कुर्वते तर्हि रत्नाधिकं प्रायश्चित्तं मासलघु,। इतरेषां चत्वारो लघुकाः। एनामेव गाथां विवरीषुः प्रथमतो दो भिक्खू अगीयत्था सीया इत्येतद्विवृणोति।

दोसु अ सुं अहवा गीतेसु सेहतरो पुव्विं । जइ नालोयइ लहुओ । न विगडे इयरोवि जइ पच्छा॥४६७॥

द्वयोर्भिक्ष्वोरगीतार्थयोर्मध्ये यदि शैक्षतरः पूर्वं रत्नाधिकस्य पुरतो नालोचयति तदा तस्य प्रायश्चित्तं लघुको मासः । इतरोऽपि रत्ना-
१८ धिकोऽपि यदि पश्चात्तस्य शैक्षतरस्य पुरतो न विकटयति, तदा तस्यापि प्रायश्चित्तं मासलघु, । अथ यदि द्वावप्यगीतार्थौ तदा परस्परस्य विहारालोचनैव केवला, नापराधलोचनापि, अथ द्वावपिगीतार्थौ तदा परस्परविहारलोचना अपराधलोचना च अथैको गीतार्थोऽपरश्चागीतार्थ स्तत्रालोचनाविधिमाह—

रायणिए गीयत्थे, राइणिए चेव वियडणा पुव्विं । देइ विहारवियडणं, पच्छा राइणितो सेहे ॥ ४६८ ॥

यदि रत्नाधिको गीतार्थ इतरोऽगीतार्थस्तर्हि गीतार्थे रत्नाधिके सति रत्नाधिके एव पूर्वं शैक्षतरेण विहारविकटना अपराधविकटना
२२ च दातव्या, । ततः पश्चात् रत्नाधिकः शैक्षे शैक्षतरकस्य विहारविकटनां ददाति । अथ शैक्षतरको गीतार्थो रत्नाधिकस्त्वगीतार्थस्तत्राह—

सेहतरगे वि पुव्वं गीयत्थे दिज्जए पगासणा । पच्छा गीयत्थो वि हु, ददाति आलोयणमगीतो ॥ ४६९ ॥

यदि गीतार्थः शैक्षतरकस्तर्हि तस्मिन् गीतार्थे शैक्षतरकेऽपि पूर्वं रत्नाधिकेन प्रकाशना विहारविकटना अपराधविकटना चेत्यर्थः
२६ दीयते, पश्चात् गीतार्थोऽपि सन् सशैक्षतरको हु निश्चितमगीते रत्नाधिके आलोचनां विहारलोचनां ददाति । न त्वपराधलोचनां । कस्मादित्याह—

अवराह विहारपगासणा उ दोण्णि भवंति गीयत्थे । अवराहपयं सुत्तुं, पगासणं होतु अगीयत्थे ॥ ४७०॥

अपराधप्रकाशना विहारप्रकाशना च एते द्वे अपि प्रकाशने भवतो गीतार्थे, गीतार्थे प्र...

शनं भवति विहारालोचनां भवति, । नापराधालोचनेति भावः, अगीतार्थतया तस्यापराधलोचनानर्हत्वात् । सम्प्रत्युपसंहारमाह—

**भिक्खुस्सेगस्स गयं पलिच्छन्नाणं इयाणि वोच्छामि। दव्वपलिच्छाएणं-जहण्णेण अप्पतइयाणं ॥४७१॥**

भिक्खुस्स मासियं खल्वित्यनेन पदेन यदेकस्य भिक्षो र्वक्तुमुपक्रान्तं तत् गतं परिसमाप्तमिदानीं द्रव्यपरिच्छदेन परिच्छन्नानां जघन्येनात्मतृतीयानां यद्वक्तव्यं तद्वक्ष्यामि । तदेवाह—

**तेसिं गीयत्थाण, अगीतामिस्साण एस चेव विही। एत्तो सेसाणंपि य वुच्छामि विहिं जहाकमसो ॥४७२॥**

तेषां परिच्छदेन परिच्छन्नानां जघन्यत आत्मतृतीयानां बहूनां सर्वेषां गीतार्थानामथवा अगीतार्थानां यदि वा मिश्राणां केषांचित् गीतार्थानां केषांचिदगीतार्थानामित्यर्थः । एष एवानन्तरोदित एकभिक्षुगत आचार्याणां आलोचनाविषयो विधिरवसातव्यो व्यतिरेके च प्रायश्चित्तमपि तथैव, । अंते ऊर्ध्वं शेषाणामपि विधिं यथाक्रमशो यथाक्रमेण वक्ष्यामि । तत्र शेषशब्दवाच्यानुपदर्शयति—

**सेसा तू भणंती अप्पबितिया उ जे तहिं केइ। गीयत्थमगीयत्थे मीसे य विही उ सो चेव ॥४७३॥**

शेषानाम ते भण्यन्ते—यत्र तेषां बहूनां भिक्षुणां मध्ये केचिदात्मद्वितीयास्तस्मिन् शेषे गीतार्थे अगीतार्थे मिश्रे च स एव पूर्वोक्तो विधिरालोचनाविषयस्तद्व्यतिरेके प्रायश्चित्तविधिश्चावसातव्यः । सम्प्रति चशब्दव्याख्यानमाह—

**संजोगा उ च सद्देण, अहिगया जह य एग दो चेव। एगो जइ नवि दोण्हिं, उवगच्छे चउ लहुतो से ॥४७४॥**

परिच्छन्नानां चेत्यत्र चशब्देन संयोगा अधिकृताः सूचिता इत्यर्थः । तानेवोपदर्शयति—यथा चेति भंगोपप्रदर्शने, एकत एको भिक्षुरपरतो द्वौ भिक्षू। तत्रैकेनात्मद्वितीय उपसम्पत्तव्यो, यदि पुनरेको न द्वावुपगच्छति न उपसम्पद्यते तदा से तस्य प्रायश्चित्तं चत्वारो लघुकाः॥

व्य. सू. २६–३२ ॥ ८८ ॥

**पच्छा इतरे एगं जइ नवि उवगच्छ मासियं लहुयं । जत्थवि एगो तिण्णी, न उवगमे तत्थवी लहुगा ॥४७५॥**

एकस्मिन्नुपसपन्ने पश्चादितरावप्युपसम्पद्येते, यदि पुनरेकं तावितरौ पश्चान्नोपगच्छेतां तदा तयोर्मासिकं प्रायश्चित्तं लघु यत्राऽपि भङ्गे एकत एको परत्र त्रयस्तत्र यदि परस्परमुक्तप्रकारेण नोपगमस्तदा प्रायश्चित्तं लघुकाः, । किमुक्तं भवति । यद्येकस्त्रीन्नोपगच्छति तदा
१८ तस्य प्रायश्चित्तं चत्वारो लघुकास्ते यदुपगच्छन्तं पश्चादितरे त्रयो नोपगच्छन्ति तर्हि तेषां प्रायश्चित्तं लघुको मासः ।

**एमेव अप्पबीतो अप्पतईयं तु जइ न उवगच्छे । इयरेसि मासलहुयं एवमगीए य गीए य ॥४७६॥**

एवमेव अनेनैवानन्तरोदितेन प्रकारेणात्मद्वितीय आत्मतृतीय यदि नोपगच्छति तदा तस्य प्रायश्चित्तं चतुर्लघु । इतरश्चेत्यभ्युपगच्छन्तं नोपगच्छेत्तदा तस्य मासिकं लघु इतरेषामेक आत्मतृतीयोऽपर आत्मचतुर्थ इत्येवमादीनां परस्परमनुपगमे प्रायश्चित्तं मासलघु, । एव-
२२ मुक्तप्रकारेणागीते अगीतार्थानां च द्रष्टव्यं मिश्रानधिकृत्याह—

**मीसाण एगो गीतो, होंति अगीया उ दोण्हि तिण्णिवि वा, एवं उवसंपज्जे ते उ अगीया इहर मासो ॥४७७॥**

मिश्राणां मध्ये एक एकाकी गीतो गीतार्थोऽपरे तु द्वौ त्रयौ वा भवन्त्यगीता अगीतार्थाः । तत्र तेऽगीता एकमुपसम्पद्येरन् । इतरथा चेन्नोपसम्पद्यन्ते तर्हि तेषां प्रायश्चित्तं लघुको मासः ।

२६ **सोवि य जइ नवि इयरे तस्स वि मासो उ एव सव्वत्थ । उवसंपया उ तेसिं, भणिया अण्णेण निस्साए ॥४७८॥**

सोऽपि चैको यदि तान् इतरानुपसम्पद्यमानान् नोपसम्पद्यते, तदा तस्यापि प्रायश्चित्तं मासो लघुरेवमेक आत्मद्वितीयो गीतार्थोऽपर आत्मतृतीय आत्मचतुर्थः इत्यादौ सर्वत्र भावनीयमेवमन्योन्यनिश्रया प्राग् द्वारगाथायां तेषामुपसम्पत् भणिता उद्दिष्टा ॥

…निस्सियाण अगीयाणवि उग्गहो तासं। गीयपरिग्गहियाण इच्छाए तासमा होइ ॥४७९॥

४७५-४८१ ॥८९॥ अन्योन्यनिश्रितानां तेषामगीतानामपि गीतपरिगृहीतानामवग्रहो भवति । अवग्रहो नाम आभवनव्यवहारः । स च द्विधा—इच्छया सूत्रोक्तश्च । तत्रेच्छया तेषामयं वक्ष्यमाणो भवति । तमेवाह—

**इच्छिय पडिच्छियाएण। खेत्ते वसहीए दोण्हवी लाभो। अत्थंते न होइ उग्गहो, निक्कारण कारणे दोण्हं॥४८०॥**

इच्छाया अवग्रहो नाम इच्छित प्रतीच्छितेन इच्छा संजाताऽस्येति इच्छितं, प्रतीच्छा सञ्जातास्येति प्रतीच्छितं, । इच्छितं च तत् प्रतीच्छितं च इच्छितप्रतीच्छितं वाचा आभवनव्यवहारस्थापना यथा यत्पाथि तन्यते तदस्माकं यत् ग्रामे तत् युष्माकं यदि वा यत्सचित्तं तदस्माकं, यदचित्तं तत् युष्माकमथवा या स्त्री व्रतग्रहणार्थमुपतिष्ठति । सा युष्माकं पुरुषो अस्माकं, । यद्वा बालो युष्माकं वृद्धोऽस्माकमथ वा यः सार्थेन सह व्रजतां लाभः, सोऽस्माकमसार्थे युष्माकं, यदि वा यो यल्लभते तत्तस्यैव एवंभूतेनेच्छितप्रतीच्छितेन य आभवनव्यवहारः स इच्छयाऽवग्रह एष च प्रायः पथि गच्छतां भवति, । स्थानप्राप्तानां तु सूत्रोक्त आभवनव्यवहारस्ततस्तमुपदर्शयति—समकालं क्षेत्रे प्राप्तानामक्षेत्रे वा वसतिं प्राप्तानां द्वयानामपि लाभः साधारणः । अथ न क्षेत्रमक्षेत्रे वा वसतिं समकालं प्राप्ताः किन्तु विषमकालं तत आह—अच्छंते न होति इत्यादि यदि निष्कारणं स्थिता इति पश्चात् प्राप्तास्तदा नास्ति तेषामवग्रहः, किन्तु पूर्वप्राप्तानामेव । अथ कारणेन केनापि ग्लानप्रतिजागरणादिना स्थितास्ततः पश्चात्प्राप्तास्तर्हि भवति द्वयेषामपि साधारणोऽवग्रहः । एतदेव स्पष्टतरमुपदर्शयति—

**समयपत्ताणं तु साहारणं तु दोण्हंपि होंति तं खेत्तं। विसमं पत्ताणं पुण, इमा उ तहिं मग्गणा होइ ४८१**

समकमेककालं प्राप्तानां द्वयानामपि तत्क्षेत्रं भवति साधारणं विषमं विषमकालं प्राप्तानां पुनरियं तत्रक्षेत्रे मार्गणा भवति । तामेव कुर्वन्नाह—

**पडियरए व गिलाणं सयं गिलाणाउरे व मंदगती । अपत्तस्स वि एएहिं, उग्गहो दप्पतो नत्थि ॥ ४८२ ॥**

व्य. सू. प्रतिचरति वा प्रतिजागर्ति ग्लानं वा यदि वा स्वयं ग्लान आतुरो वा यदि वा स्वभावान्मन्दगतिरेतैः कारणैरप्राप्तस्यापि समकालं

२६–३२ पश्चात्प्राप्तस्यावग्रहो भवति । दर्पतो निष्कारणं स्थितानां पुनरवग्रहो नास्ति ।

॥ ८९ ॥ **एमेव गणावच्छे पलिछण्णाणं विसेसगाणं तु । पलिच्छन्ने ववहारो, दुविहो वायंतिउ नाम ॥ ४८३ ॥**

१८ यथा भिक्षोरेकस्य बहूनां परिच्छन्नानां शेषकाणां चोक्तमेव अनेनैव प्रकारेण एकस्मिन् गणावच्छेदे बहूनां परिच्छन्नानां जघन्यतो-

ऽप्यात्मतृतीयानां शेषाणां च कारणवशत आत्मद्वितीयानां तु शब्दादेकत एकोऽपरत आत्मद्वितीय इत्यादि संयोगगतानां च निरवशेषं व-

क्तव्यम् । तत्र परिच्छन्ने जातावेकवचनं परिच्छन्नानामुपलक्षणमेतत् । परस्परमुपसम्पन्नानां चाभवनव्यवहारो द्विधा भवति, सूत्रोक्तो

२२ वागन्तिकश्च वाचा अन्तपरिच्छेदो वागन्तस्तेन निर्वृत्तो वागन्तिकस्तत्र वागन्तिको नाम वक्ष्यमाणस्तमेवाह—

**पहगामे चित्तऽचित्तं, थीपुरिसं बालवुड्ढसत्थादी । इच्छाए वा देंती जो जं लब्भे भवे वितितो ॥ ४८४ ॥**

यत्पथि मार्गे लभ्यं तदस्माकं । यत् ग्रामे तत् युष्माकं, । यदि वा यत्सचित्तं तत् युष्माकमचित्तमस्माकमथवा स्त्री युष्माकं पुरुषो-

ऽस्माकम् । अथवा बालोऽस्माकं वृद्धो युष्माकं, । यदि वा सत्थादी इति सार्थे लभ्यं तत् युष्माकमसार्थे अस्माकमथवा इच्छया ददाति ।

२६ कथमित्याह—यो यल्लभते तत्तस्य भवति एष सूत्रोक्तादाभवनव्यवहारात् द्वितीयो वागन्तिक आभवनव्यवहारः क्षेत्रप्राप्तानामक्षेत्रे वा वसतिं

**समगीता गीतावा गीतत्थपरिग्गहाण सति कज्जे ॥ असमत्ताण वि खेत्तं, अपहुप्पच्छा समत्तो वि ॥४८५॥**

प्राप्तानां यः सूत्रोक्तआभवनव्यवहारः स भिक्षूणामिव प्रतिपत्तव्यः ।

स चाविशेषेणार्थौ यदि वा द्वावप्यगीतार्थौ अथवा गीतार्थपरिगृहीता गीतार्थनिश्रां प्रतिपन्नाः समकमेककालं प्राप्तास्तेषां साधा-
४. भा. रणं क्षेत्रमाभवति, सति विद्यमाने कार्ये ग्लानप्रतिजागरणादिलक्षणे ये स्थिता अगीतार्था असमाप्ताश्च प्राप्तानां साधारणं क्षेत्रं, ये पुनरगी-
४८२-४८७ तार्था अपि असमाप्ता अपि पूर्वप्राप्तागीतार्थासमाप्ताश्च निष्कारणं प्राक् स्थित्वा प्राप्ता स्तदा असमाप्तानामप्यगीतार्थानामपि च तत् क्षेत्रं
॥ ९० ॥ पूर्वं प्राप्तत्वान्नगीतार्थः समाप्तो पि च तस्य क्षेत्रस्य प्रभु र्निष्कारणं स्थित्वा पश्चात्प्राप्तत्वात् ।

**समपत्तकारणेणं खेत्ते वसहीए दोण्ण वी लाभो । रायणिए होत्ति उग्गहो गीयत्थसमंमि दोण्हंपि ॥ ४८६ ॥**

समं समकमेककालं कारणेन पश्चाद्वा क्षेत्रेऽक्षेत्रे वा वसतौ वा प्राप्तयोर्द्वयोरपि लाभः साधारणः, । अत्र पुनर्यदि विशेषविवक्षा क्रियते, तदा यो रत्नाधिकस्तस्मिन्नवग्रहो भवति । यद्यपि नाम द्वयोरपि साधारणो लाभस्तथापि यथा संघाटकेन भिक्षां हिण्डमानयोरत्ना-धिकस्य लाभो गण्यते, । एवमिहापि रत्नाधिकस्यावग्रहः । अथैको गीतार्थः अपरोऽगीतार्थस्तत्र यदि रत्नाधिकोऽगीतार्थोऽवमरत्नाधिको गीतार्थस्ततोऽवमरत्नाधिकस्यावग्रहः । अथ द्वावपि समं गीतार्थौ तत आह समे गीतार्थे परस्मिन् समकं च प्राप्ते द्वयोरपि साधारणोऽवग्रहः, । तदेवं द्विसंख्याकगणावच्छेदकसूत्रमिति भावितमेवं द्विसंख्याकाचार्योपाध्यायसूत्रमपि भावनीयमिदानीं बहुत्वसूत्राणि पिण्डसूत्रं चातिदेशेन आह—

**एमेव बहूणंपी पिंडे नवरोवग्गहस्स उ विभागो। किं कतिविहो कस्स कंमि व केवइयं वा भवे कालं ॥४८७॥**

एवमेव बहूनामपि भिक्षुप्रभृतीनां सूत्राणि भावनीयानि, । द्विकसूत्रापेक्षया बहुत्वसूत्राणामर्थतो नानात्वाभावात् । पिण्डे पिण्डक-सूत्रस्यापि स एवार्थो नवरमत्रावग्रहस्य विभागो वक्तव्यस्तमेवाह—किं कतिविधः तस्य वा कस्मिन् वा कियन्तं वा कालं भवत्यवग्रहः । तत्र किमित्याद्यद्वारव्याख्यानार्थमाह—

व्य. सू. २६-३२ ॥ ९० ॥

**किं उग्गहोत्ति भणिए, उग्गहो उ होत्ति चितादी । एक्केक्को पंचविहो देविंदादी मुणेयव्वो ॥ ४८८ ॥**

किमवग्रह इति भणिते पृष्टे सूरिराह—त्रिविधो भवत्यवग्रहश्चित्तादिः सचित्तोऽचित्तो मिश्रश्च । पुनरेकैकः कतिविध इति प्रश्नमुप जीव्याह एकैकः पंचविधः पंच देवेंद्रादि देवेंद्रावग्रहो राजावग्रहो मांडलिकावग्रहः शय्यातरावग्रहः साधर्मिकावग्रहश्च ॥ गतं कतिविधद्वार

१८ मिदानीं कस्य न भवतीति प्रतिपादयति—

**कस्स पुण उग्गहोत्ती परपासंडीण उग्गहो नत्थि । तिएही सन्ने संजाति अगीते गीतएक्के वा ॥४८९॥**

कस्य पुनरवग्रहो भवतीति शिष्यप्रश्नमाशंक्योच्यते, परपाषण्डिनामवग्रहो नास्ति, । ये च निण्हवा ये ऽवसन्ना याश्च संयत्यो गीतार्थैरपरिगृहीता येचागीतार्था गीतार्थानिश्रामनुपपन्नाश्च निष्कारणमेवैकाकी गीतार्थ एतेषां सर्वेषामप्यवग्रहो नास्ति, । एतदेव

२२ सुव्यक्तमाह—

**उसण्णाण बहूण व गीतमगीताण उग्गहो नत्थि । सच्छंदियगीयाणं असमत्त अणीसगीए वि ॥ ४९० ॥**

अवसन्नानां बहूनामपि गीतार्थानां चावग्रहो नास्ति । सच्छंदियगीयाणयत्ति ये गीतार्था अपि स्वच्छान्दिकाः स्वच्छन्दतयैव एकाकिनो विहरन्ति, तेषामपि नास्त्यवग्रहः, । तथा ये असमाप्ता असमाप्तकल्पाः यस्य च समुदायस्य न विद्यते गीतो गीतार्थ ईश स्तेषामपि

२६ नास्त्यवग्रहः ॥

**एवं ता सावेक्खे निरवेक्खाणंपि उग्गहो नत्थि । मुत्तूण अहालंदे तत्थ वि जे गच्छपडिबद्धा ॥४९१॥**

एवं तावत्सापेक्षे जातावेकवचनं । सापेक्षिणाग्रुक्तं सापेक्षानामस्थविरकल्पिकाः, निरपेक्षा जिनकल्पिकादयस्तेषामप्यवग्रहो नास्ति ।

उ. ४. भा. ४८८-४९४ ॥ ९१ ॥

किमविशेषेण सर्वेषां,नेत्याह,–मुक्त्वा यथालब्दान्। तत्रापि गच्छप्रतिबद्धान् तेषामवग्रहो भवति गच्छप्रतिबद्धत्वात्,अन्येषां तु सर्वेषामपि नास्ति॥

**आसन्नतरा जे तत्थ, संजया सो व जत्थ निच्छरइ। तहियं देंतुवदेसं, आयपरं ते न इच्छंति ॥ ४९२ ॥**

तेषां गच्छनिर्गतानां जिनकल्पिकादीनां यो व्रतग्रहणार्थमुपतिष्ठति तं ते न प्रव्राजयन्ति। तथा कल्पत्वात्। किन्तु ये तत्रासन्नतराः संयताः स्थितास्तत्रोपदेशं ददाति। यथा अमुकानां समीपे गत्वा प्रव्रजेति। अथवा जानन्ति श्रुतवलतो ये दूरे स्थितास्तत्र स एष निस्तरिष्यति। तदेतत् ज्ञात्वा यत्र स निस्तराति तत्रोपदेशं प्रयच्छन्ति परमार्थतः पुनस्ते आत्मपरमात्मगच्छपरगच्छविभागं नेच्छंति, स्थविरकल्पादुस्तीर्णत्वात्, ॥

**अगीय समण संजइ गीयत्थ परिग्गहाण खेत्तं तु। अपरिग्गहाण गुरुगा न लभति सीसे त्थ आयरिओ ॥४९३॥**

अगीतानामगीतार्थानां श्रमणानां संयतीनां च गीतार्थपरिग्रहाणां गीतार्थपरिगृहीतानां क्षेत्रमवग्रहो भवति,। इयमत्र भावना–येऽगीतार्था अपि साधवो गीतार्थपरिगृहीता विहरन्ति वा अपि संयत्यो गीतार्थपरिगृहीता वर्तन्ते, तेषामवग्रहो भवति,। ते च यदि साधवो यदि वा संयत्यो गीतार्थनिश्रामनुपपन्ना अगीतार्था विहरन्ति,। तदा तेषामपरिग्रहाणां गीतार्थपरिग्रहरहितानां विहरतां प्रायश्चित्तं चत्वारो गुरुका इत्येषां च संयतानां संयतीनां च गीतार्थाऽपरिगृहीतानां यः परिव्राजक आचार्यः सोऽत्र शिष्यान् स्वदीक्षितान् न लभते, परिगृहीततयैव तेषां दीक्षणात्।

**गीयत्थागते गुरुणा असती एगाणिएवि गीयत्थे। समोसरणे नत्थि उग्गहो, वसहीए उ मग्गण अक्खेते॥४९४॥**

ये ते स्वयमगीतार्था गीतार्थाः परिग्रहरहिता वर्तन्ते यद्यन्यस्मिन् गीतार्थे आगते तस्योपसम्पदं न प्रतिपद्यन्ते, तदा तेषां प्रायश्चित्तं

कारणवशतः कथमप्येकाकी जातस्तस्य गीतार्थस्याशठस्य परिवाररहितत्वेनैका
व्य. सू. चत्वारो गुरुकाः, । अथान्यो गीतार्थ उपसम्पदार्हो नायातः कारणवशतः कथमप्येकाकी जातस्तस्य ... यत्र यावन्ति दिनानि सङ्घस्य समवसरणं तत्र तावन्ति
२६-३२ किनोऽपि क्षेत्रमाभवति । गतं कस्येति द्वारमिदानीं कस्मिन्वेति द्वारमधिकृत्याह-यत्र यावन्ति दिनानि सङ्घस्य समवसरणं तत्र तावन्ति ... एतत्सर्वं समवसरणेनास्त्यवग्रह इत्यनेन सूचितमे-
॥ ९१ ॥ दिनान्यवग्रहो न भवति, । एवं जिनस्नानादिषु मिलितानां यावन्महिमा तावदवग्रहाभावः एतत्सर्वं समवसरणेनास्त्यवग्रह इत्यनेन सूचितमे- ... सा चैवमक्षेत्रे वसतिषु समकं स्थितानां साधारणं क्षेत्रं पश्चादागतानां
१८ वमक्षेत्रेऽवग्रहाभावः अक्षेत्रेऽपि वसतौ मार्गणाऽवग्रहस्य भवति । सा चैवमक्षेत्रे वसतिषु समकं स्थितानां साधारणं क्षेत्रं पश्चादागतानां
तु न भवति—

**सेसं सकोसजोयण पुव्वग्गहियं तु जेण तस्सेव । समगोग्गह साहारं पच्छागतो होइ अक्खेत्ती ॥ ४९५ ॥**

शेषं क्षेत्रमवग्रहो भवति । तच्च प्रमाणतः सक्रोशयोजनं पञ्चगव्यूतानीत्यर्थः । तत्रापि येन पूर्वमवगृहीतं तस्यैव तत्क्षेत्रमावहति, न
२ शेषस्य । अथ समकमेव तस्यावग्रहः कृतस्तत आह—साधारणं तदा तेषां क्षेत्रं यस्तु पश्चादागतः स भवत्यक्षेत्रो न तस्याभवति क्षेत्रमिति भावः ।

**अब्भागते कहं तो, उवसंपग्गो तहिं च ते सव्वे । संकंतो उवकहेंते, साहारणे तस्स जो भागो ॥ ४९६ ॥**

अन्यः कोऽप्याचार्यः कथयन् बहुश्रुतः पश्चादागत ते च पूर्वस्थिताः सर्वेऽपि तास्मिन्नागते कथयत्युपसम्पन्नाः तदा तस्मिन् कथयति
सोऽवग्रहः संक्रान्तस्तस्याभाव्यं तत् क्षेत्रं जातमिति भावः । अथ समकप्राप्ततया साधारणे क्षेत्रे स्थितानां मध्ये एकः कश्चनापि तं पश्चा-
२६ दागतमन्यमाचार्यं बहुश्रुतमुपसम्पन्नस्तदा य स्तस्य भागः स तत्र कथयति सङ्क्रान्तः ।

**निक्खित्तगणाणं वा तेसिं वि य होइ तंतु खेत्तं तु । खेत्त भया वा कोई, माइट्ठाणेण सुण एवं ॥ ४९७ ॥**

यदि क्षेत्रवतां शिष्य आगन्तुकमाचार्यमुपसम्पन्नो यदिवाचार्याः गणं शिष्ये गीतार्थे निक्षिप्य तमुपसम्पन्नास्तदा तेषामेव निक्षिप्तग-

उ. ४. भा. ४९५-५०० ॥ ९२ ॥

णानां वाशब्दादुपसम्पन्नस्तदेकशिष्याणां तत् क्षेत्रम् । किमुक्तं भवति ? यत्ततः क्षेत्रात्सचित्तादिकमुत्पद्यते तत्तेषामाभवति प्रवाचयन्नाग-
न्तुको न लभते । कोऽपि पुनर्मा ममागन्तुकस्य पार्श्वे शृण्वतः क्षेत्रं यायादिति क्षेत्रभयादेवं वक्ष्यमाणप्रकारेण मातृस्थानेन शृणोति तमव
प्रकारमाह—

**कुड्डेण चिलिमिलीए व अंतरितो सुणइ कोइ माणेण । अहवा चंकम्मणीयं करेंतो पुच्छागमो तत्थ ॥४९८॥**

४ कुड्येन यदि वा चिलिमिलिन्या जवनिकान्तरितः सन् कोऽपि मानेन ममेदं क्षेत्रमाभवति तन्मा हस्तादुत्तरत्विति क्षेत्रगर्वेण
शृणोति । अथ वा मानेनैव यथोक्तरूपेण चंक्रमणिकां कुर्वन् कोऽपि शृणोति, । तत्र यद्यपि स न शृणोति तथापि तत्र पृच्छागमो भवति,
पृच्छा कर्तव्या भवति, ततः पृच्छातोऽपि तस्य तस्य भवति क्षेत्रं, । अथ कतिभिः पृच्छाभिः कियन्तं कालं तस्याभवति क्षेत्रमत आह—

**पुच्छाहिं तीहिं दिवसं, सत्तहिं पुच्छाहिं मासियं हरेइ । अहवा विसेसमन्नो इमो उ तहियं अहिज्जंते ॥४९९॥**

८ तिसृभिः पृच्छाभिरेकं दिवसं यावत् तत्क्षेत्रं हरति, पृच्छादिवसे यत्तस्मिन् क्षेत्रे सचित्तादिकमुत्पद्यते तत् कथयन् लभते नेतर
इति भावः । सप्तभिः पृच्छाभिः पुनर्मासिकं पृच्छादिवसादारभ्य मासं यावत्सचित्तादिकमपहरति । तदेवं खेत्तभया वा कोइ इत्यादि
गाथा पश्चार्धं व्याख्यातमिदानीं निक्खित्तगणाणं चेत्यादि पूर्वार्धं व्याख्यानयति । अथवाऽयं वक्ष्यमाणोऽन्यविशेषस्तस्मिन्नधीयापनेऽ
ध्यापयतरि तमेवाह—

**जति निक्खिविऊणं गणं उवसंपाए हवावि सीसं तु । ता तेसिं चिय खेत्तं वाएतो लाभो खेत्तवहिं ॥५००॥**

१२ यदि गीतार्थे गणं निक्षिप्य तमागन्तुकमुपसम्पद्यते अथवा शिष्यं प्रेषयति तदा तेषामेव पूर्वस्थितानां तत्क्षेत्रमाभवति न तु वाचयतो
वाचयति लाभस्तस्मात्क्षेत्राद्बहिः ॥

**अह बेती वायंतो लाभेण नत्थि हं ति वच्चामो। इयरे हिं य सो रुद्धो मा वच्चसु अम्ह साहारं॥५०१॥**

अथ ब्रूते वाचयन् यथा नोऽस्माकमिह नास्ति लाभ इति व्रजाम एवमुक्ते इतरैः पूर्वस्थितैः स रुद्धो यथा मा व्रजत यूयं युष्माकमस्माकं च साधारणं क्षेत्रमिति। अथ साधारणेऽपि क्षेत्रे स्थिता न संस्तरंति तत्र विधिमाह—

**निग्गमणे चउभंगो निट्ठिय सुह कक्खयं जाति करेंति। निट्ठिय पहावितो वा रुद्धो पच्छा य वाघातो॥५०२॥**

अथ साधारणे क्षेत्रे स्थितास्ते न संस्तरंति तर्हि निर्गन्तव्यम्। तत्र च निर्गमने चतुर्भङ्गी वक्तव्या गाथायां पुंस्त्वनिर्देशः प्राकृतत्वात्। तथा यस्य श्रुतस्कन्धस्य निमित्तमुपसम्पन्नास्तत् निष्ठितं तस्मिन्निष्ठिते समाप्ते भूयः क्षेत्रं साधारणं जातम्। तत्र यदि भूयः सुखदुःखतां कुर्वन्ति सुखदुःखनिमित्तमुपसम्पदं प्रतिपद्यन्ते तथा निष्ठिते श्रुतस्कन्धे यः प्रधावितः पुनरपि प्रतीच्छिकैः पश्चात् रुद्धो व्याघातो वाऽशिवादिभिः कारणैरुपजातस्तत्र यदाभाव्यं तद्वक्तव्यमिति द्वारगाथासमासार्थः। साम्पतमेनामेव गाथां विवरीषुः प्रथमतो निर्गमनचतुर्भंगीमाह॥

**वत्थव्वनिंति नउ जे उ पाहुणा न इयरे वा। उभयं च नोभयं वा चउभयणा होति एवं तु॥५०३॥**

यस्य ग्रामप्रधानस्य नगरप्रधानस्य वा नियोगेन तिष्ठन्ति साधवः स चतुर्धा तद्यथा—आगन्तुकभद्रको नामैको न वास्तव्यभद्रकः १, वास्तव्यभद्रको नामैको नागन्तुकभद्रः २, आगन्तुकभद्रको वास्तव्यभद्रकश्च ३, नागन्तुकभद्रको नापि वास्तव्यभद्रकः ४। एतच्चतुर्भङ्गीवशादधिकृतापि चतुर्भङ्गी जाता। तद्यथा—प्रथमभङ्गवशात् वास्तव्या निर्गच्छन्ति न प्राघूर्णका, नियोक्तुरागन्तुकभद्रकत्वात्, द्वितीयभङ्गवशात् प्राघूर्णका निर्गच्छिन्ति न इतरे वा द्वितीयभङ्गे नियोक्तुर्वास्तव्यभद्रकत्वाच्चतुर्थभङ्गवशात् उभयं प्राघूर्णका वास्तव्याश्च निर्गच्छन्ति,

उभयानपि प्रतिनियोक्तुरभद्रत्वात्तृतीयभङ्गवशान्नोभयं वास्तव्या प्राघूर्णकाश्च निर्गच्छन्ति । उभयानपि प्रति तस्य भद्रकत्वात् । एवममुना प्रकारेण चतुर्भजना चतुर्भङ्गी भवति । तत्र प्रथमं भङ्गमधिकृत्य विशेषमाह—

**आगंतु भद्दगंमी पुव्वट्ठिया गंतु जइ पुणो एज्जा । तंमि अपुण्णे मासे, संकमति पुणोवि सिं खेत्तं ॥५०४॥**

आगन्तुकभद्रके नियोक्तरि ये पूर्वस्थितास्ते वक्ष्यमाणचतुर्भागार्धभागगमनयतनया गच्छन्ति, तथाप्यसंस्तरणे सर्वात्मना गच्छन्ति । ते गत्वा यद्यपूर्णे एव मास तस्मिन् क्षेत्रे पुनरागच्छेयुस्तदा । सिं तेषां प्रत्यागतानां क्षेत्रं संक्रामति । तेषां तदाभाव्यं भवतीति भावः । कारणतो गत्वा पुनरपूर्णे एव मासे प्रत्यागमनात् । अथ साधारणमुभयेषां तत्क्षेत्रमासीत् । मा वच्चसु अम्ह साहारणमिति व्यवस्था-करणात् तदा तेषां पुनः प्रत्यागतानां साधारणेन क्षेत्रं संक्रामति । द्वितीयं भङ्गमधिकृत्याह—

**वत्थव्वभद्दगंमी संघाडगजयण तहवि उ अलंभो । आगंतु नेति तउ अत्थति यो पवायगो नवरं ॥५०५॥**

वास्तव्यभद्रके योक्तरि तेषामागन्तुकानामसंस्तरतामियं यतना वास्तव्या आगन्तुकैः सममेकैकेन सङ्घाटेन भिक्षां हिण्डन्ते, । अथ तथाप्यलाभस्तर्हि निर्गच्छति, तत्रेयं भङ्गचतुष्टयेन यतना—आगन्तुकानां चतुर्भागो निर्गच्छति, न वास्तव्यानां १, वास्तव्यानां चतु-र्भागो निर्गच्छति नागन्तुकानां २, वास्तव्यानामपि चतुर्भाग आगन्तुकानां च चतुर्भागः ३, उभयेषामपि चतुर्भागागमने चतुर्थः ४ । स चात्र शून्यो गमनमन्तरेणासंस्तरणात् । एवमप्यसंस्तरणेऽर्द्धार्द्धगमनेन यतना प्रथमभङ्गेऽपि द्रष्टव्या । स चात्रापि पूर्वप्रकारेण शून्यः । अथैवमपि न संस्तरति तत आगन्तुकाः सर्वे निर्गच्छन्ति । नवरमेकः प्रवाचकास्तिष्ठति येन वास्तव्यान् प्रवाचयति । अथ सोऽप्यसंस्तरणे स्वशिष्यैः सह गतस्ते च वास्तव्यास्तमुपसम्पन्ना यदि मावच्चह साहारणमिति व्यवस्थाकारणत उभयेषां साधारणं तत् क्षेत्रं ततो यदि

व्य. सू. गत्वा पुनरपि अपूर्णे एव मासे तत्र क्षेत्रे प्रत्यागच्छन्ति । तदा कृतायामुपसम्पदि तेषामेव प्रत्यागतानां क्षेत्रमाभाव्यतया संक्रामति । यदि वा
२६–३२ साधारणेन । साम्प्रतमनयोरेव भंग्यो राभवनव्यवहारशेष उच्यते । अत्र पतितं नियाट्टि सुहदुक्खयं जाति करेंतीति द्वारमस्य व्याख्यानमाह—
॥ ९३ ॥ **सुहदुक्खित्तो समत्ते वाएंतो निग्गएसु सीसेसु ॥ वाइज्जंतो वि तहा निग्गयसीसो समत्तंमि ॥ ५०६ ॥**

१८ इदमुक्तमागन्तुकाः सर्वेऽपि निर्गच्छन्ति केवलमेव प्रवाचकोऽवतिष्ठते । तत्र यदि निर्गतेषु शिष्येषु वाचयन् प्रवाचकः समाप्ते श्रुते सुखदुःखितः सुखदुःखनिमित्तमुपसम्पदं ग्राहितस्तथा तस्य वाच्यमानस्य भवति तत्क्षेत्रम् । इदं द्वितीयभङ्गमाधिकृत्योक्तं प्रथमभङ्गमाधिकृत्याह—तथा वाच्यमानोपि निर्गतः शिष्यः समाप्ते श्रुते वक्तव्यं । किमुक्तं भवति ? । यदि वाच्यमानो निर्गतेषु शिष्येषु वाचनाग्रहणाय पश्चात् स्थितः । समाप्ते श्रुतस्कन्धे वाचयता सुखदुःखनिमित्तमात्मोपसम्पदं ग्राहितस्तदा वाचयति आभवति क्षेत्रम् ॥

२२ **दोण्हवि विणिग्गएसुं वाएंतो तत्थ खेत्तितो होति । तंमि सुए असमत्ते संमत्ते तस्सेव संकमति ॥५०७॥**

द्वयोरपि शिष्येषु विनिर्गतेषु तावेव द्वौ केवलौ तिष्ठतस्तत्र यावदद्यापि तत् श्रुतं न समाप्यते तावत्तस्मिन् श्रुतं असमाप्ते तत्र तयोर्द्वयोर्मध्ये वाचयन् क्षेत्रिको भवति । समाप्तं पुनः श्रुतस्यैव पूर्वस्थितस्य तत्क्षेत्रं संक्रामति । अथ द्वावपि परस्परं सुखदुःखोपसम्पदं प्रतिपन्नो तदा साधारणं क्षेत्रमिति यो यल्लभ्यते तस्य तदा भवतीति ।

२६ **संथरे दोवि न नेंती तेहि उववाइया उ जइ सीसा । लाभो नत्थि महंति य अहव मत्ते पधाविज्जा ॥५०८॥**

संस्तरे संस्तरणा द्वयेऽपि पूर्वस्थिता आगन्तुकाश्च न निर्गच्छन्ति, तैश्च पूर्वस्थितै यदि बहवः शिष्या उपपादिता उत्पादितास्तदा स आगन्तुको नास्ति मम लाभ इति विचिन्त्य प्रधावेत् गच्छेत् । अथ ते निक्षिप्तगणास्तस्य समीपे वाचयन्ति तेषां शिष्या वा तत आह—

अथवा समाप्ते श्रुते प्रधावेत् ॥ सम्प्रति निद्दयपद्दाविओ वा रुद्धो पच्छाय वाघातो (५०२) इत्येतद्व्याख्यानयति—

उ. ४. भा. ५०६-५११ ॥ ९४ ॥

**जइ वायगो समत्तो मंतिउ पडिच्छिएहिं रुंभेज्ज । असिवादिकारणे वा न नेंते लाभो इमो होइ ॥५०९॥**

यदि समाप्ते श्रुते ततक्षेत्रात् वाचको निर्गच्छन् प्रतीच्छिकैरुच्यते यथा मा निर्गच्छत यूयं, वयमद्यापि वाचयिष्याम इति यदि वा निर्गतो बहिरशिवादीनि कारणान्युपस्थितानि ततो व्याघात इति कृत्वा न निर्गच्छति, तदा तस्मिन् प्रतीच्छकैरवरोधनात् । पश्चाद्व्याघा- ताद्वा अनिर्गच्छति तस्यायमाभाव्यो लाभो भवति । तमेवाह—

**आयसमुत्थं लाभं, सीसपडिच्छएहिं सो लहइ रुद्धो । एवं च्छिण्णुववाए अच्छिण्णे सीसा गते दोण्हं ॥५१०॥**

स प्रातीच्छिकैर्गच्छन्नपरुद्धः सन् यत्स्वयं लभते, यच्च तस्य शिष्या यच्च तस्य प्रातीच्छिका वा लभन्ते, तत्सर्वमात्मसमुत्थं शिष्यप्रा- तीच्छकैर्वा समुत्पादितं लभते । एवमाभवनं च्छिन्ने समाप्ते उपपातहेतौ श्रुतस्कन्धादौ श्रुते द्रष्टव्यं, । अच्छिन्ने असमाप्ते श्रुतस्कन्धादौ यदि तस्य पठत आचार्यस्य शिष्या ग्रामन्तरगताः प्रत्यागताः तस्य च शिष्यो नियमात् गीतार्थो यस्य गण आरोपितस्तदा द्वयोरपि लाभः साधा- रणो गीतार्थे शिष्ये निक्षिप्तगणतया पठतोऽप्याचार्यस्य पाठयिता गच्छन् तेन प्रतिरुद्ध इति पाठयितुरप्याभवनात् ॥

**एवं ता उउबद्धे, वासासु इमो विही हवति तत्थ । खेत्त पडिलेहगा उ पयाठिया तेण अन्नत्थ ॥५११॥**

एवं तावत् ऋतुबद्धे काले-आभवनव्यवहारविधिरुक्तो वर्षासु वर्षाकाले पुनरयं वक्ष्यमाणो विधिर्भवति तमेवाह तत्थेत्यादि ॥ द्वयोराचार्ययोः ऋतुबद्धे काले साधारणक्षेत्रस्थितयोरेकोऽपरस्यैकस्य पार्श्वे उपसम्पदं गृहीतवान् । वर्षारात्रश्च प्रत्यासन्नीभूतोऽन्यानि च क्षेत्राणि वर्षावासयोग्यानि तादृशानि प्रत्यासन्नानि न सन्ति, ततः उपसम्पन्न आचार्यस्तत्रेति तस्मिन्नेव आषाढमासिके क्षेत्रे वर्षावासं स्थि-

व्य. सू. २६–३२ ॥ ९४ ॥

तस्तेन च वाचनाचार्येणान्यत्र वर्षावासयोग्यस्य क्षेत्रस्य प्रतिलेखकाः प्रवर्तितास्तांश्च प्रवर्तयन्निदमवादीत् ।

**जा तुब्भे पेहेहा तावेतेसिं इमं तु सारेमि । तं च समत्ते तेसिं वा वासं च पबद्धमालग्गं ॥ ५१२ ॥**

यावत् यूयं क्षेत्रं प्रत्युपेक्ष्य समागच्छथ । तावदेतेषामाचार्याणामिदं श्रुतस्कन्धादिकं सारयामि सूत्रतोऽर्थतश्च गमयामि । तच्च श्रुत-
१८ स्कन्धादिकं तेषां तथा अधीयानानां समाप्तमेतद्व्यवच्छिन्नमित्युच्यते, । अत्रान्तरे च वर्षं प्रबद्धं प्रबन्धेन पतितुमालग्नं तेऽपि च क्षेत्रप्रत्युपे-
क्षकास्तत्रैव वर्षेण निरुद्धाः ।

**निग्गंतूण न तीरइ, चउमासे तत्थ लाभमायगयं । लभते वोच्छिण्णेवं कुव्वंति गिलाणगस्स वि य ॥५१३॥**

यतः प्रबन्धेन वर्षं पतितुमारब्धं, न च क्षेत्रप्रत्युपेक्षकाः समागच्छन् ततः समाप्तेऽपि श्रुते स वाचनाचार्यस्ततः क्षेत्रान्निर्गन्तुं न
२२ शक्नोति । अनिर्गतश्च तस्मिन् क्षेत्रे चतुरो वर्षारात्रमासान् यावदात्मगतं आत्मसमुत्थं लाभं लभते, । द्वितीयोऽप्यात्मसमुत्थस्य लाभस्य स्वामी
एवं कुर्वते व्यवच्छिन्ने समाप्ते श्रुते अथवा गिलाणस्स विय इति समाप्ते श्रुते वाचनाचार्यो ग्लानोऽभवत् ततो गन्तुमशक्तस्यापि च ग्लान-
स्यैवमाभवनव्यवहारो दृष्टव्यः । उभयोरपि चतुरो वर्षामासानात्मसमुत्थो लाभ इत्यर्थः ।

**अह पुण अच्छिण्ण सुए, ते आया बेंतिमे य तुब्भे तु । अम्हे खेत्तं देमो साहारणं तंमि एसिंतु ॥५१४॥**

२६ अथ तत् श्रुतस्कन्धादिकमद्यापि न समाप्तं, ते च क्षेत्रप्रत्युपेक्षका, आयातास्ततो वाचनाचार्या आपृच्छन्ति वयं निर्गच्छामः । तत
इमे प्रतीच्छिका आचार्यं ब्रुवते, मा यूयं निर्गच्छत, समाप्तेऽपि श्रुते युष्माकं वयं क्षेत्रं दास्यामः । एवमुक्ते तत्क्षेत्रमेतेषां द्वयानामपि साधा-
रणं भवति । एष संस्तरणे विधिरसंस्तरणमधिकृत्याह—

**असंथरण निंत अनिंते चउभंगो होइ तत्थवि तहेव । एवं ता खेत्तेसुं, इणमन्ना मग्गणविहादी ॥५१५॥**

असंस्तरणे साधुषु निर्गच्छदनिर्गच्छत्सु चतुर्भङ्गी भवति । सा चैवम्—वास्तव्यानां चतुर्भागादिना प्रकारेण साधवो निर्गच्छन्ति न वाचनाचार्याणामिति प्रथमः, । वाचनाचार्याणां नेतरेषामिति द्वितीयः, । उभयेषामिति तृतीयः, । नोभयेषामिति चतुर्थः, । तत्रापि चतुर्भङ्ग्यामपि तथैवाभवनव्यवहारः । द्वयानामप्यात्मसमुत्थो लाभ इति भावस्तृतीयेभङ्गे यद्येकतर एकतरस्यापार्श्वे साध्वभावत उपसम्पद्यते, तत उपसम्पद्यमान लाभ इतरस्मिन् संक्रामति । अनुपसम्पन्नौ च द्वयोरपि साधारणं क्षेत्रं, । एवं तावत् क्षेत्रे मार्गणा कृता । अयमन्यो मार्गणाविधिरादिशब्दात् दिग्वारणपरिग्रहः । गाथायां च स्त्रीत्वनिर्देशः प्राकृत्वात्तमेव मार्गणाविध्यादिकमाह—

**अद्धाणादिसु नट्ठा, अणुवट्ठिया तहा उवट्ठविया । अगविट्ठा य गविट्ठा निप्फण्णा धारणदिसासु ॥५१६॥**

अध्वा मार्ग आदिशब्दादशिवावमौदर्यादिनिमित्तनिर्गमनपरिग्रहः तेष्वध्वादिषु नष्टाः साधवः । ते च द्विधा—उपस्थापिता अनुपस्थापिताश्च एकैके द्विधाचार्यस्य ते तेन गवेषिता अगवेषिताश्च । तत्र ये निष्पन्ना उपस्थापितास्ते निष्पन्ना एव न तेषां दिग्वारणं कर्तव्यमितरेषां यथाऽभवनं धारणं दिक्षु अध्वादिषु नष्टा इत्युक्तं तत्र यैः कारणैस्ते नष्टाः साधवस्तान्यभिधित्सुराह—

**संभममहंतसत्थे भिक्खायरिया गया व ते नट्ठा । सिग्घगती परिरएणव आउर तेणादिएसुं च ॥५१७॥**

संभ्रमो वनदवाग्निसंभ्रमादिकः तद्वशाद्गच्छात् स्फिटिता यदि वा महति सार्थे व्रजतां कोऽपि कुत्रापीति गच्छादपगता यदि वा भिक्षाचर्यानिमित्तं सार्थादपसृत्य व्रजिका पल्यादिषु गतास्ततो नष्टा । अथवा सार्थः शीघ्रगतिस्ते च मन्दगतयः तत्सार्थात् गच्छात् परिभ्रष्टाः परिरएणवत्ति यदि वा नद्यादिषूत्तरीतव्यासु सार्थ ऋजुमार्गेणोत्तीर्ण इतरे साधवः परिरएण गत्वा स्तोकपानीये समुत्तरन्ति, चिन्तयन्ति च

मात् स क्षेत्रिकः क्षेत्रस्य प्रभुरासीत्तस्मान्न — स्वशिष्ये निक्षिप्तस्तस्य ततः स क्षेत्रस्याप्रभुरेवेति कुतस्तस्यात्मसमुत्थो लाभस्तत आह–यत् यस्मात् स क्षेत्रिकः क्षेत्रस्य प्रभुरासीत्तस्मान्न

व्य. सू. स्वशिष्ये निक्षिप्तस्तस्य ततः स क्षेत्रस्याप्रभुरेवेति कुतस्तस्यात्मसमुत्थो लाभस्तत आह–यत् यस्मात् स क्षेत्रिकः क्षेत्रस्य प्रभुरासीत्तस्मान्न शक्यते वक्तुं तस्मिन् क्षेत्रे आत्मसमुत्थस्य लाभस्य न ईशः प्रभुरिति तदेवमुक्तो विधिः संयतानाम् ॥ अधुना संयतीनां विधिमतिदेशत आह—

२६–३२ शक्यते वक्तुं तस्मिन् क्षेत्रे आत्मसमुत्थस्य लाभस्य न ईशः प्रभुरिति तदेवमुक्तो विधिः संयतानाम् ॥

॥ ९६ ॥

**आरब्भसुत्ता सरमाणगा तो जा पिंडसुत्तं इणमंतिमं तू ।**

**एमेव वच्चो खलु संजतीणं वोच्छिन्नमिसेसु अयं विसेसो ॥ ५२४ ॥**

१८ सरमाणकान् आयरिय उवज्झाए सरमाणे इत्येवंरूपात्सूत्रादारभ्य यावदिह अन्तिमं पिण्डसूत्रं तेषु सूत्रेषु यथा संयतानां विधिरुक्त

एवमेव खलु संयतीनामपि गीतार्थपरिगृहीतानां वाच्यः । केवलं व्यवच्छिन्ने मिश्रे वायं वक्ष्यमाणो विधिविशेषस्तमेवाह—

**वोच्छिण्णे उ उवरए गुरुम्मि गीयाण उग्गहो तासिं। दोण्ह बहूणं च पिंडए कुलिव्व मन्नं जयभिधारे ॥५२५॥**

२२ व्यवच्छिन्नो नाम तासां गुरूपरतः कालगत इत्यर्थस्तस्मिन् गुरावुपरते यदि कुलिव्व मन्नंति कुलसक्तमन्यमाचार्यमभि धारयन्ति ततस्तासां द्वयोर्बहूनां वा पिण्डके समुदायेन स्थितानां गीतार्थानां सतीनां पिण्डकेन व्यवस्थितानामपि नावग्रहः । संयतीनां स्वतन्त्रानामवग्रहा भावात् ॥ मिश्रे विशेषमाह—

**मीसो उभयगणावच्छे उ तत्थ समणीण जो लाभो। सो खलु गणिणो नियमा पुव्वठिया जाव तत्थण्णा ५२६**

२६ मिश्रोनाम उभयगणावच्छेदकस्तत्र उभयगणावच्छेदके सति यः श्रमणीनां संयतीनां लाभः स खलु नियमात् ये पूर्वस्थितास्तत्र गणिनो यावदन्ये न गच्छन्ति तावत्तस्य गणिनो वेदितव्यः । सोऽन्येष्वाचार्येष्वागतेषु तेषामिति । तदेवं गतं कस्येति द्वारम् ॥ सम्प्रति कियन्तं कालमवग्रह इति व्याख्यानार्थमाह—

उ. ४. भा. ५२४–५२९ ॥ १७ ॥

**केयति काल उग्गहो तिविहो उउबद्धे १ वास २ वुड्ढे ३ य। मास चउमासं वासे गेलण्णे सोलमुक्कोसा ५२७**

कियन्तं कालमवग्रह इति शिष्येण प्रश्ने कृते सूरिराह—त्रिविधो भवति अवग्रहस्तद्यथा—ऋतुबद्धे वर्षे वर्षाकाले वृद्धवासे च। तत्र ऋतुबद्धे काले उत्सर्गत एकं मासमवग्रहो वर्षे वर्षाकाले चतुरो मासान्, ग्लानत्वमधिकृत्योत्कर्षतः षोडश मासान्। अन्ये तु षोडश वर्षाणीत्याहुः॥ सम्प्रति वृद्धवासशब्दस्य व्युत्पत्तिमाह—

**वुड्ढस्स उ जो वासो वुड्ढिं व गतो उ कारणेणं तु। एसो उ वुड्ढवासो तस्स उ कालो इमो होइ॥५२८॥**

वृद्धस्य जरसा परिणतस्य परिक्षीणजङ्घाबलस्य वासतो वासो वृद्धवासः, अथवा वृद्धः कारणवशेन रोगेण वृद्धिं गतो वासो वृद्धवासः एष खलु वृद्धवासो वृद्धवासशब्दार्थस्तस्य तु वृद्धवासस्य कालोऽयं वक्ष्यमाणो जघन्यादिभिन्नो भवति तमेवाह—

**अंतो मुहुत्तकालं जहन्नमुक्कोस पुव्वकोडीओ। मोत्तुं गिहि परियागं जं जस्स व आउयं तित्थे॥ ५२९ ॥**

वृद्धवासो जघन्येनान्तर्मुहूर्तं कालं कथमिति चेदुच्यते—वृद्धवासबुद्ध्या स्थितस्यान्तर्मुहूर्तानन्तरं मरणभावादुत्कर्षतः पूर्वकोटीगृहिपर्यायं नववर्षलक्षणं मुक्त्वा नववर्षोना पूर्वकोटी इत्यर्थः, । कथमेतावान् कालो वृद्धवासस्य लभ्यते इति चेत् ? कोऽपि नववर्षप्रमाण एवं श्रमणो जातः। स च श्रामण्यपरिग्रहात्तदनन्तरमेव प्रतिकूलकर्मोदयवशतः क्षीणजङ्घाबलतया रोगेण वा विहर्तुमसमर्थो जातस्तत एकत्र वासो यथोक्तकालमानो भवति। इदं चोत्कर्षतो वृद्धवासकालपरिमाणं भगवत ऋषभस्वामिनस्तीर्थे शेषतीर्थकरतीर्थान्यधिकृत्याह—यस्य वा तीर्थकरस्य तीर्थे यत् उत्कृष्टमायुः प्रमाणं वर्षनवकहीनं तस्य तीर्थे तावान् उत्कृष्टो वृद्धवासकालः। तत्र योऽसौ जरापरिणामेन वृद्धवासीभूतः स एतादृशः॥

किं घेत्तव्वं रणे जोग्गं, पुच्छिया इतरेण ते। भणंति वणतिल्लाइं, घयदव्वोसहाणि य ॥१०२॥

व्य. सू. २१ ॥२२॥ किं रणे संग्रामे योग्यं गृहीतव्यं,। एवमुक्तास्ते भणन्ति। व्रण- इतरेण द्वितीयेन दण्डिकेन ते आत्मीया वैद्याः पृष्टाः। किं रणे संग्रामे योग्यं गृहीतव्यं,। एवमुक्तास्ते भणन्ति। व्रण- संरोहकानि तैलानि व्रणतैलानि, तथातिजीर्णं घृतं द्रव्यौषधानि च यैरौषधैः संयोजितैस्तैलं घृतं वातिपच्यते। व्रणसंरोहकं चूर्णो वा व्रणसंरोहणाय भवति तानि द्रव्यौषधानि ततो राज्ञा पुरुषाः सन्दिष्टा यद्वैद्यैरुपदिष्टं तत्सर्वं गृहीतम्।

भग्गसिव्विय संसित्ता वणा वेज्जेहि जस्स। सो पारगो उ संग्गामे, पडिवक्खो विवज्जए ॥१०३॥

ततः संग्रामे वर्त्तमाने यस्य राज्ञो ये पुरुषा मुद्गरादिप्रहारहतास्तेषां प्रहारा वैद्यैरौषधैर्भग्ना ये च व्रणितास्तेषां व्रणाः सीवितास्ते औषधैः संसिक्ता। एवं व्रणिताः प्रहारिता द्वितीय दिवसे युद्धसमर्था जाताः। एवं द्वितीयदिवसे तृतीयदिवसे ऽपि कृतम्। एवं स राजा वैद्योपदेशेनौषधसंग्रहतः संग्रामे पारगो अभूत्, प्रतिपक्ष विपर्ययो जित इत्यर्थः। एष दृष्टान्तोऽ- यमर्थोपनयः ॥

एवमेवासपेज्जाइ खज्जलेज्जाणि जेसिओ। भेसिज्जाइं सहीणाइं पारगा ते समाहीए ॥१०४॥

एवमेव दण्डिकदृष्टान्तगतेन प्रकारेण येषामाचार्याणां भैषजानि असत्ति अशनरूपाणि, पेयानि पानकरूपाणि, खाद्यानि खादिमरूपाणि, लेह्यानि च स्वादिमानि ते आत्मनो गच्छस्य च समाधेः पारगा भवन्ति। ये पुनरौषधानां न संग्रहीतारस्ते समाधेरपारगाः। प्रकारान्तरेण दण्डिकदृष्टान्तमाह–

अहवा राया दुविहो आयभिसित्तो पराभिसित्तो य। आयाभिसित्तो भरहो तस्स उ पुत्तो परेणं तु ॥१०५॥

उ. ५. भा. १०२–१०९ ॥२२॥

अथवेति प्रकारान्तरद्योतने राजा द्विविधो भवति । तद्यथा–आत्माभिषिक्तः, पराभिषिक्तश्च आत्मनैव निजबलेन राज्येऽभिषिक्तः आत्माभिषिक्तः, परेणाभिषिक्तः पराभिषिक्तः । तत्रात्माभिषिक्तो भरतश्चक्रवर्ती तस्य पुत्र आदित्ययशाः पराभिषिक्तः ।

बलवाहणकोसा य बुद्धी उप्पत्तियादीया । साहगो उभयोवेता सेसा तिण्णि असाहगा ॥१०६॥

बलं हस्त्यादि, वाहनानि यानानि, कोशो भाण्डागारं तथा बुद्धिरौत्पत्यादिकाः । अत्र भङ्गाश्चत्वारः–एको बलवाहनादि समग्रो नो बुद्धि समग्रः १ एको नो बलवाहनादिसमग्रः किन्तु बुद्धिसमेतः २, एको बलवाहनादिसमेतोऽपि बुद्धिसमेतोऽपि ३, एको नो बलवाहनादिसमेतो नापि बुद्धिबलोपेतः ४ । एषु चतुर्षु भङ्गेषु मध्ये य उभयोपेतो बलवाहनादि समेतो बुद्धि-समेतश्चेत्यर्थः स राज्यस्य साधकः शेषास्त्रयोऽसाधकाः । एष दृष्टान्तोऽयमर्थोपनयः ॥

बलवाहणत्थहीणो बुद्धिहीणो न रक्खए रज्जं । इय सुत्तत्थविहीणो ओसहहीणो उ गच्छंतु ॥१०७॥

यथा बलेन वाहनैरर्थेन च हीनो बुद्धिहीनश्च राजा राज्यं न रक्षति, एवमाचार्योऽपि सूत्रार्थविहीनो औषधविहीनश्च गच्छं न रक्षति ॥

आयपराभिसित्तेण जम्हा आयरिएणओ । उसहमादीणि चओ कायव्वो चोयती सीसो ॥१०८॥

तस्मादाचार्येण आत्माभिषिक्तेन श्रुतकेवलिना इतरेण च पराभिषिक्तेन औषधादिनिचयः कर्तव्य इति शिष्यश्चोदयति–

सीसेणाभिहिते एवं बेइ आयरिओ ततो । वदतो गुरुगा तुब्भं आणादीया विराहणा ॥१०९॥

एवं शिष्येणाभिहिते तत आचार्यो ब्रूते–एवं वदतस्तव प्रायश्चित्तं चत्वारो गुरुकाः आज्ञादयश्च दोषा विराधना सूत्रस्य ।

व्य. सू. २१ ॥२३॥ एतदेव भावयति–

दिट्ठंतसरिसं काउं अप्पाणपरं च केइ नासंति । ओसहमादीनि चओ कायव्वो जहेव राईणं ॥११०॥

केचित्तव सदृशा दृष्टान्तसदृशं दण्डिकसदृशमात्मानं परं च कृत्वा नाशयन्ति । यथा औषधादीनिचयः कर्तव्यो यथा राज्ञामिति एतदेवातिप्रसङ्गापादनेन दूषयति–

कोसकोट्टारदाराणि पदातीमादीयं बलं । एवं मणुयपालाणं किंतु तुज्झंपि रोयइ ॥१११॥

कोशकोष्ठागारदाराः पदात्यादिकं बलमेतन्मनुष्यपालानां भवति तदेतत् किन्तु तवापि रोचते । एतदपि दृष्टान्तबलेन गृह्यतामिति भावः ।

जोवि ओसहमादीणं निचयो सोवि अक्खमो । न संचये सुहं अत्थि इह लोए परत्थ य ॥११२॥

योऽप्यौषधानां निचयः सोऽपि सुखोत्पादनायाक्षमः । यतो न संचये सुखमस्ति इहलोके तदुत्पादनतद्रक्षणतन्नाशे दुःखसंभवात् । परत्र च परलोके च सुखं नास्ति परिग्रहधरणतः कुगतिप्रपातात् ॥

आदि सुत्तस्स विरोधो सन्नणाचित्ता(?)गिहीण अणुकंपा । पुव्वायरिय अन्नाणी अणवत्था वंत मिच्छत्तं ॥११३॥

आदिसूत्रस्य दशवैकालिकस्य विरोधस्तथा एवं ब्रुवाणो भवान् परिग्रहे साधूनियुक्ते तन्नियोगाच्च ते त्यक्तास्तथा गृहिणामनुकम्पा अनुग्रहस्त्यक्तः साधूनां स्वत एव स्वत भैषजादेः संभवात् । तथा ये पूर्वाचार्याः सन्निधिं प्रतिषिद्धवन्तस्ते

अज्ञानी कृताः सन्निधेर्भवता गुणोपदर्शनात् अनवस्था चैवं प्रसज्यते । सन्निधिरिव भवताऽन्येनान्यस्यापि ग्रहणप्रसक्ते स्तथा

उ. ५. भा. ११०–११६ ॥२३॥ चान्तप्रतिसेवनं भवतः समापतितं प्रतिषिद्धस्यापि संचयस्य पुनर्ग्रहणात् तथा मिथ्यात्वं मिथ्यावादित्वमनुषज्यते । यथावाद-मकरणात् निष्परिग्रहा वयमित्यभिधाय परिग्रहधारणात् । एनामेव गाथां व्याचिख्यासुः प्रथमतः सूत्रस्य विरोधमुपदर्शयति–

१८ जं वुत्तमसणपाणं खाइमं साइमं तहा । संचयं तु न कुव्वेज्जा एयं दायंविरोहियं ॥११४॥

यत् दशवैकालिके उक्तमशनं पानं खादिमं तथा संचयं न कुर्यात् तथा च तद्ग्रन्थः–

असणं पाणगं चेव खाइमं साइमं तहा । जे भिक्खू सन्निहिं कुज्जा, गिही पव्वइए न से ॥

इति तदिदानीं विरोधितं विरोधमापादितं सन्निधिरिदानीं त्वयाभ्युपगतत्वात् ॥

परिग्गहेनिजुज्जंता परिचत्ता उ संजया । भारादिमाइया दोसा पेहापेहकयाइया ॥११५॥

२२ संयताः परिग्रहे नियुज्यमानाः परित्यक्ताः संसारे पातनात् । किं चान्यत् । इहलोके भारादयो भारवहनादयो दोषा आदिशब्दात् कायक्लेशसूत्रार्थहान्यादिदोषपरिग्रहस्तथाप्रेक्षाऽअप्रेक्षादिकाश्च तथाहि–यदि सर्वं प्रत्युपेक्षते ततः सूत्रार्थपरिमन्थः । अथ न प्रत्युपेक्षते तर्हि संसक्तिभाव आदिशब्दात्तत्परितापनादिदोषपरिग्रहः ॥

२६ अहवा तप्पडिबद्धा य अत्थंते नियया दयो । अणुग्गहो गिहत्थाणं सयावि ताण होइ ओ ॥११६॥

अथवा तत्प्रतिबन्धादौपधनिचयप्रतिबन्धात्तिष्ठन्ति सदावस्थायितया न तु विहारक्रमं कुर्वन्ति; । तथा च सति नैत्यिकादयो नैत्यिको नित्यवासी, आदिशब्दात् पार्श्वस्थादि परिग्रहः । तदादयो दोषाः प्रसज्जंति, । गतं समणा चत्ता इतिद्वारमधुना

गृहस्थानां सदा साधूनां भेषजादि प्रयच्छतामनुग्रहो भवति स इदानीं परित्यक्तः ।

गिहीण अणुकंपेति व्याख्यानयति, । गृहस्थानां सदा साधूनां भेषजादि प्रयच्छतामनुग्रहो भवति स इदानीं परित्यक्तः ।

व्य. सू. २१ ॥२४॥ साधूनां स्वत एव तन्निचयभावात् ॥ सम्प्रति (११२)–पुव्वायरिय अन्नाणीत्येतद्व्याख्यानयति–

पडिसिद्धा संनिही, जोहिं पुव्वायरिएहिं तेविओ । अन्नाणीउ कया एवं, अणवत्थापसंगतो ॥११७॥

यैः पूर्वाचार्यैः प्रतिषिद्धः सन्निधिस्तेऽपि त्वय्येवं ब्रुवता अज्ञानी कृताः । अनवस्थाद्वारमाह–अनवस्थाप्रसङ्गतो यथा त्वयौषधसंचयः कृतस्तथान्येऽन्यस्यापि करिष्यन्तीति प्रसङ्गतः सर्वस्याप्यनवस्था, वांतद्वारं चाह–

वंतं निसेवियं होइ गिण्हंता संचयं पुणो । मिच्छत्तं न जहावादी न तहाकारी भवंति उ ॥११८॥

संचयं त्यक्त्वा पुनः संग्रहतो वांतं निषेवितं भवति, तथा मिथ्यात्वं न यथावादिन उत्सूत्रप्ररूपणात् ॥

एए अन्ने य जम्हा दोसा हुंति सवित्थरा । तम्हा तोसहमादीणं संचयं तु न कुव्वए ॥११९॥

यस्मादेतेऽनन्तरोदिता अन्ये च दोषाः सविस्तरा भवन्ति । तस्मादौषधादीनां संचयं न कुर्यात् । परस्यावकाशमाह–

जइ दोसा भवंतेते किं खु घेत्तव्वयं ततो । समाहिसंधावणट्ठाए भणणती सुण तो इतो ॥१२०॥

यद्येते अनन्तरोदिता दोषा भवन्ति ततः किं खु समाधिस्थापनाय गृहीतव्यम् ? आचार्य आह–भण्यते अत्रोत्तरं दीयते तदेव तावदितोऽनन्तरमुच्यमानं श्रृणु तदेवाह–

नियमा विज्जागहणं कायव्वं होइ दुविहदव्वं च । संजोगदिट्ठपाढी असती गिहि अण्णातित्थीहिं ॥१२१॥

यथा विद्ययाऽपमार्जनं क्रियते तस्या अन्यासां च विद्यानामाचार्येण नियमात् ग्रहणं कर्तव्यम्,। तथा यदि कारणत-
उ. ५. भा. ११७–१२४ ॥२४॥ श्छिन्नमण्डपे स्थातव्यं भवति, ततो दीर्घपृष्ठविषविघाताय द्विविधं द्रव्यं गृहीतव्यं। तच्चाग्रे वक्ष्यते,। तस्मादाचार्यः संयोगदृष्ट-
पाठी भवेत्। अनेकान् संयोगान् व्यापार्यमाणान् यो दृष्टवान् यश्च तत् पाठं पठितवान् स संयोगदृष्टपाठी। अथ स्वयं संयोग-
दृष्टपाठी न भवति तर्हि तस्यासति गृहिभिः कार्यते विचिकित्सा, तेषामप्यसत्यन्यतीर्थिभिर्यदुक्तं द्विविधं द्रव्यं गृहीतव्यं,
तदभिधित्सुराह—
१८ चित्तमचित्तपरित्त, मणंतसंजोइमं च इतरं च। थावरजंगमजलजं, थलजं चेमादि दुविहं तु ॥१२२॥
द्विविधं द्रव्यं—सचित्तमचित्तं वा,। यदि वा परीतमनन्तकायिकं। अथवा सांयोगिकमनेक सांयोगनिष्पन्नमितरदसांयो-
गिकं,। अथवा स्थावरं जङ्गमं प्रत्युपन्ने कार्यं यदि स्थावरद्रव्यप्रयोगतः कथमपि गुणो न भवति, तदा अनन्यगत्या जंगमांगं
२२ द्रव्यं प्रयुज्यते,। अथवान्यथा द्विविधं द्रव्यं जलजं थलजं च,। एवमादि द्विविधं द्रव्यं ग्रहीतव्यम्,। इयं चिकित्सा दीर्घपृष्ठ-
विषविघातायाभिहिता सम्प्रत्यतिदेशेनान्यरोगेष्वपि। तमिवाह—
जह चेव दीहपट्टे, विद्यामंता य दुविहदव्वा य। एमेव सेसएसुवि विज्जा दव्वा य रोगेसु ॥१२३॥
यथा चैव दीर्घपृष्ठदंशे विद्यामन्त्रा द्विविधानि च द्रव्याणि ग्रहीतव्यानि। एवमेव शेषेष्वपि रोगेषु विद्याद्रव्याणि च ग्राह्याणि।
२६ संजोगदिट्ठपाठी, न धरेंतंमि चउ गुरू हुंति। आणादिणो य दोसा, विराहणा इमेहिं ठाणेहिं ॥१२४॥
आचार्येण स्वयं संयोगदृष्टपाठिना भवितव्यं। यदि पुनः सति शक्तिसंभवे संयोगदृष्टिपाठं न धरति, तर्हि तस्मिन्नधरति

प्रायश्चित्तं चत्वारो गुरुकाः। न केवलं प्रायश्चित्तं, किन्त्वाज्ञादयश्च दोषास्तथा विराधना एभिर्वक्ष्यमाणैः स्थानैः। तान्येवाह–

व्य. सू. २१ ॥२५॥ उप्पण्णे गेलण्णे, जो गणधारी न जाणइ तिगिच्छं। दीसंतत्तो विणासो, सुहदुक्खी तेण उ चत्ता ॥१२५॥

उत्पन्ने ग्लानत्वे यो गणधारी चिकित्सां न जानाति, तस्य पश्यतः सतो ग्लानस्य विनाश इति, तेन सुखदुःखिनः सुख-दुःखोपसम्पन्नकाः स्वशिष्याः प्रतीच्छकाश्च परित्यक्ताः, कथं पश्यतः सतो ग्लानस्य शेषकाणां च विनाश इत्यत आह–

आउरत्तेण कायाणं, विसकुंभादिघायए। डाहे छेज्जे य जे अण्णे, भवंति समुवद्दवा ॥१२६॥

एते पावइ दोसा, अणागयं अग्गहियाय विज्जाए। असमाही सुयलंभं केवललंभं तु चुक्केज्जा ॥१२७॥

कस्यापि साधोर्विषकुम्भो लूता आदिशब्दाद्दाहादिपरिग्रहस्तस्मिन्नुत्थिते आतुरत्वेनाकुलत्वेन विषकुंभादिघाताय कायानामुदकादीनामुपद्रवं कुर्यात्। तथा हि विषकुंभे दाहे वा समुपस्थिते आकुलीभूतः सन् तं शीतलेनोदकेन सिञ्चेत्, सचित्तेन वा कर्दमेन लिम्पेत्। तथा दाघे च्छेदे च येऽन्ये भवन्ति समुपद्रवा एतान् दोषाननागतगृहीतायां विद्यायां प्राप्नोति, तथा तीव्रायां वेदनायामनुपशान्तायामसमाधिना असमाधिमरणेन म्रियेत, तथा च सति दीर्घसंसारमनुपरिवर्तते, चिरं च यदि जीवति, तर्हि भूयांसं श्रुतलाभं प्राप्नुयात्, केवलज्ञानं चोत्पादयेत्। तथा–

इह लोगियाण परलोगियाण लद्धीण फेडितो होइ। इहलोगामोसादी परलोगे अणुत्तरादीया ॥१२८॥

असमाधिमरणेन मरणतः स ऐहलौकिकीनां पारलौकिकीनां च लब्धीनां स स्फेटितस्त्याजितो भवति। तत्र इह-लोके ऐहलौकिक्यो लब्धय आमर्षादय आमर्षौषध्यादयः परलोके पारलौकिक्योऽनुत्तरादयो अनुत्तरा लवसत्तमा देवा

उ. ५. भा. १२५-१३२ ॥२५॥

आदिशब्दात् सुकुलप्रत्यायातिश्रुतलाभादिपरिग्रहः; ॥

असमाहीमरणेणं एवं सव्वासि फेडितो होइ । जह आउगपरिहीणा देवा लवसत्तमा जाया ॥१२९॥

एवममुना प्रकारेण सर्वासामैहिकीनां पारत्रिकीनां च लब्धीनामसमाधिमरणेन स्फेटितो भवति । यथा आयुष्कपरिहीना देवा लवसप्तमा जाता, आयुष्कपरिहान्या सिद्धिलाभतो भ्रष्टा यथा देवा लवसप्तमा जाता इत्यर्थः । सम्प्रति लवसप्तमदेवस्वरूपमाह—

सत्तलवा जइ आउं पहुप्पमाणं ततो उ सिज्झंतो । तत्तियमेत्तं न हु ततो ते लवसत्तमा जाया ॥१३०॥

यदि सप्तलवाः कालविशेषा आयुः प्रभवन् स्यात् सप्तलवप्रमाणं यद्यायुः प्राप्येतेत्यर्थः ततः सिद्ध्येयुः परं तद् आयुस्तावन्मात्रं न हु नैवाभवत् ततस्ते लवसप्तमा देवा जाता लवे सप्तमे सिद्धिरभविष्यत् यदि तावदायुर्भवेद्येषां ते लवसप्तमा नाम नाम्नैकार्थे समासो बहुलमिति समासः । के ते लवसप्तमा इत्याह—

सव्वट्ठसिद्धिनामे उक्कोसट्ठिईय विजयमादीसु । एगावसेसगब्भा भवंति लवसत्तमा देवा ॥१३१॥

ये देवाः सर्वार्थसिद्धिनामके महाविमाने ये च विजयादिषूत्कृष्टस्थितय एकोऽवशेषो गर्भो येषां ते एकावशेषगर्भास्ते भवन्ति लवसप्तमाः । उपसंहारमाह—

तम्हा उ सपक्खेणं कायव्व गिलाणगस्स तेगिच्छं । विवक्खेण न कारेज्जा एवं उदितंमि चोदेति ॥१३२॥

यस्माद्विपक्षे दोषास्तस्मात्सपक्षेण ग्लानस्य चिकित्साकर्म कर्तव्यं विपक्षेण पुनर्न कारयेत् तदेवं सम्बन्धस्ततः सूत्र-

व्य. सू. २१ ॥२६॥

सम्प्रति सूत्रव्याख्या क्रियते—निर्ग्रन्थश्चशब्दान्निर्ग्रन्थी व्याख्यालक्षणं तदन्वाक्षेपपरिहारौ तत्प्रसक्त्याऽन्यदपि चाभिहितं विषमपमार्जयेत्, पुरुषो वा स्त्रिया च रात्रौ वा विकाले वा दीर्घपृष्ठः सर्पो लूषयेत् दशेत् । तत्र स्त्री वा पुरुषस्य हस्तेन तं चामुना प्रकारेणापवादमासेवमानस्य से तस्य हस्तेन एवं से तस्य स्थविरकल्पस्य कल्पते । स्थविरकल्पकस्यापवादवहुलत्वादेवं न सन्ति परिहारं च तपो न प्राप्नोति । तिष्ठति पर्यायो न पुनः स्थविरकल्पात्परिभ्रश्यति, तेन च्छेदादयः प्रायश्चित्तविशेषास्तस्य वैयावृत्त्यकारापणं से तस्य कारणेन यतनया प्रवृत्तेरेष कल्पः स्थविरकल्पिकानां । एवममुना प्रकारेण सपक्षेण विपक्षेण वा जिनकल्पपर्यायो न तिष्ठति, जिनकल्पिकस्य न कल्पते । केवलोत्सर्गप्रवृत्तत्वात्तस्येति भावः । एवमपवादसेवनेन से तस्य एवं सूत्रे व्यवस्थिते यदा- जिनकल्पात् पततीत्यर्थः । परिहारं च तपोविशेषं न परिपालयति एष कल्पो जिनकल्पिकानां, यदुच्यते तदाह— चार्येण प्रागुदितं सपक्षेण वैयावृत्त्यं कारयितव्यम् न परपक्षेणेति तत्र चोदयति ब्रूते परः ।

सुत्तंमि अणुण्णायं, इह इ पुण अत्थतो निसेहेह । कायव्व सपक्खेणं चोयग सुत्तं तु कारणियं ॥१३३॥

सूत्रे विपक्षेणापि वैयावृत्त्यकारापणमनुज्ञातं इह इदानीं इ पादपूरणे पुनरर्थतो यूयं परपक्षेण वैयावृत्त्यकारापणं निषेधयत कर्तव्यम् सपक्षेणेति वचनात् ततः सूत्रभवद्व्याख्यानयोर्विरोधः । अत्राचार्य आह—न विरोधो, यतो हे चोदक सूत्रमिदं कारणिकं कारणापेक्षम् । तदेव कारणमाह—

विज्ज सपक्खाणसती गिहि परतित्थीउ तिविह संबंधी ॥ एमेव असंबंधी असोयवादेतरा सव्वे ॥१३४॥

सपक्षाणां वैद्यानामसति अभावे गृही पिता भ्राता स्वजनो वा स्थविरादिभेदतस्त्रिविधो यः सम्बन्धी स वैयावृत्त्यं

उ. ५ भा. १३३-१३६ ॥२६॥

कारणीयः। तदभावेऽसम्बन्धी स्थविरमध्यमतरुणभेदतस्त्रिभेदः पूर्वपूर्वालाभे उत्तरोत्तरः कारणीयः, तस्याभावे परतीर्थिकः पितृ-भ्रातादिः संबन्धेन संबंधी स्थविरादिभेदतस्त्रिभेदः पूर्वपूर्वालाभे उत्तरोत्तरः कारणीयः तस्याप्यलाभे असम्बन्ध्यपि स्थविरादिभेदतस्त्रिविध उक्तक्रमेण कारयितव्यः । एते सर्वेऽपि द्विधा—अशौचवादा इतरे च । तत्र प्रथमतः सर्वत्राप्यशौचवादः

१८ कारयितव्यस्तदसंभवे इतरोऽपि ॥

एएसिं असतीए गिहि गिणि परातेत्थिगी तिविहभेया। एएसिं असतीए समणी तिविहा करेइ जयणाए ॥१३५॥

एतेषां प्राग्गाथानिर्दिष्टानां सर्वेषामसति अभावे गृहस्था माता भगिनी तदभावे स्वजनाः स्थविरमध्यमतरुणभेदतस्त्रिविधाः पूर्वपूर्वालाभे उत्तरोत्तरा कारयितव्या । तदभावे असम्बन्धिनी स्थविरादिभेदतस्त्रिविधा प्राक्क्रमेण कारयितव्या ।

२२ तस्य अलाभे पारतीर्थिकी स्थविरादिभेदतस्त्रिप्रकारा पूर्वपूर्वालाभे उत्तरोत्तरा कारयितव्या । एतेषां च भेदानां सर्वेषामप्यसत्य-लाभे श्रमणी त्रिविधा स्थविरादिभेदतस्त्रिप्रकारा पूर्वपूर्वालाभे उत्तरोत्तरा यतनया करोति, तामेव यतनामाह—

दूती अद्दाए वत्थे, अंतेउरे य दंभेया । वियणे य तालवंटे चवेडतो मज्जंणा जयणा ॥१३६॥

काचित् द्यूतविद्या भवति । तया च द्यूतविद्यया यो द्यूत आगच्छति, तस्य दंशस्थानमपमार्ज्यते । तेनेतरस्य दंशस्थान-

२६ मुपशाम्यति । अद्दाएत्ति अपरा आदर्शविद्या तया आतुरआदर्शे प्रतिविम्बितोऽपमार्ज्यते आतुरः प्रगुणो जायते, । अन्या विद्या वस्त्रविषया भवति तया परिजपितेन वस्त्रेण वा प्रमृज्यमानः आतुरः प्रगुणो भवति, । अपरा विद्यान्तःपुरे आन्तःपुरिकी विद्या भवति यया आतुरस्य नाम गृहीत्वा आत्मनो अङ्गमपमार्जयति, आतुरश्च प्रगुणो जायते सा आन्तःपुरिकी ।

मगुणो भवति। वियणेयत्ति व्यञ्जनविषया विद्या यया व्यञ्ज-
अन्या दर्भे दर्भविषया भवति विद्या यया दर्भैरपमृज्यमान आतुरः प्रगुणो भवति। वियणेयत्ति व्यञ्जनविषया विद्या यया व्यञ्ज-
व्य. सू. २१ ॥२७॥ नमभिमन्त्र्य तेनातुरोऽपमृज्यमानः स्वस्थो भवति, सा व्यञ्जनविद्या। एवं तालवृन्तविद्यापि भावनीया। चपेटा चापेटी-
विद्या, यया अन्यस्य चपेटायां दीयमानायामातुरः स्वस्थो भवति, सा चापेटी। तत्र पूर्वं दूत्या विद्ययापमार्जनं कर्तव्यम्।
तदभावे आदर्शिक्या। एवं तावद्यावदन्ते चापेट्या। एषा अपमार्जनायतना एतदेव स्पष्टतरमाह–

दूयस्सोमाइज्जइ य सती अद्दागपरजवित्ताणं। परिजवियं वत्थं वा पाउज्जइ तेण वोमाए ॥१३७॥

एवं दब्भादीसुं असंफुसंतो य हत्थेण। चापेडीविज्जाएवउमाएवेडयं दिंतो ॥१३८॥

दूत्या विद्यया दूतस्यागतस्यांगमप्रमार्ज्यते, तस्या विद्याया असति आदर्शे सङ्क्रान्तमातुरप्रतिविम्बं परिजप्यातुरः प्रगुणी
कर्तव्यः। तदभावे वस्त्रविद्यया परिजपितं वस्त्रं प्रावार्यते, तेन वा परिजपितेन वस्त्रेणातुरोऽपमार्जते एवं दर्भादिभिः परि-
दर्भविद्यादिभिः हस्तेनासंस्पृशन्नपमार्जयेत्। चापेट्या वा विद्यया अन्यस्य चपेटां ददन्योऽपमार्जयेत्, विद्याः प्रायः पुरुषेषु
भवन्ति। एष यतनागमो निर्ग्रन्थानां वेदितव्यः। एष एव यतनागमो निर्ग्रन्थीनामपि भवति। तथा चाह–

एसेव गमो नियमा निग्गंथीणंपि होइ नायव्वो। विज्जादी मुत्तूणं अकुसलकुसले य करणं च ॥१३९॥

एष एवानन्तरोदितो यतनागमो नियमात् निर्ग्रन्थीनामपि ज्ञातव्यः। तदा निर्ग्रन्थीनां विद्यादि न दातव्यं मुक्त्वा पूर्व-
गृहीतमसाधनं मन्त्रं स हि कदाचिद्दीयेत न कश्चिद्दोषः। तथा यदि निर्ग्रन्थोऽकुशलो भवति निर्ग्रन्थी च कुशला तत्र करणं
निर्ग्रन्थ्या निर्ग्रन्थी कारयेदित्यर्थः। विद्यादी मुत्तूणमित्येतदेव व्याख्यानयति–

उ. ५. भा. १३७–१४३ ॥२७॥

मंतो हविज्ज कोई विज्जा उ ससाहणा न दायव्वा। तुच्छा गारवकरणं पुव्वाहीया उ करेज्जा ॥१४०॥

तस्याः स्याद्गौरवमात्मनोऽतिशयेन कुर्यात् या तु पूर्वाधीता पूर्वगृहीता विद्या सा प्रागुक्तयतना क्रमेण कुर्यात् ॥

अज्जाणं गेलन्ने संथरमाणे सयं तु कायव्वं। वोच्चत्थमास चउरो लहु गुरुगा थेरए तरुणे ॥१४१॥

१८ आर्यिका यदि ग्लानप्रयोजने स्वयं समर्थास्ततः स्वयमेव ताः कुर्वन्ति। एवं निर्ग्रन्था अपि भावनोयाः। यदि पुन-
र्विपर्यासः क्रियते, यथा निर्ग्रन्थानां ग्लानत्वे संस्तरति निर्ग्रन्थ्यो यदि कुर्वन्ति, निर्ग्रन्थीनां वा यदि निर्ग्रन्था इति तदा तस्मिन्
विपर्यासे स्थविरे कारके प्रायश्चित्तं चत्वारो लघुकाः, तरुणे चत्वारो गुरुकाः। सम्प्रति कल्पे नानात्वं भावयति–

जिणकप्पिए न कप्पइ दप्पेणं अजयणाइ थेराण। कप्पइ य कारणम्मी जयणाए गच्छे स साविक्खो ॥१४२॥

२२ जिनकल्पिके स्वपक्षेण परपक्षेण वा वैयावृत्त्यकारापणं न कल्पते, तथा कल्पत्वात्। स्थविराणां स्थविरकल्पिकानां पुन-
र्दर्पेण निष्कारणमयतनया च न कल्पते॥ कारणे यतनया पुनः कल्पते यतो गच्छे स सापेक्ष इति॥

चिट्ठइ परियातो से तेण च्छेदाइया न पावेंति। परिहारं च न पावेइ परिहार तवोत्ति एगट्टं ॥१४३॥

यतः से तस्य पर्यायस्तिष्ठति तेन कारणेन च्छेदादिकास्तस्य न प्राप्नुवन्ति न भवन्तीत्यर्थः। परिहारमपि च न प्राप्नोति
२६ कारणे यतनया कारापणात् परिहारस्तप इत्येकार्थम्॥ इति श्रीमलयगिरिविरचितायां व्यवहारटीकायां पञ्चमोद्देशकः समाप्तः॥

पञ्चमोद्देशके ग्रन्थाङ्क० ९०५

# પાંચમા ઉદ્દેશના સૂત્રોના વિષયોનો સાર.

(૧) પ્રવર્તિની જે સાધ્વીઓમાં અગ્રેસર છે તેને શિયાળે ઉનાળે એક સાધ્વીને સાથે રાખી જુદું ન વિચરાય, (૨) પરંતુ
બે સાધ્વીઓને સાથે રાખી વિચરાય, (૩) ગણાવચ્છેદિની જે પ્રવર્તિનીથી બીજે નંબરે છે તેને શિયાળે ઉનાળે બીજી બે
સાથે રાખી ન વિચરાય, (૪) પણ બીજી ત્રણ સાથે રાખીને વિચરાય, તેજ પ્રમાણે ચોમાસે પ્રવર્તિનીને રહેવું હોય તો (૫)
બીજી બે સાધ્વી સાથે ન કલ્પે (૬) પણ ત્રણ બીજી સાધ્વી સાથે હોય તો કલ્પે, (૭) ગણાવચ્છેદિનીને બીજી ત્રણ સાધ્વી
સાથે ન કલ્પે, (૮) પણ બીજી ચાર સાથે હોય તો કલ્પે (૯) કોઇ મોટું ગામ શહેર વિગેરે હોય જ્યાં ઘણાં સાધુ સાધ્વી
રહેતાં હોય, તેવા ક્ષેત્રમાં જુદા જુદા સંઘાડાની પ્રવર્તિનીઓ ગણાવચ્છેદિનીઓ રહેતી હોય ત્યાં પ્રવર્તિની સાથે બે અને
ગણાવચ્છેદિની સાથે ત્રણ સાધ્વીઓ હોય, તેમને એકબીજાની નિશ્રાએ શિયાળે ઉનાળે વિચરવું કલ્પે છે, તેજ પ્રમાણે વર્ષા-
ઋતુમાં ઘણા સંઘાડા હોય ત્યાં (૧૦) પ્રવર્તિની સાથે ત્રણ ગણાવચ્છેદિની સાથે ચાર સાધ્વી હોય તોપણ એકબીજાની નિશ્રાએ
રહેવું કલ્પે છે, ( ઉપરના દશ સૂત્રોમાં સાધ્વીઓને પરસ્પર નિશ્રા રાખીને શિયાળે ઉનાળે વિચરવાથી કે ચોમાસું રહ્યાં હોય
ત્યાં પરસ્પર પ્રેમ રાખવાથી જ્ઞાનદર્શન ચારિત્રની વૃદ્ધિ થાય તે બતાવ્યું છે, (૧૧) વિચરતી સાધ્વીઓમાં જે અગ્રેસર હોય તે
રસ્તામાં કાળ કરી જાય તો તેનાથી બીજે નંબરે જે યોગ્યતાવાળી હોય તેને અગ્રેસર પદ આપવું, જો ન હોય તો પછી બધી
સાધ્વીઓએ ત્યાંથી વિહાર કરી જ્યાં પોતાના સંઘાડાને મળતી સાધ્વીઓ હોય ત્યાં જવાથી છેદ કે પરિહાર તપનું પ્રાયશ્ચિત્ત
ન આવે, પણ જો તેમ ન કરે તો પ્રાયશ્ચિત્ત આવે (૧૨) ચોમાસામાં પણ કદી અગ્રેસર કાળ કરે તો લાયક સાધ્વીને અગ્રેસર

અગ્રેસર સાધ્વી યાચી લેવી, (૧૩) પ્રવર્ત્તિની પદ આપવું, નહિ તો આચાર્ય પાસે સ્થિરતાવાળી સાધ્વીઓએ જઇ બીજી અગ્રેસર સાધ્વી યાચી લેવી, (૧૩) પ્રવર્ત્તિની કાળ ધર્મ વખતે કહે કે અમુક સાધ્વીને અગ્રેસર બનાવજો, પણ તેના મરણ પછી સાધ્વીઓને તે યોગ્યતાવાળી દેખાય તો અગ્રેસર પદ આપવું, પણ યોગ્યતા ન હોય તો તે પદ ન આપવું, પરંતુ બીજી કોઇ લાયક ન હોય તો તેને થોડા કાળ માટે આપવું, પણ જ્યારે લાયક મળે ત્યારે તેને કહેવું કે અગ્રેસર પદ છોડી દો, તમારામાં તે ગુણો ન હોવાથી સંઘાડાનું રક્ષણ થવું કઠણ છે, આમ કહેવાથી તે પદ છોડી દે, તો તેને છેદનું કે પરિહાર તપનું પ્રાયશ્ચિત્ત ન આવે, યોગ્યતાવાળીને તે પદ આપ્યા પછી બીજી સાધ્વીઓ તેની ઉચિત રીતે આજ્ઞા ન માને, સેવા ન કરે તો તે દરેક આજ્ઞા ઉલંઘન કરનારને ( ચો. ઉ. ના ૧–૧૪ પૃ. ૧૨–૪–૧૩ પ્રમાણે ) છેદ કે પરિહાર તપનું પ્રાયશ્ચિત્ત આવે, (૧૪) પ્રવર્ત્તિની મોહ કે રોગના કારણે કંટાળી બોલે કે મારા ગયા પછી અમુક સાધ્વીને અગ્રેસર પદ આપજો, પણ તેની યોગ્યતા હોય તો આપવું, ન હોય તો ન આપવું તે બધુ ૧૩ મા સૂત્ર પ્રમાણે જાણવું, ૧૧ થી ૧૪ સૂત્ર સુધીમાં લાયક સાધ્વીને અગ્રેસર પદ આપવાનું છે, અને તેની આજ્ઞા પ્રમાણે સૌએ ચાલવાનું છે, કારણ પડે ઓછી યોગ્યતાવાળીને આપ્યું હોય પણ વધારે લાયક મળે તો તેણે તે પદ છોડવાનું બતાવ્યું છે, કોઇ પણ લાયક ન હોય તો આચાર્ય પાસે જઈ નવી અગ્રેસર યાચવાનું છે. (૧૫) સાધ્વીઓના અગ્રેસર પદને યોગ્ય જુવાન સાધ્વી હોય તે આચારપ્રકલ્પ જે નિશીથ સૂત્રનું અધ્યયન છે તે સૂત્ર તથા અર્થ સમજીને ગોખી રાખવાનું છે, તે ભૂલી જાય તો આચાર્ય તેને પૂછે કે કેમ ભૂલી જવાયું, રોગાદિથી કે પ્રમાદથી ? જો પ્રમાદથી કહે તો તે બદલ તેને જીંદગી સુધી પ્રવર્ત્તિની કે ગણાવચ્છેદિનીનું પદ ન મળે, પણ જો એમ ખાત્રી કરી આપે કે તેને રોગ વિગેરે કારણથી ભૂલી જવાયું છે તો તૈયાર કરી આપેથી તેની યોગ્યતા પ્રમાણે પ્રવર્ત્તિની કે ગણાવચ્છેદકનું પદ મળે તેમ પોતે ધારણ પણ કરે, પણ કથા

પ્રમાણે તૈયાર ન કરે તો તે પદ ન અપાય, તેમ તે ધારણ પણ ન કરી શકે ( આ નિશીથ સૂત્રમાં અપરાધીનું સ્વરૂપ તથા
તેનું વિગતવાર પ્રાયશ્ચિત્ત બતાવેલું છે ) (૧૬) સાધ્વી પ્રમાણે જુવાન સાધુ જો નિશીથ સૂત્ર શીખીને ભૂલી ગયો હોય તો
પ્રમાદથી ભૂલ્યો હોય તો તેને ફરી આચાર્ય પદથી માંડીને ગણાવચ્છેદક સુધીનું એક પણ પદ ન મળે, રોગાદિ કારણે ભૂલ્યો
હોય તો યાદ કરેથી તેની યોગ્યતા પ્રમાણે પદ મળે, ન કરે તો ન મળે, (૧૭) જે સાધુઓ ઉમરે વૃદ્ધ છે અને પૂર્વે નિશીથ
સૂત્ર અર્થને ભણ્યા હોય, અને રોગાદિ કારણે ભૂલી ગયા હોય, તેઓ યાદ કરે અથવા યાદ ન થાય તોપણ તેમને આચાર્યપદ
થી માંડીને ગણાવચ્છેદક સુધીનું પદ મળે, અને પોતે ધારણ પણ કરે, તે પ્રમાણે સાધ્વીને પણ છે ( વૃદ્ધ સાધુ સાધ્વી ભૂલી
જાય, પણ ઘણા કાળ સુધી પરિચિત હોવાથી પરમાર્થ યાદ રાખે છે, ) (૧૮) ઉમરે વૃદ્ધ અને ગુણે પણ વૃદ્ધ એવા સાધુ
નિશીથ સૂત્ર ભૂલી ગયા હોય તેવાને પણ તે યાદ કરવાની ફરજ હોવાથી પોતાની જોડે બીજા નાના સાધુ
ભણેલા હોય તેની પાસે બેસીને શીખી લેવું, ( ત્યાં વંદનવિનય કરવાનું છે તે કરીને પાઠ લેવો ) પણ વધારેવાર અશક્તિથી
ન બેસાય તો સુઇને સીધા સુઇને પાશું ફેરવીને પણ બે ત્રણવાર પૂછવું કલ્પે, તેમ બીજા સાધુએ યાદ કરાવવું જોઇએ,
(૧૯) જે સાધુ સાધ્વીને પરસ્પર ગોચરીવ્યવહાર છે, તેવા જુના સંઘાડાના સાધુ સાધ્વી મળ્યા હોય ત્યારે જો કોઇ ગીતાર્થ
આલોચના યોગ્ય હોય તેની પાસે આલોચવું, પણ માંહોમાંહે ન આલોચવું, પણ તેવા ગીતાર્થ ન હોય તો પરસ્પર સાધુ
સાધુને સાધ્વી સાધ્વીને આલોચવું કલ્પે ( સામાન્ય દોષ પણ યાદ કરીને પરસ્પર કહેવાથી આત્મા હળવો થાય છે ) (૨૦)
તેજ પ્રમાણે સાધુ સાધ્વીને ગોચરીવ્યવહાર હોય તેમને વૈયાવચ્ચ કરનાર જુદા હોય તો તે વૈયાવચ્ચ કરે, પણ માંહોમાંહે
ન કરે, પણ વૈયાવચ્ચ કરનાર ન હોય તો પરસ્પર વૈયાવચ્ચ કરે, કરાવે, (૨૧) સાધુને રાતના કે વિકાળમાં પરોઢીયે કે સંધ્યા

વ્ય. સૂ. ઉ. પ. ॥૨૧॥

કાળે સાપ કરડે તો પ્રથમ સાધુ અને પછી સાધ્વી કે પુરૂષ કે સ્ત્રી યોગ્યતા પ્રમાણે દવા કરે, તેથી સાધુ સાધ્વીને પરિહાર તપ કે બીજું પ્રાયશ્ચિત્ત ન આવે, આ સ્થવિર કલ્પીનો કાયદો છે, જિનકલ્પીને સાપ કરડે તો પણ દવા બીજા કોઇ પાસે ન કરાવે, તે તેનો આચાર નથી.

વ્યવહાર સૂત્રના પાંચમા ઉદ્દેશાનો ગૂજરાતિ ભાષામાં સાર સમાપ્ત ॥

ओँ अर्हं नमः

# सभाष्ये व्यवहारसूत्रे षष्ठोद्देशकः प्रारभ्यते.

व्याख्यातः पञ्चमोद्देशकः। सम्प्रति षष्ठो व्याख्येयः। तस्येदमादि सूत्रम्—

भिक्खू य इच्छेज्जा नाय-विहिं एत्तए, नो से कप्पइ थेरे अणापुच्छित्ता नायविहिं एत्तए, कप्पइ से थेरे आपुच्छित्ता नायविहिं एत्तए। थेरा य से वियरेज्जा, एवं से कप्पइ नायविहिं एत्तए, थेरा य से नो वियरेज्जा, एवं से नो कप्पइ नायविहिं एत्तए। जं तत्थ थेरेहिं अविइण्णे नायविहिं एइ, से सन्तरा छेए वा परिहारे वा। नो से कप्पइ अप्पसुयस्स अप्पागमस्स एगाणियस्स नायविहिं एत्तए; कप्पइ से जे तत्थ बहुस्सुए बज्झागमे तेणसद्धिं नायविहिं एत्तए। तस्स तत्थ पुव्वागमणेणं पुव्वाउत्ते चाउलोदणे कप्पइ पडिगाहेत्तए; से जे तत्थ पुव्वागमणेणं पच्छाउत्ते चाउलोदणे, नो से कप्पइ पडिगाहेत्तए। सू० १ अथास्य सूत्रस्य कः सम्बन्ध इत्यत आह—

કાળે સાપ કરડે તો પ્રથમ સાધુ અને પછી સાધ્વી કે પુરૂષ કે સ્રી યોગ્યતા પ્રમાણે દવા કરે, તેથી સાધુ સાધ્વીને પરિહાર તપ કે બીજું પ્રાયશ્ચિત્ત ન આવે, આ સ્થવિર કલ્પીનો કાયદો છે, જિનકલ્પીને સાપ કરડે તો પણ દવા બીજા કોઇ પાસે ન કરાવે, તે તેનો આચાર નથી.

વ્યવહાર સૂત્રના પાંચમા ઉદ્દેશાનો ગૂજરાતિ ભાષામાં સાર સમાપ્ત ॥

ओं अर्हं नमः

## सभाष्ये व्यवहारसूत्रे षष्ठोद्देशकः प्रारभ्यते.

व्याख्यातः पञ्चमोद्देशकः । सम्प्रति षष्ठो व्याख्येयः । तस्येदमादि सूत्रम्—

भिक्खू य इच्छेज्जा नाय-विहिं एत्तए, नो से कप्पइ थेरे अणापुच्छित्ता नायविहिं एत्तए, कप्पइ से थेरे आपुच्छित्ता नायविहिं एत्तए । थेरा य से वियरेज्जा, एवं से कप्पइ नायविहिं एत्तए, थेरा य से नो वियरेज्जा, एवं से नो कप्पइ नायविहिं एत्तए । जं तत्थ थेरेहिं अविइणणे नायविहिं एइ, से सन्तरा छेए वा परिहारे वा । नो से कप्पइ अप्पसुयस्स अप्पागमस्स एगाणियस्स नायविहिं एत्तए; कप्पइ से जे तत्थ बहुस्सुए बज्झागमे तेणसद्धिं नायविहिं एत्तए । तस्स तत्थ पुव्वागमणेणं पुव्वाउत्ते चाउलोदणे कप्पइ पडिगाहेत्तए; से जे तत्थ पुव्वागमणेणं पच्छाउत्ते चाउलोदणे, नो से कप्पइ पडिगाहेत्तए । सू० १ अथास्य सूत्रस्य कः सम्बन्ध इत्यत आह—

१

छेयणदाहनिमित्तं मंडलिडक्के च देहगेलन्ने । पाउग्गो सहहेउं नायविहिं सुत्तसंबंधो ॥ १ ॥

सर्पेण दष्टः सर्पदंशस्थानस्य छेदननिमित्तं वा ज्ञातविधिं गन्तुमिच्छति । अथवा मण्डलिसर्पेण दष्टस्ततो दीर्घं ग्लानत्वं जातं, तस्मिन् सति प्रायोग्यौषधहेतोर्ज्ञातविधौ गमनं भवति । ततस्तत्प्रतिपादनार्थमेव सूत्रारम्भ इति सूत्रसम्बन्धः । अथवायं सम्बन्धः ॥

गेलण्णमहिकयं वा, गिलाणहेउं इमो वि आरंभो । आगाढं च तदुत्तं, सहणीयतरं इमं होंति ॥ २ ॥

वा शब्दः प्रकारान्तरद्योतने । ग्लानत्वमनन्तरसूत्रेऽधिकृतमयमपि च सूत्रारम्भो ग्लानहेतुरिति सूत्रसम्बन्धः । केवलं यदि अनन्तरसूत्रे उक्तं ग्लानत्वं तदागाढं कालक्षेपासहनात् । इदं त्वधिकृतसूत्रसूचितं सहनीयतरं ज्ञातविधिं गन्तुं शक्तत्वादिति एवमनेन सम्बन्धेनायातस्यास्य व्याख्या—भिक्षुश्च शब्दात् भिक्षुकी च इच्छेत् ज्ञातविधिं स्वजनभेदमागन्तुं तस्य न कल्पते स्थविरान् अनापृच्छ्य ज्ञातविधिमागन्तुं यावत्करणादेवं परिपूर्णपाठः । 'कप्पति थेरा आपुच्छित्ता नायविहिं एत्तए थेरा य से वियरेज्जा । एवं से कप्पइ नायविहिं एत्तए जं तत्थ थेरेहिं अविच्चिणे नायविहिं एइ से अंतरा छेदे वा परिहारे वा ॥'

इदं प्राग्वत् । नो से कप्पइ इत्यादि न से तस्य कल्पते, । अल्पश्रुतस्यागीतार्थस्य अल्पागमस्य बहिः शास्त्रेष्वतिपरिचयस्याविद्यमाननिजागमस्य एकाकिनो ज्ञातविधिमागन्तुं, कल्पते से तस्य यः सूत्रगच्छे बहुश्रुतसूत्रापेक्षया बह्वागमार्थापेक्षया तेन सार्धं ज्ञातविधिमागन्तुं । तत्र णमिति वाक्यालङ्कारे । तस्य ज्ञातविधिमागतस्य पश्चादागमनेन आगमनात् पश्चात् यः पूर्वायुक्तश्चाउलोदनः पूर्वायुक्त इति केचित् व्याचक्षते । आगमनात्पूर्वं तुल्यमारब्धो रन्धनाया अपरे व्याचक्षते

समीहितमेतन् मतद्वयमप्यसंगतमारब्धे समीहिते च पुनः प्रक्षेपसंभवात्तस्मात्पूर्वायुक्त इति किमुक्तं

आगमनात्पूर्वं पाकाय समीहितमेतन् मतद्वयमप्यसंगतमारब्धे समीहिते च पुनः प्रक्षेपसंभवात्तस्मात्पूर्वायुक्त इति किमुक्तं आगमनात्पूर्वं पाकाय समीहितमेतन् मतद्वयमप्यसंगतमारब्धे

भवति आगमनात्पूर्वं गृहस्थैः स्वभावेन रध्यमानः स तन्दुलौदनो भिलिङ्गसूपो नाम सस्नेहसूपः कल्पते प्रतिग्रहीतुं योऽसो

तत्र पूर्वागमनेन पूर्वमागताः साधव इति हेतोः पश्चादायुक्तप्रवृत्तस्तंदुलौदनो भिलिंगसूपो वा नासौ कल्पते प्रतिग्रहीतुम्। एष

सूत्रसंक्षेपार्थः। अत्र भाष्यकारो ज्ञातविधिपदं व्याख्यानयति॥

**अम्मापितिसंबंधो पुव्वं पच्छा व संथुया जे तु। एसो खलु नायविही गोगा भेया य एक्केक्के ॥३॥**

मातृद्वारेण पितृद्वारेण च यः सम्बन्ध एष ज्ञातविधिः। अथवा ये पूर्वं संस्तुता मातापित्रादयो ये च पश्चात्संस्तुताः श्वश्रूश्वशूरादय एष समस्तोऽपि ज्ञातविधिरेकैकस्मिंश्च मातृद्वारे पितृद्वारे वा यदि वा पूर्वं संस्तुते पश्चात्संस्तुते वानेके भेदाः

अनेन विधिशब्दो भेदवाची व्याख्यातः। अधुना निर्युक्तिविस्तरः—

**नायविहिगमणे लहुगा आणाइविराहसंजमायाए। संजमविराहणा खलु उग्गमदोसो तहिं हुज्जा ॥४॥**

निष्कारणे विधिनापि ज्ञातविधौ गन्तुं न कल्पते, यदि विधिनापि निष्कारणे ज्ञातविधौ गमनं करोति, तर्हि प्रायश्चित्तं चत्वारो लघुकाः। तथा आज्ञादयो दोषास्तथा संयमे आत्मनि च विराधना तत्र संयमविराधना यतस्तत्र खलु निश्चित-

मुद्गमदोषा आधाकर्मादयो भवेयुः॥ कथमुद्गमदोषा भवेयुरत आह—

**दुल्लभलाभा समणा नीया नीहेण आहकम्मादी। चिर आगयस्स कुज्जा, उग्गमदोसं तु एगयरं ॥५॥**

च्छेयणदाहनिमित्तं मंडलिडक्के च देहगेलन्ने । पाउग्गो सहहेउं नायविहिं सुत्तसंबंधो ॥ १ ॥

सर्पेण दष्टः सर्पदंशस्थानस्य च्छेदननिमित्तं वा ज्ञातविधिं गन्तुमिच्छति । अथवा मण्डलिसर्पेण दष्टस्ततो दीर्घं ग्लानत्वं जातं, तस्मिन् सति प्रायोग्यौषधहेतोर्ज्ञातविधौ गमनं भवति । ततस्तत्प्रतिपादनार्थमेव सूत्रारम्भ इति सूत्रसम्बन्धः । अथवायं सम्बन्धः ॥

गेलरणमहिकयं वा, गिलाणहेउं इमो वि आरंभो । आगाढं च तदुत्तं, सहणीयतरं इमं होंति ॥ २ ॥

वा शब्दः प्रकारान्तरद्योतने । ग्लानत्वमनन्तरसूत्रेऽधिकृतमयमपि च सूत्रारम्भो ग्लानहेतुरिति सूत्रसम्बन्धः । केवलं यदि अनन्तरसूत्रे उक्तं ग्लानत्वं तदागाढं कालक्षेपासहनात् । इदं त्वधिकृतसूत्रसूचितं सहनीयतरं ज्ञातविधिं गन्तुं शक्तत्वादिति एवमनेन सम्बन्धेनायातस्यास्य व्याख्या—भिक्षुश्च शब्दात् भिक्षुकी च इच्छेत् ज्ञातविधिं स्वजनभेदमागन्तुं तस्य न कल्पते स्थविरान् अनापृच्छ्य ज्ञातविधिमागन्तुं यावत्करणादेवं परिपूर्णपाठः । 'कप्पति थेरा आपुच्छित्ता नायविहिं एत्तए थेरा य से वियरेज्जा । एवं से कप्पइ नायविहिं एत्तए जं तत्थ थेरेहिं अविचित्तरणे नायविहिं एइ से अंतरा च्छेदे वा परिहारे वा ॥'

इदं प्राग्वत् । नो से कप्पइ इत्यादि न से तस्य कल्पते, । अल्पश्रुतस्यागीतार्थस्य अल्पागमस्य बहिः शास्त्रेष्वतिपरिचयस्याविद्यमाननिजागमस्य एकाकिनो ज्ञातविधिमागन्तुं, कल्पते से तस्य यः सूत्रगच्छे बहुश्रुतसूत्रापेक्षया बह्वागमार्थो- [illegible] सार्धं ज्ञातविधिमागन्तुं । तत्र णमिति वाक्यालङ्कारे । तस्य ज्ञातविधिमागतस्य पश्चादागमनेन आगमनात् [illegible] व्याचक्षते । आगमनात्पूर्वं तुल्यमारब्धो रन्धनाया अपरे व्याचक्षते

**अक्कंदठाणे ससुरे उवरए पेल्लणाए उवस्सग्गे; पंथे रोवणभवए उहावण अम्ह कम्मपरा ६ घातो ७ ॥ १७ ॥**
**अणुलोमे ८ अभियोग ९ विसे १० सयं च ससुरेणं। पंतवण बंधरंभण, तं वा ते वाऽति वायाति ११ ॥ १८ ॥**

आक्रन्दस्थानद्वारं प्रथमं । द्वितीयं स्वसुरेणापवरके चिप्त इति द्वारं, तृतीयं प्रेरणाद्वारं, चतुर्थमुपसर्गद्वारं, पञ्चमं पथिरोदनं भृतके भार्या इति द्वारं, षष्टमं अपभ्राजनाद्वारं यथाऽस्माकमेष कर्मकर आसीत्, सप्तमं च्छागघातद्वारं अष्टममनुलोमद्वारं, नवममभियोग्यद्वारं, दशमं विषद्वारं । स्वयं श्वशुरेण प्रान्तापणबन्धरोधनं क्रियते ततः स कोपात्तश्वशुरं निपातयेत्, विनाशयेत् वा, स्वशुरप्रभृतयस्तं साधुमतिपातयेयुरित्येकादशं द्वारमिति द्वारगाथाद्वयसमासार्थः ॥ साम्प्रतमेतदेव विवरीषुः प्रथमत आक्रन्दस्थानद्वारमाह—

**दीसंतोवि हु नीया पव्वयहियंपि संपकप्पंति । कलुणकिवणाणि किं पुण, कुणमाणा एगसेज्जाए ॥**

सेनापतौ मृते स तत्र ज्ञातविधौ गतस्तत्र दृश्यमाना अपि निजकाः पर्वतहृदयमपि पर्वतसदृशमानसमपि साधुं संयमात् स प्रकम्पयन्ति । सम्यगन्तर्लीनीभूय प्रकर्षेण च्यावयन्ति किं पुनरेकस्यां शय्यायां वसतौ करुण—कृपणानि रोदनानि कुर्वाणास्तानि कुर्वाणाः सुतरां संयमाद् भ्रंशयंति ॥१९॥

**अक्कंदठाणदितो तेसिं सोच्चा उ नायगादीणं; पुव्वावरत्तरोवण जाय अणाहा वए कोवि ॥ २० ॥**

सोधिकृतः साधुर्यत्र ते ज्ञात्वा क्रंदंति तस्मिनाक्रंदस्थाने स्थितः पूर्वरात्रेऽपररात्रे च रोदनं तेषां ' ज्ञातकादीनां '

व्य. सू. सो ववहारविहण्णू अणुमज्जित्ता सुत्तोवएसेणं । सीसस्स देइ आणं तस्स इमं देहि पच्छित्तं॥ ६६१ ॥
३ स आलोचनाचार्यो व्यवहारविधिज्ञः कल्पव्यवहारात्मके च्छेदश्रुते अनुमय्य पौर्वापर्यालोचनेन श्रुततात्पर्यो निषण्णो भूत्वा श्रुतोप-
॥ ८७ ॥ देशेन रागद्वेषतोऽन्यथा तस्य पूर्वप्रेषितस्य स्वशिष्याज्ञां ददाति । यथा गत्वा तस्येदं प्रायश्चित्तं देहि । किं तदित्याह—

१८ पढमस्स य कज्जस्स य दसविहमालोयणं निसामेत्ता । नक्खत्ते भे पीडासुक्के मासं तवं कुणसु ॥ ३६२ ॥

प्रथमस्य कार्यस्य दर्पलक्षणस्य सम्बन्धिनीं दर्पादिपदभेदतो दशविधां दशप्रकारामालोचनां निशम्याकर्ण्य परिभावितं यथा नक्षत्र-शब्देनात्र मासः सूचितः । मासे मासप्रमेयप्रायश्चित्तविषयो भवतः पीडाव्रतषट्कपीडा कायषट्कपीडा कल्पादिषट्कपीडा वा आसीत् सापि च सुक्केत्ति शुक्ले इति सांकेतिकी संज्ञेति उद्घातं मासं तपः कुर्यात् । यदि चातुर्मासं षण्मासं वा लघुप्रायश्चित्तमापन्नो भवेत्
२२ तदेवं कथयति—

पढमस्स य कज्जस्स य दसविहमालोयणं निसामेत्ता । नक्खत्ते भे पीला चउमासतवं कुणसु सुक्के ॥६६३॥

पढमस्स य कज्जस्स य दसविहमालोयणं निसामेत्ता । नक्खत्ते भे पीला छम्मासतवं कुणसु सुक्के ॥६६४॥

गाथा द्वयमपि व्याख्यातार्थम् ।

२६ एवं ताव उग्घाए अणुग्घाए चेव किण्हंमि । मासे चउमास छम्मासियाणि छेयं अतो वुच्छं ॥ ६६५ ॥

एवमुक्तेन प्रकारेण तावदुद्घाते लघुरूपे मासचतुर्मासषण्मासलक्षणे प्रायश्चित्ते समापतितेऽभिहितमनुद्घाते गुरुके समापतिते तान्येव मासे चतुर्मासषण्मासानि किण्हमीत्यनेन पदेन विशेषितानि वक्तव्यानि । तद्यथा—

पढमस्स य कज्जस्स य दसविहमालोयणं निसामेत्ता। नक्खत्ते भे पीला कण्णे मासं तवं कुज्जा ॥ ६६६ ॥

उ. १०. भा. ६६१–६७१ ॥ ८८ ॥

पढमस्स य कज्जस्स य दसविहमालोयणं निसामेत्ता। नक्खत्ते भे पीला चउमास तवं कुणसु किण्हे ॥६६७॥

पढमस्स य कज्जस्स य दसविहमालोयणं निसामेत्ता। नक्खत्ते भे पीडा छम्मास तवं कुणसु किण्हे ॥६६८॥

छेयं अतो वोच्छामित्ति अतः परं च्छेदमुपलक्षणमेतत्। मूलादिकं च प्रायश्चित्तं वक्ष्ये। तदेवाह।

च्छिंदितु व भोयणं गच्छंतु य तस्स साहूणो मूलं। अव्वावडा व गहे अबिइया वा पविहरंतु॥ ६६९ ॥

वा शब्दो विकल्पने अथवा यदि च्छेदप्रायश्चित्तमापन्नो भवति तदेवं संदिशति भोजनं छिंदतु। अत्र विशेषव्याख्यानार्थमिदं गाथाद्वयमाह—

छब्भागंगुलपणगे दसरायतिभागअद्धपण्णरसे। वीसाए ति भागूणं तु छब्भागूणं तु पणुवीसे ॥ ६७० ॥

मास चउमास छक्के अंगुलचउरो तहेव छच्चेव। एए छेयवियप्पा नायव्व जहक्कमेणं तु ॥ ६७१ ॥

पञ्चके पञ्चरात्रिं दिवप्रमाणे च्छेदे समापन्ने एवं संदेशं कथयति—भाजनरूपस्याङ्गुलषड्भागे छिन्दन्तु दशरात्रे च्छेदे समापतिते त्रिभागमङ्गुलस्य भाजनं च्छिन्दतु पञ्चदशे पञ्चदशरात्रे च्छेदे अर्धमङ्गुलस्य, विंशतौ विंशति रात्रिंदिवच्छेदे त्रिभागोनमङ्गुलं पञ्चविंशतौ पञ्चविंशतिरात्रिंदिव च्छेदे षड्भागोनमङ्गुलं मासे मासप्रमाणे च्छेदे प्राप्ते परिपूर्णमेकमङ्गुलं चतुर्मासे चत्वार्यङ्गुलानि षण्मासे षडङ्गुलानि छेद्यानि संदिशति। एवमेते यथाक्रमेण च्छेदविकल्पाः संदेशा ज्ञातव्याः। गच्छंतु तस्स साहूणो मूलमिति यदि मूलं प्रायश्चित्तमापन्नो भवति तदेव

संदिशति । योऽन्योऽसौ दूरे साधुर्गच्छाधिपतिर्विहरति तस्य मूलं समीपं गच्छन्तु तस्य समीपं गत्वा प्रायश्चित्तं प्रतिपद्यतामिति भावः । अव्वावडा व गच्छे इति अथानवस्थाप्यं प्रायश्चित्तमापन्नस्तत एवं कथयत सन्देशं यथा गच्छे अव्यापृता भवत, कंचित्कालं गच्छस्य वर्तमानिकामवहन्तस्तिष्ठन्तु । अबिइया वा प्रविहरन्तु इति पाराञ्चितप्रायश्चित्तापत्तौ पुनरेवं संदिशति किंचित्कालमद्वितीयका एकाकिनः प्रविहरन्तु । तदेवं दर्पेण सेविते प्रायश्चित्तमधुना कल्पे यतनया सेविते प्राह—

१८ **बिइयस्स य कज्जस्स य तहियं चउवीसतिं निसामेत्ता। नमोकारे आउत्ता भवंतु एवं भणिज्जसि ॥६७२॥**

द्वितीयस्य कार्यस्य कल्पलक्षणस्य सम्बन्धिनीं चतुर्विंशतिं निशम्याकर्ण्य तत्रैवं संदिशति नमस्कारे भवन्त आयुक्ता भवन्तु । एवं भणेत् ब्रूयात्—

**एवं गंतूण तहिं जहोवएसेण देहि पच्छित्तं। आणाए एस भणितो ववहारो धीरपुरुसेहिं ॥ ६७३ ॥**

२२ एवमुक्तप्रकारेणाचार्यवचनमुपगृह्य तत्र गत्वा यथोपदेशेन ददाति प्रायश्चित्तमेष आज्ञया व्यवहारो धीरपुरुषैर्भणितः ।

**एसाणाववहारो जहोवएसं जहक्कमं भणितो। धारण ववहारो पुण सुण वच्छ जहक्कमं वुच्छं ॥ ६७४ ॥**

एष आज्ञाव्यवहारो यथोपदेशं यथाक्रमं भणितः कथितः । अत ऊर्ध्वं धारणाव्यवहारो वक्तव्यस्तं यथाक्रममहं वक्ष्ये इति शृणु ॥

**उद्धारणा विधारणा संधारण संपधारणा चेव। नाऊण धीरपुरिसा धारणववहारं तं बिंति ॥ ६७५ ॥**

२६ धारणायाश्चत्वार्येकार्थिकानि । तद्यथा—उद्धारणा, विधारणा, संधारणा, संप्रधारणा च । तया धारणया च्छेदश्रुतार्थावधारणलक्षणया यः सम्यक् ज्ञात्वा व्यवहारः प्रयुज्यते, तं धारणाव्यवहारं धीरपुरुषा ब्रुवते, । सम्प्रति तेषामेव चतुर्णामेकार्थिकानां

ब. १०. भा. ६७२-६८० ॥ ८९ ॥

शब्दव्युत्पत्तिमाह—

पावल्लेण उवेच्च व उद्धियपयधारणा उ उद्धारा। विविहेहिं पगारेहिं धारेयव्वं वि धारेउ ॥ ६७६ ॥

सं एगी भावस्सी द्दियकरणा ताणि एक्कभावेण धारेयत्थपयाणि उ तम्हा संधारणा होइ ॥ ६७७ ॥

जम्हा संपहारेउं ववहारं पउंजती। तम्हा कारणा तेण नायव्वा संपहारणा ॥ ६७८ ॥

उत्प्राबल्येन उपेत्य वा उद्धृतानामर्थपदानां धारणा उद्धारा, उद्धारणा विविधैः प्रकारैः विशिष्टं चार्थमुद्धृतमर्थपदं यया धारणया स्मृत्या धारयति सा विधारा विधारणा। तथा समशब्द एकाकी भावे धृतानुधारणा तान्यर्थपदानि आत्मना सह एकभावेन यस्माद्धारयति तस्माद् धारणा संधारणा भवति; तथा यस्मात् सन्धार्य सम्यक् प्रकर्षेणावधार्य व्यवहारः प्रयुंक्ते तस्मात्कारणात्तेन शिष्येण सम्प्रधारणा भवति ज्ञातव्या। धारणाववहारे सो पउंजियव्वो ॥

धारणाववहारे सो पउंजियव्वो केरिसे पुरिसे। भन्नाति गुणसंपन्ने जारिसए तं सुणेहिति ॥ ६७९ ॥

एष धारणाव्यवहारः कीदृशे पुरुषे प्रयोक्तव्यः। सूरिराह भण्यते—यादृशे गुणसम्पन्ने प्रयोक्तव्यस्तं वक्ष्यमाणं शृणु तमेवाह—

पवयण जसंसि पुरिसे अणुग्गह विसारए तवस्सिंमि। सुस्सुयबहुस्सुयंमि य विवक्कपरियागसुद्धम्मि॥ ६८० ॥

प्रवचनं द्वादशाङ्गं श्रमणसंघो वा तस्य यस्य कीर्तिमिच्छति यः प्रवचनयशस्वी तस्मिन्, तथा यो दीयमानं प्रायश्चित्तं दीयमानव्यवहारं त्वानुग्रहं मन्यते सोनुग्राह विशारदोऽनुग्रहविशारदस्तास्मिन्, तपस्विनि तथा श्रुतं शोभनमाकर्णितं वहुश्रुतं येन स वहुश्रुतः किमुक्तं भवति ? यस्य वह्वपि श्रुतं न विस्मृतिपथमुपयाति स श्रुतवहुश्रुतः। अथवा वहुश्रुतोऽपि सन् यस्तस्योपदेशेन वर्तते स मार्गानुसारि श्रुतत्वात्

सुश्रुत वहुश्रुतः तथा तस्मिन् तथा विशिष्टो विनयौचित्यान्वितो वाक् परिपाको विशुद्धिर्यश्च यस्मिन् पुरुषे प्रयोक्तव्यः। एतदेवाह—

**एएसु धीरपुरिसा पुरिसजाएसु किंचि खलिएसु। रहिएवि धारयंता जहारिहं देंति पच्छित्तं ॥ ६८१ ॥**

एतेष्वनन्तरोदिते गुणसम्पन्नेषु पुरुषजातेषु किंचिन् मनाक् प्रमादवशान्मूलगुणविषये उत्तरगुणविषये वा स्खलितेषु रहितेऽपि असत्यप्यादिमे व्यवहारत्रये धीरपुरुषा अर्थपदानि कल्पप्रकल्पव्यवहारगतानि कानिचित् धारयित्वा यथार्हं ददति प्रायश्चित्तं सम्प्रति रहिएवि धारइत्ता इतस्य व्याख्यानमाह—

**रहिए नाम असन्ने आइल्लम्मिं ववहारतियगंमि। ताहेवि धारइत्ता वीमंसेऊण जं भणियं ॥ ६८२ ॥**

रहिते नाम असति अविद्यमानके व्यवहारत्रिके सति ततोपि धारयित्वा यद्भणिते भवति। किमुक्तं भवति? विमृश्य पूर्वालोचनेन देशकालाद्यपेक्षया सम्यक् छेदश्रुतार्थं परिभाव्य किमित्याह—

**पुरिसस्स अइयारं वियारइत्ताण जस्स जं जोग्गं। तं देंति उ पच्छित्तं जेणं देंती उ तं सुणए ॥ ६८३ ॥**

पुरुषस्यातीचारं द्रव्यतः क्षेत्रतः कालतो भावतश्च विचार्य यस्य यदर्हं प्रायश्चित्तं तस्य तत् ददाति। आचार्यः प्राह—येन ददाति तत् श्रृणु। तदेवाह—

**जो धारितो सुत्तत्थो अणुओगविहीए धीरपुरिसेहि। आलीणपलीणेहिं जयणाजुत्तेहिं दन्तेहि ॥ ६८४ ॥**

यो नाम धीरपुरुषैरालीनप्रलीनैर्यतनायुक्तैर्दान्तैश्चानुयोगविधौ व्याख्यानवेलायां श्रुतस्य धारितोऽविस्मृतीकृतस्तेन ददाति साम्प्रत माळीनादि पदानां व्याख्यानमाह—

उ. १०. भा. ६८१–६८९ ॥ ९० ॥

अल्लीणो णाणादिसु पदे पदे लीआ उ होंति पलीणा । कोहादी वा पलयं जेसि गया ते पलीणा उ ॥६८५॥

जयणाजुत्तो पयत्तवा दंतो जो उवरतो उ पावेहि । अहवा दंतो इंदिय दमेण नोइंदिएणं च ॥ ६८६ ॥

प्रलीनाऽथवा येषां क्रोधादयः प्रलयं गतास्ते प्रलीनाः । प्रकर्षेण ज्ञानादिषु आ समन्तात् लीना आलीनाः पदे पदे लीना भवन्ति

यतनायुक्तो नाम सूत्रानुसारतः प्रयत्नवान् दान्तो यः पापेभ्य उपरतोऽथवा दान्तो लीना लयं विनाशं गताः क्रोधादयो येषामिति व्युत्पत्तेः ।

नाम इन्द्रियदमेन नोइन्द्रियदमेन चान्यतः । तदेवं च्छेदश्रुतार्थधरणवशतो धारणाव्यवहार उक्तः साम्प्रतमन्यथा धारणाव्यवहारमाह—

अहवा जेणण्णइया दिट्ठा सोही परस्स कीरंति । तारिसयं चेवं पुणो उप्पण्णं कारणं तस्स ॥ ६८७ ॥

सो तंमि चेव दव्वे खेत्ते काले य कारिणे पुरिसो । तारिसयं अकरेंतो न हु सो आराहतो होइ ॥ ६८८ ॥

सो तंपि चेव दव्वे खेत्ते काले य कारणें पुरिसे । तारिसयं चिय भुया, कुव्वं आराहगो होइ ॥ ६८९ ॥

अथवेति प्रकारान्तरे येनान्यदा परस्य शोधिः क्रियमाणा दृष्टा स तत् सर्वं स्मरति । यथा एवं भूतेषु द्रव्यादिष्वेवंभूते कारणे जाते एवंभूतं प्रायश्चित्तं दत्तमिति पुनरन्यदास्य पुरुषस्योपलक्षणमेतदन्यस्य वा तादृशमेव पुनः कारणं समुत्पन्नं ततो यदि तस्मिन्नेव तादृश एवेत्यर्थः । द्रव्ये क्षेत्रे काले चशब्दाद्भावे च तादृश एव कारणे तस्मिन्नेव तादृशे वा पुरुषे तादृशः कुर्वन् रागेण वा दोषेण वा अन्यथा प्रायश्चित्तं ददानो वर्तते । तदा स न हु नैवं आराधको भवति । अथ स तस्मिन्नेव द्रव्ये क्षेत्रे काले भावे च कारणे पुरुषे च तादृशं करोति, स तदा आराधको भवति, धारणा व्यवहारस्यैव पुनरन्यथा प्रकारमाह—

वेयावच्चकरो वा सीसो वा देसहिंडगो वावि । दुम्मेहत्ता न तरइ आराहेउ बहुं जो उ ॥ ६९० ॥

तस्स उ उद्धरिऊण अत्थपयाइं देंति आयरियो । जेहिं उ करेइ कज्जं आहारेन्तो उ सो देसं ॥ ६९१ ॥

यथाचार्याणां वैयावृत्यकरो यो वा संमतः शिष्यो यस्तु वा देशहिण्डको देशदर्शनं कुर्वतः सहाय आसीत्। स समस्तच्छेदश्रुतार्थं दुर्मेधस्त्वान्नावधारयितुं शक्नोति, ततस्तस्योध्धृत्यानुगृहात् कानिचिदर्थपदान्याचार्या ददति यैः स च्छेदश्रुतस्य देशमवधारयन् कार्यं करोति, एष धारणाव्यवहारः । उपसंहारमाह—

धारणाववहारो सो जहक्कमं वन्नितो समासेण । जीएणं ववहारं सुण वच्छ जहक्कमं वुच्छं ॥ ६९२ ॥

एप धारणाव्यवहारो यथाक्रमं समासेन वर्णितः साम्प्रतं जीतेन व्यवहारं यथाक्रमं वक्ष्ये, तं वत्स वक्ष्यमाणं शृणु । तथा चाह—

वत्तणुवत्तपवत्तो बहुसो अणुवत्तिउ महाजणेणं । एसो य जीयकप्पो पंचमओ होइ ववहारो ॥ ६९३ ॥

यो व्यवहारो वृत्त एकवारं प्रवृत्तो भूयः प्रवृत्तो वारद्वयं प्रवृत्त इति भावः तथा बहुशोऽनेकवारं प्रवृत्तः महाजनेन चानुवर्तितं एष पञ्चमको जीतकल्पो व्यवहारो भवति । वृत्तादिपदानां व्याख्यानमाह—

वत्तोनामं एक्कसि अणुवत्तो जो पुणो बितिय वारं, तइयवारं पवत्तो परिग्गहितो महाजणेण ॥ ६९४ ॥

एक्कसिमेकवारं यः प्रवृत्तः स प्रवृत्तो नाम, यः पुनर्द्वितीयवारं प्रवृत्तः सोऽनुवृत्तः तृतीयवारं वृत्तः प्रवृत्तोऽनुवृत्तः प्रवृत्तोऽनुवर्तितो स परिगृहीतो महाजनेनात्र परस्य प्रश्नमाह—

चोदेती वोच्छिन्नो सिद्धपहे तइयगम्मि पुरिसजुगे । वोच्छिन्ने तिविहे संजमंमि जीएण ववहारो ॥ ६९५ ॥

उ. १०. भा. ६९०-६९९ ॥ ९१ ॥

परश्चोदयति किं तृतीये पुरुषयुगे जम्बूस्वामिनाम्नि सिद्धिपथे व्यवच्छिन्ने च त्रिविधे संयमे परिहारविशुद्धिप्रभृतिके जीतेन व्यवहारः । अत्र केचिदुत्तरमाहु—

संघयणं संठाणं च पढमं जो य पुव्व उवओगो । ववहारे चउक्कंपि य चोद्दसपुव्वंमि वोच्छिन्नं ॥ ६९६ ॥

प्रथमसंहननं वज्रर्षभनाराचं । प्रथमसंस्थानं समचतुरस्रं यश्चान्तर्मुहूर्तेन चतुर्दशानामपि पूर्वाणामुपयोगोऽनुप्रेक्षणं यच्चादिमं आगमश्रुताज्ञाधारणालक्षणं व्यवहारे चतुष्कमेतत्सर्वं चतुर्दशपूर्विणि चतुर्दशपूर्वधरे व्यवच्छिन्नं । एतन्निराकुर्वन् भाष्यकृदाह—

अहायरितो एवं ववहारचउक्कं जे उ वोछिन्नं । चउद्दसपुव्वधरम्मी घोसंती तेसिमणुग्घाया ॥ ६९७ ॥

एवं परेणोत्तरे कृते आचार्यः प्राह—ये एवं प्रागुक्तप्रकारेण व्यवहारचतुष्कं चतुर्दशपूर्वधरे व्यवच्छिन्नं घोषयति तेषां प्रायश्चित्तं चत्वारो मासा अनुद्घाता गुरुका मिथ्यावादित्वात्, मिथ्यावादित्वमेव प्रविकटयिषुरिदमाह—

जे भावा जहियं पुण चोद्दसपुव्वंमि जंबुनामे य । वोच्छिन्ना ते इणमो सुणसु समासेण सीसंतो ॥ ६९८ ॥

ये भावा यस्मिन् चतुर्दशपूर्विणि ये जम्बूनाम्नि व्यवच्छिन्नास्तान् समासेन शिष्यमाणानिमान् शृणुत । तानेवाह—

मणपरमोहिपुलाए आहारग खवग उवसम्मे कप्पे । संजमतियकेवलि सिज्झणा य जंबुम्मि वोच्छिन्ना ॥६९९॥

मनःपर्यायज्ञानिनः परमावधयः पुलाको लब्धिपुलाकः आहारकः आहारशरीरलब्धिमान् क्षपकः क्षपकश्रेणिरुपशमे उपशमश्रेणिः कल्पो जिनकल्पः संयमत्रिकपरिहारविशुद्धिसूक्ष्मसम्परायः यथाख्यातलक्षणं केवलिनः सिधना चैते भावा जम्बूस्वामिनि व्यवच्छिन्नाः ।

व्य. सू. इह केवलिग्रहणेन सिज्झणा ग्रहणेन वा गतेन यत् उभयोपादानं ततः यः केवली स नियमात् सिध्यति । यश्च सिध्यति स नियमात्केवली
३ सन्निति ख्यापनार्थम् ।

॥९१॥ संघयण संठाणं च पढमगं जो य पुव्वउवउगो । एते तिन्नि वि अत्था चोद्दसपुव्विम्मि वोछिन्ना ॥ ७०० ॥

१८ प्रथमं सहननं संस्थानं यश्चान्तोमौहूर्तिकः समस्तपूर्वविषयउपयोगः एते त्रयोऽप्यर्था न जाम्बस्वामिनि तृतीयपुरुषयुगे व्यवच्छिन्नाः किन्तु चतुर्दशपूर्विणि भद्रबाहौ, व्यवहारचतुष्कं पुनः पश्चादप्यनुवृत्तं यत आह—

केवलमणपज्जवनाणिणो य तत्तो य ओहिनाणजिणा । चोद्दसदसनवपुव्वी आगमववहारिणो धीरा ॥ ७०१ ॥
सुत्तेण ववहरंते कप्पववहारं धारिणो धीरा । अत्थधरववहारंते आणाए धारणा ए य ॥ ७०२ ॥
२२ ववहारचउक्कस्स, चोद्दसपुव्विम्मि छेदो जं । भणियं तं ते मिच्छा, जम्हा सुत्तं अत्थो य धरए य ॥ ७०३ ॥

केवलिनो मनः पर्यायज्ञानिनोऽवधिज्ञानजिनाश्चतुर्दशपूर्विणो दशपूर्विणो नवपूर्विणश्च एते षट् धीरा आगमव्यवहारिणः ये पुनः कल्पव्यवहारिणो धीरास्ते सूत्रेण कल्पव्यवहारगतेन व्यवहरन्ति । ये पुनच्छेदश्रुतस्यार्थधरास्ते आज्ञया धारणया च व्यवहरन्ति । छेदश्रुतस्य च सूत्रमर्थश्चाद्यापि धरते विद्यते दशपूर्वधरा अपि चागमव्यवहारिणस्ततो व्यवहारचतुष्कस्य चतुर्दशपूर्विणि व्यवच्छेद इति
२६ यद्भणितं तन्मिथ्या । अन्यच्च—

तित्थोगालीएत्थं, वत्तव्वा होइ आणुपुव्वीए; जे तस्स उ अंगस्स, वुच्छेदो जहिं विणिदिट्ठो ॥ ७०४ ॥

तेषां मिथ्यावादित्वप्रकटनाय यो यस्यां यो यस्यान्यस्य वा यत्र व्यवच्छेदो विनिर्दिष्टः सा तीर्थोगालिरत्रानुपूर्व्या क्रमेण वक्त-

व्या, येन विशेपस्तेषां प्रत्यय उपजायते। अथ कोऽसौ जीतव्यवहारं प्रयुञ्जीतेत्यत आह—

**जो आगमेन सुत्ते य सुन्नतो आणधारणाए य। सो ववहारं जीएण कुणइ वत्ताणुवत्तेण ॥ ७०५ ॥**

य आगमेन सूत्रेण च ( गाथायां सप्तमी प्राकृतत्वात् तृतीयार्थे ) तथा आज्ञया धारणया च शून्यो रहितः स जीतेन वृत्तानुवृत्तेन, अस्य व्याख्यानं प्राग्वद्व्यवहारं करोति। वृत्तानुवृत्तत्वमेव भावयति—

**अमुगो अमुगत्थ कउ जह अमुयस्स अमुएण ववहारो। अमुगस्सवि य तह कतो अमुगो अमुगेण ववहारो ७०६**

**तं चेवणुमज्जंतो ववहारविहिं पउंजति जहुत्तं। जीएण एस भणितो ववहारो धीरपुरिस्सेहिं ॥ ७०७ ॥**

अमुको व्यवहारोऽमुके कारणे समुत्पन्ने अमुकस्य पुरुषस्यामुकेनाचार्येण यथा कृत एतेन वृत्तत्वं भावितं, "तथैव वामुकस्य यादृशे एव कारणेनामुकेनाचार्येणामुको व्यवहारः कृतः एतेनानु–वृत्तत्वमुपदर्शितं तमेव वृत्तानुवृत्तं जीतमनुमज्जन् आश्रयन् यथोक्तं व्यवहारविधिं यत् प्रयुक्ते एप जीतेन व्यवहारो धीरपुरुषैर्भणितः।

**धीरपुरिसपण्णत्तो पंचमगो आगमो वि उ पसत्थो। पियधम्मवज्जभीरू पुरिसज्जायाणुचिन्नो य ॥ ७०८ ॥**

एप पञ्चमको जीतव्यवहारो धीरपुरुषप्रज्ञप्तस्तीर्थकरगणधरैः प्ररूपितः आगमपञ्चविधः व्यवहारसूत्रात्मकतया श्रुतज्ञानविदश्चतुर्दशपूर्विणस्तैः कालं प्रतीत्य प्रशस्तः प्रशंसितस्तथापि प्रियधर्मभिरवद्यभीरुभिः पुरुषजातैरनुचीर्णस्तस्मात्सत्यतया प्रत्येतव्यो अर्थतः सूत्रतश्च यथाक्रमं तीर्थकरगणधरैरभिहितत्वात्। तथाहि—पञ्चविहे ववहारे पण्णत्ते इत्यस्य सूत्रस्यार्थः। तीर्थकरैर्भाषितो गणधरैश्च श्रद्धाय सूत्रीकृतोऽत एवोत्तमैः पुरुषजातै आचीर्णस्ततः कथमत्र न प्रत्यय इति। अधुना जीतव्यवहारे निदर्शनमाह—

सो जह कालादीणं, अप्पडिकंतस्स निव्विगईयं तु । मुहणंतफिडियपाणग असंवरणे एवमादीसु ॥७०९॥

व्य. सू. ३ ॥ ९२ ॥ स जीतव्यवहारो यथेत्युदाहरणमात्रोपदर्शनकालादिभ्य आदिशब्दात् स्वाध्यायादिपरिग्रहो अप्रतिकान्तस्तस्य ( गाथायां पष्ठी पञ्चम्यर्थे ) ते मुखानन्तिके मुखे पोतिकायां स्फिटितायां मुखपोतिकामन्तरेणेत्यर्थः । तथा पानकस्यासंवरणे पानाहारप्रत्याख्यानाकरणे

१८ निर्विकृतिकं प्रायश्चित्तम् ।

एगिंदियाणंतवज्जे घट्टण तावण गाढगाढे य; निव्वितिगमादीयं जा आयामं तू उदावणे ॥ ७१० ॥

एकेन्द्रियस्यानन्तकायिकवर्जस्य पृथिव्यप्तेजोवायुप्रत्येकवनस्पतीनामित्यर्थः घट्टने अनागाढे तापने आगाढे च निर्विकृतिकादिकं यावदायामाम्लमपद्रावणे जीवितात् व्यपरोपणे इयमत्र भावना—पृथिवीकायिकाप्कायिकतेजस्कायकवायुकायिकप्रत्येकवनस्पतीनां घट्टने

२२ निर्विकृतिकमनागाढे परितापने पूर्वार्धमागाढपरितापने एकाशनमपद्रावणे आयामाम्लमिति ।

विगलिंदियघट्टण तावणा गाढगाढे तहेव उद्दवणा । पुरिमड्ढाइ कमेण नायव्वं जाव खमणं तु ॥ ७११ ॥

पंचेंदिय घट्टण तावणा य गाढगाढे तहेव उद्दवणे। एक्कासण जायामं खमणं तह पंचकल्लाणं ॥ ७१२ ॥

विकलेन्द्रियाणां द्वीन्द्रियप्रभृतीनां घटने तापने अनागाढे आगाढे च तथा अपद्रावणे पूर्वार्धादिक्रमेण ज्ञातव्यं यावत्क्षपणं किमुक्तं

२६ भवति । घट्टने पूर्वार्धमनागाढपरितापने एकाशनं गाढपरितापने आयामाम्लमपद्रावणे क्षपणमिति, तथा पंचेंद्रियाणां घट्टने एकाशनमनागाढपरितापने आयामाम्लमागाढपरितापने अभक्तार्थमपद्रावणे पञ्चकल्याणं निर्विकृतिकपूर्वार्धएकाशनकायामाम्लक्षपणरूपम् ।

एमाईउ एसो नायव्वो होइ जीयववहारो। आयरियपरंपरएण आगतो जाव जस्स भवे ॥ ७१३ ॥

उ. १०, भा. ७०९–७१८ ॥ ९३ ॥

एवमादिक एष जीतव्यवहारो भवति ज्ञातव्यः यो वा यस्य आचार्यपरम्परकेणागतः से तस्य जीतव्यवहारो ज्ञातव्यः

**वहुसो बहुस्सुए हि जा वत्तो न य निवारितो होइ । वत्तणुवत्तपमाणं जीएण कयं भवति एयं ॥ ७१४ ॥**

यो व्यवहारो वहुश्रुतै र्वहुशो अनेकवारं वृत्तः प्रवर्तितो न चान्यैर्वहुभिः श्रुतै र्भवति विद्यते निवारितः । एतेन वृत्तानुवृत्तं जीतेन प्रमाणं कृतं भवति । स जीतव्यवहारः प्रमाणीकृत इति भावः । एतदेव च सविस्तरं भावयति ।

**जं जीतं सावज्जं न तेण जीएण होइ ववहारो । जं जीयमसावज्जं तेण उ जीएण ववहारो ॥ ७१५ ॥**

यत् जीतं सावद्यं न तेन जीतेन भवति व्यवहारः, यत् जीतमसावद्यं तेन जीतेन व्यवहारः । अथ किं सावद्यजीतमित्यत आह—

**छारहडिहडमालापोट्टेण य रिंगणिं तु सावज्जं । दसविह पायच्छित्तं होइ असावज्जं जीयं तु ॥ ७१६ ॥**

यत् प्रवचने लोके चापराधविशुद्धये समाचरितं क्षारावगण्डनं हडौ गुप्तिगृहप्रवेशनं खरमारोपणं पोट्टेण उदरेण रंगणं तु शब्दत्वात् खरारूढं कृत्वा ग्रामे सर्वतः पर्यटनमित्येवमादि सावद्यं जीतं, यत्तु दशविधमालोचनादिकं प्रायश्चित्तं तदसावद्यं जीतं अपवादतः कदाचित्सावद्यमपि जीतं दद्यात् । तथा चाह—

**उसण्णवहूदोसे निद्धंधसे पवयणे य निरवेक्खो । एयारिसंमि पुरिसे दिज्जइ सावज्जं जीयंपि ॥ ७१७ ॥**

उत्सन्नेन प्रायेण वहुदोषे निद्धंधसे सर्वथा निर्दये तथा प्रवचने प्रवचनविषये निरपेक्षे एतादृशे पुरुषेऽनवस्थाप्रसङ्गनिवारणाय सावद्यमपि जीतं दीयते ।

**संविग्गे पियधम्मे अप्पमत्ते य वज्जभीरुम्मि । कम्हिइयमाइ खलिए देयमसावज्जं जीयं तु ॥ ७१८ ॥**

संविग्ने प्रियधर्मिणि अप्रमत्तेऽवद्यभीरौ। कस्मिंश्चित्प्रमादवशतः स्खलिते देयमसावद्यं जीतं—

व्य. सू. ३ ॥ ९३ ॥

जं जीयमसोहिकरं न तेण जीएण होइ ववहारो। जं जीयं सोहिकरं तेण उ जीएण ववहारो॥ ७१९ ॥

यत् जीतमशोधिकरं न तेन जीतेन भवति व्यवहारः कर्तव्यः, यत्पुनः जीतं शोधिकरं तेन जीतेन व्यवहारो विधेयः, शोधिकराशोधिकरजीतप्रतिपादनार्थमाह—

जं जीयमसोहिकरं पासत्थपमत्तसंजयाईण्णं। जइवि महाजणाइन्नं न तेन जीएण ववहारो ॥ ७२० ॥

जं जीयं सोहिकरं संवेगपरायणेन दत्तेण। एगेण वि आइन्नं तेण उ जीएण ववहारो ॥ ७२१ ॥

यत् जीतं पार्श्वस्थप्रमत्तसंयताचीर्णमतएवाशोधिकरं तत् यद्यपि महाजनाचीर्णं तथापि न जीतेन व्यवहारः कर्तव्यः। तस्याशोधिकरत्वात् यत्पुनर्जीतं संवेगपरायणेन दान्तेन एकेनाप्याचीर्णं तत् शोधिकरं कर्तव्यम्।

एवं जहोवदिट्ठस्स धीरविउद्देसियपसत्थस्स। नीसंदो ववहारस्स कोवि कहिओ समासेण ॥ ७२२ ॥

एवमुक्तेन प्रकारेण पञ्चविधस्य धीरैस्तीर्थकरणधरैर्यथा यथा क्रमतः सूत्रतश्च दर्शितो विदश्चतुर्दशपूर्वधरास्तैः प्रशस्तः प्रशंसितस्तस्य निष्पन्दः कोऽपि कथितः समासेन विस्तरेणाभिधातुमशक्तत्वात्। तथा चाह—

को वित्थरेण वोत्तूण समत्थो णिरवसेसिए अत्थे। ववहारे जस्स मुहे हवेज्ज जीहासयसहस्सं॥ ७२३ ॥

किं पुण गुणोवएसो ववहारस्स उचिउ पसत्थस्स। एसो भे परिकहिओ दुवालसंगस्स णवणीयं ॥ ७२४ ॥

उ. १०, भा. ७१९-७२४ १-२ ॥ ९४ ॥

यस्य मुखे जिह्वा शतसहस्रं जिह्वालक्षं भवेत् । सोऽपि को नाम व्यवहारे व्यवहारसूत्रस्य निरवशेषितान् वक्तुं समर्थो नैव कश्चित्
किन्त्वेष व्यवहारस्य व्यवहारसूत्रस्य उंचितः प्रशस्तस्य चतुर्दशपूर्वधरभद्रबाहुस्वामिना दत्तस्य गुणोपदेशो गुणोत्पादननिमित्तमुपदेशो मे
भवतां कथितः किं विशिष्ट इत्याह—द्वादशाङ्गस्य नवनीतमित्यर्थः ॥

॥ व्यवहारप्रकृतं समाप्तम् ॥

४ सूत्र—चत्तारि पुरिसज्जाया पण्णत्ता । तं जहा-–अट्ठकरे नामं एगे नो माणकरे, माणकरे नामं एगे नो
अट्ठकरे, २ । एगे अट्ठकरे वि माणकरे वि ३ एगे नो अट्ठकरे नो माणकरे ४, । एतत्प्रभृतोनां च पुरुषजात-
सूत्राणामयं सम्बन्धः ॥४॥

८ ववहारकोविदप्पा तदट्ठे नो पमायए जोगे । मा य हु तहुज्जमत्ते कुणमाणं एस संबंधो ॥ १ ॥

पञ्चविधव्यवहारकोविदात्मा तदर्थे व्यवहारार्थे योगे न मनोवाकायान् प्रमादयति न व्यवहारविषये प्रमादमाचरतीति भावः । मा
च हु निश्चितं तस्मिन् व्यवहारे उद्यच्छति उद्यमं कुर्वति मानमहंकारं कार्षीदितिं ज्ञापयत्येवमादीनि सूत्राणि । एष पुरुषजातसूत्राणां सम्बन्धः ।

१२ प्रकारान्तरेण सम्बन्धमाह—

पुव्वुत्ता व पुरिसजाया अत्थतो न वि गंथउ । तेसिं परूवणत्थं तादिदं सुत्तमागयं ॥ २ ॥

वा शब्दः प्रकारान्तरद्योतने अथवा अनेन व्यवहारेण सूत्रेण अर्थतः पुरुषजाता उक्ताः सूचिता न वै ग्रन्थत उक्ता तेषां प्ररूपणार्थं

व्य. सू. तदिदं सूत्रं पुरुषजातसूत्रमागतम् । अस्याक्षरगमनिका तु प्रतीता । विस्तरार्थं भाष्यकृदाह—

४ पुरिसज्जाया चउरो वि भासियव्वा उ आणुपुव्वीए । अत्थकरे माणकरे उभयकरे नोभयकरे य ॥ ३ ॥

॥ ९४ ॥ अधिकृतभङ्गसूचिताश्चत्वारः पुरुषा इमे आनुपूर्व्या परिपाट्या विभाषितव्यास्तद्यथा—प्रथमभङ्गेऽर्थकरो, द्वितीयभङ्गे मानकरः,

१८ तृतीय उभयकरश्चतुर्थे नोभयकरः चतुष्टयं ।

पडमतइया एत्थं तु सफला निष्फला दुवे इयरे । दिट्ठंतो सगतेणा सेवता अन्नरायाणं ॥ ४ ॥

अत्र एषु चतुर्षु पुरुषेषु मध्ये प्रथमतृतीयौ सफलावितरौ द्वितीयचतुर्थौ निष्फलावेषु चतुर्ष्वपि दृष्टान्तोऽन्यराजानां सेवमानाः शकस्तेनास्तमेव दृष्टान्तमभिधित्सुराह—

२२ उज्जेणी सगरायं नीयागव्वा न सुट्ठु सेवेंति । वित्तियदाणं चोज्जं निवेसया अण्णनिवे सेवा ॥ ५ ॥

धावयपुरतो तह मग्गतो य सेवइ य आसणं नीयं । भूमीयंपि य निसीयइ । इंगियकारी उ पढमो उ ॥६॥

चिक्खल्ले अन्नया पुरतो उगतो से एगो नवरि सव्वतो । तुट्ठेण तहा रन्ना विती उ सुपुक्खला दिन्ना ॥७॥

यदा कालिकाचार्येण शका आनीतास्तदा उज्जयिन्यां नगर्यां शको राजा जातः, । तस्य निजकात्मीया एकेऽस्माकं जात्या सदृश

२६ इति गर्वात्तं राजानं न सुष्ठु सेवन्ते । ततो राजा तेषां वृत्तिं नादात् । अवृत्तिकाश्चते चौर्यं कर्तुं प्रवृत्ताः । ततो राज्ञा बहुभिर्जनैर्विज्ञप्तेन निर्विषयाः कृताः ततस्तै देशान्तरं गत्वा अन्यस्य नृपस्य सेवा कर्तुमारब्धा । तत्रैकः पुरुषो राज्ञो गच्छतो आगच्छतश्च पुरतो धावति तथा मार्ग-

उ. १०. भा. तश्च कदाचित् धावति राज्ञः चोर्ध्वस्थितस्योपविष्टस्य वा पुरतः स्थितः सेवते यद्यपि चोपविष्टः सन् (तं) राजानुजानाति । तथापि स नीच-
३–११ मासनमाश्रयते । कदाचिच्च राज्ञः पुरतो भूमावपि निषीदति राज्ञश्चैङ्गितं ज्ञात्वाऽनाज्ञप्तोपि विवक्षितप्रयोजनकारी अन्यदा च राजा पानीयस्य
॥ ९५ ॥ कर्दमस्य मध्येन धावितः शेषश्च भूयान् लोको निःकर्दमप्रदेशेन गन्तुं प्रवृत्तः स पुनः शकपुरुषोऽश्वस्याग्रतः पानीयेन कर्दमेन च सेव्य-
४ मान एकः से तस्य पुरतो धावति ततस्तस्य राज्ञा तुष्टेन सुपुष्कला अतिप्रभूता वृत्तिर्दत्ता ।

**वितिओ न करे अट्ठं माणं च करेइ जाइकुलमाणी। न निवसाति भूमीए न य धावति तस्य पुरतो उ ॥८॥**

द्वितीयः पुरुषोऽहमपि राजवंशिक इति गर्वात् न कमप्यर्थं राज्ञः प्रयोजनं करोति । जातिकुलमानी सन्मानं च भूयांसमात्मनि करोति न च भूमौ निवसति, न च तस्य राज्ञः पुरतो धावति । तृतीयमाह—

८ **सेवति ठितोविदिण्णेवि आसणेपेसितो कुणइ अट्ठं । बिइओभयकरो तइउ जुज्झइ य रणे समाभट्ठो ॥९॥**

तृतीयः पुरुषो राजानं प्रथमपुरुषवत् सेवते नवरमश्वस्य पुरतो न धावति किन्तु पृष्ठतस्तथा ऊर्ध्वस्थितः सेवते, वितीर्णे आसने स्थितोऽप्युपविष्टोऽपि आसने सेवते, न भूमौ निषीदति । तथा प्रेषितः सन् अर्थं करोति नाप्रेषितो मानवशादिति । एवमेष उभयकरः, रणे च राजपुत्र इति समाभाषितो युध्यते ।

१२ **उभयनिसेहो चऊत्थे वेइय चउत्थेहिं तत्थ न उलद्धा। विती इयरेहिं लद्धा दिट्ठं तस्सुवणतो उ ॥ १० ॥**

चतुर्थे पुरुपे उभयस्य अर्थस्य मानस्य च निषेधः । तत्र द्वितीयचतुर्थाभ्यां वृत्तिर्लब्धा दृष्टान्तस्य एव वक्ष्यमाण उपनयस्तमेवाह—

**एमेवायरिस्स वि कोइ अट्ठं करेइ न व माणं । अट्ठो उ उच्चमाणो वेयावच्चं दसविहं तु ॥ ११ ॥**

व्य. सू. ४–५ ॥ ९५ ॥ अहवा अब्भुट्ठाणं आसणकित्तिमत्तए य संथारो । उववायबहुविहा इच्चादि एवंति अट्ठा उ ॥ १२ ॥

एवमेव शक्रपुरुषदृष्टान्तगतेन प्रमाणेन कोऽप्याचार्यस्यार्थं करोति । न च मानं अर्थो वक्ष्यमाणसूत्रेणोच्यमानः कः पुनः स इत्याह—दशविधं वैयावृत्त्यमथवा समागच्छतो अभ्युत्थानमासनदानं कृतिकर्मविश्रामणा यथा क्षेलमुच्चारमात्रकस्य प्रश्रवणमात्रकस्य श्लेष्म-

१८ मात्रकस्य चोपनयः संस्तारकस्य करणमुपपाताश्च समीपभवनलक्षणा बहुविधास्तत्प्रयोजनभेदतोऽनेकप्रकारा इत्यादयो अर्था भवन्ति

बितितो माणकरो ऊ को पुण माणो हवेज्ज तस्स इमो । अब्भुत्थाणब्भत्थण होइ पसंसा य एमादी ॥१३॥

द्वितीयो भवति मानकरः कः पुनस्तस्य मान उच्यतेऽयं वक्ष्यमाणस्तमेवाह—अब्भुट्ठाणमित्यादि । आगच्छतोऽभ्युत्थानं न कृतं यदि वा न मेऽभ्यर्थना, न वा कृता मम प्रशंसा इत्यादि ।

२२ तइओ भय नोभयतो चउत्थ दोपि निप्फलगा । सुत्तत्थो भयनिज्जरलाभो दोण्हं भवे तत्थ ॥ १४ ॥

तृतीय उभयकरोऽर्थकरो मानकरश्चतुर्थो नोभयकरस्तत्र नो द्वितीयचतुर्थोभयनिर्जरा अलाभात् । तथाहि—न तयोराचार्याः सूत्रमर्थमुभयं वा प्रयच्छन्ति नापि ते निर्जरां प्राप्नुतः । द्वयोः प्रथमतृतीययोः सूत्रार्थोभयनिर्जरालाभोऽर्थकारितया सर्वस्यापि संभवात् । तस्मात् प्रथमतृतीयाभ्यामिव वर्तितव्यं न द्वितीयचतुर्थाभ्यामिव—

२६ **सूत्रम्—चत्तारि पुरिसज्जाया पन्नता तं जहा—गणट्ठकरे नामं एगे नो माणकरे १ माणकरे नामं एगे नो गणट्ठकरे २ एगे गणट्ठकरे वि माणकरे वि ३ एगे नो गणट्ठकरे नो माणकरे ४। अस्याक्षरगमनिका सुप्रतीता । प्रपञ्चो भाष्यकृदाह ॥ ५ ॥**

उ.।१०.भा. १२-१८ ॥ ९६ ॥

एमेव होंति भंगा चत्तारि गणट्ठकारिणो जइणो । रण्णो सारूविय देवचिंतगा तत्थ आहरणं ॥ १५ ॥

एमेवानन्तरसूत्रोक्तप्रकारेण गणार्थकारिणोऽपि यतेश्चत्वारो भङ्गा भवन्ति । ते च सूत्रतः स्पष्टा एव । तेषु च चतुर्ष्वपि पुरुषजातेषु ये सारूपिका यतेः समानरूपधारिणो मुण्डितशिरस्का भिक्षाटनशीला इत्यादि प्रागुक्तस्वरूपा देवचिन्तका नाम ये शुभाशुभं राज्ञः कथयन्ति ते आहरणं दृष्टान्तस्तमेव भावयति—

पुट्ठापुट्ठो पढमो उ साहइं न उ करेइ माणं तु । बितिउ माणकरेइं पुट्ठो विना साहई किंचि ॥ १६ ॥

तइओ पुट्ठो साहइ नो पुट्ठ चउत्थमेव सेवइ उ । दो सफला दो अफला एवं गच्छे वि नायव्वा ॥ १७ ॥

प्रथमो राज्ञा पृष्टोऽपृष्टो वा यत्र शुभाशुभं वा साधयति, न मानं करोति, द्वितीयो मानं करोति, न च मानादेव पृष्टोऽपि किंचित् कथयति । तृतीयः पृष्टः साधयति नापृष्टश्चतुर्थः सेवते एव राजानं नेति । अत्र द्वौ प्रथमतृतीयौ सफलौ द्वौ च द्वितीयचतुर्थावफलौ एवमनुना दृष्टान्तगतेन प्रकारेण गच्छेऽपि द्वौ प्रथमतृतीयौ सफलौ द्वौ च द्वितीयचतुर्थावफलौ च ज्ञातव्यौ । तेषां चतुर्णामपि स्वरूपमाह—

आहार उवहि सयणाइ एहिं गच्छस्सुपग्गहं कुणाति । बिइओ माणं उभयं च तइओ नोभय चउत्थो ॥१८॥

प्रथम आहारोपधिशयनादिभिर्गच्छस्योपग्रहं करोति न च मानं, द्वितीयो मानः तृतीय उभयं गच्छस्योपग्रहं मानं च, चतुर्थो नोभयं गच्छस्योपग्रहं नापि मानमिति ।

व्य. सू. ५–७ ॥ ९६ ॥

सूत्रम्—चत्तारि पुरिसज्जाया पन्नत्ता तं जहा-गणसंगहकरे नामं एगे नो माणकरे। एगे माणकरे नो गणसंगहकरे। एगे गणसंगहकरे वि माणकरे वि। एगे नो गणसंगहकरे नो माणकरे॥६॥ अत्र सम्बन्धमाह—

सो पुण गणस्स अट्ठो संगहो तत्थ संगहो। दुविहो दव्वे भावे नियगा उ दोन्नि आहारनाणादी ॥ १९ ॥

अनन्तरसूत्रे गणार्थकर उक्तः स पुनर्गणस्यार्थं वा संग्रहस्ततसंग्रहकरप्रतिपादनार्थमिदं सूत्रं। तत्र सङ्ग्रहो द्विधा–द्रव्यतो भावतश्च।
१८ तत्र द्रव्ये भावे च द्वौ त्रिकौ द्रष्टव्यौ तद्यथा–आहारादिकं द्रव्ये ज्ञानादित्रिकं भावे तदेवं संग्रहं व्याख्याय संग्रहकरत्वयोजनामाह—

आहारोवहिसेज्जाइएहिं दव्वंमि संगहं कुणइ। सीसे परिच्छेवाए भावे ण तरंति जाहे गुरू ॥ २० ॥

द्रव्यतः संग्रहं करोति आहारोपधिशय्यादिभिरत्रादिशब्द आहारादीनां स्वगतानेकभेदसूचकः। भावे न यदा गुरवः शक्नुवन्ति तदा शिष्यान् प्रतीच्छिकान् वा वाचयति। एष प्रथमः पुरुषः। द्वितीयो मानं करोति न तु द्रव्यतो भावतो वा गणस्य संग्रहं, तृतीय उभयं,
२२ चतुर्थो नोभयमिति ॥

सूत्रम्ः–चत्तारि पुरिसज्जाया पन्नत्ता तं जहा-गणसोहकरे नामं एगे नो माणकरे एगे माणकरे नो गणसोहकरे, एगे गणसोहकरे वि माणकरे वि, एगे नो गणसोहकरे नो माणकरे ॥७॥ अत्र भाष्यं—

एवं गणसोहंमि वि चउरो पुरिसा हवंति नायव्वा। सो भावेत्ति गणं खलु इमेहिं ते कारणेहिं तु ॥ २१ ॥

२६ एवमुक्तेन प्रकारेण शोभायामपि कर्तव्यायां चत्वारः पुरुषा भवन्ति ज्ञातव्याः। तच्च सूत्रपाठसिद्धा एव। गणशोभाकरो नाम यो

गणं शोभयति ते च गणं शोभापयन्ति शोभा खलु एभिर्वक्ष्यमाणैः कारणैः प्रयोजनैर्वादादिभिस्तानेव वाद्यादीन् दर्शयति—

गणसोभी खलु वादी उद्देसे सो उ पढमए भणितो। धम्मकहि निमित्ती वा विज्जातिसएण वा जुत्तो ॥२२॥

गणसोभी खलु वादी उद्देसे सो उ पढमए भणितो। धम्मकहि निमित्ती वा विज्जातिसएण वा जुत्तो ॥२२॥ इति गाथा; गणं वादप्रदानतः शोभयतीत्येवं शीलो: गणशोभी खलु वादी। स च वादेन यथा गणं शोभयति तथा प्रथमे उद्देशके भणितः न केवलं वादी गणशोभी किन्तु धर्मकथी। तथाहि—धर्मकथायां यथोक्तं स्वरूपमाक्षेपतः कथयतो जनयति गणस्य महतीं शोभां तथा निमित्ती अतीतादिनिमित्तकथयतो विद्यातिशयेन वा युक्तो गणशोभी महतोऽपि सङ्घप्रयोजनस्य विद्याप्रभावतः साधनात् ॥

सूत्रम्:—चत्तारि पुरिसज्जाया पन्नत्ता। तं जहा—गणसोही करे नामं एगे नो माणकरे एगे माणकरे, नो गणसोहीकरे। एगे गणसोहिकरेवि माणकरे वि, एगे नो गणसोही नो माणकरे ॥ ८ ॥ अत्र भाष्यम्—

एयं गणसोहीकरा चउरो पुरिसा हवंति विन्नेया। किह पुण गणस्स सोहिं करेज्ज सो कारणेमेहिं ॥ २३ ॥

एवमुक्तेन प्रकारेण गणशोधिकाराश्चत्वारः पुरुषा भवन्ति विज्ञेयाः। कथं पुनः स प्रथमस्तृतीयो वा गणस्य शोधिं कुर्यात्। सूरिराह—एभिर्वक्ष्यमाणैः कारणैरोजस्वित्वादिभिस्तान्येवाह—

एगदव्वेगघरएगालोअणाए संका उ। उयस्सि सम्भओ संथुओ य तं दुप्पवेसं च ॥ २४ ॥

एकस्मिन् गृहेऽनेकैः संघाटकैः एकं द्रव्यं लब्धं। तद्यथा एकेन संघाटकेन एकस्मिन् गृहे पूपलिका लब्धा। अन्येनापि संघाटकेन तस्मिन्नेव गृहे तादृश्य एव पूपलिका लब्धाः। एवं तृतीयेन चतुर्थेन पञ्चमेन वा लब्धाः। तैः सन्निष्टत्तैर्गुरुसमीपमागत्यालोचितं दर्शिताश्च पूपूलिकास्ततो जाता सर्वेषां शङ्का जाता उद्गमाऽशुद्धा भवेयुः एवं शङ्किते गत्वा तद्गृहं द्रष्टव्यम्। किं युष्माकं गृहेऽद्य संखडिभक्तलाभनकं

व्य. सू. समागतमथवा प्राघूर्णकाः समागता यदि वा साधूनामर्थाय कृतः क्रीता वा। तेऽत्र च गृहे भिक्षावेलायां न कोऽपि प्रवेशं लभते। तत्र साधु-
७-१० रेक ओजस्वी गृहमानुषाणां संस्तुतः। संस्तुततया च तस्मिन् गृहे संमतो अनिवारितप्रसरस्तत् दुःप्रवेशं गृहं प्रविशति। प्रविश्य च निः-
॥ ९७ ॥ शंकितं करोति। अत्र योऽप्रेषितो गत्वा निःशङ्की (कृ)त्य समागच्छति स प्रथमपुरुषजातः यस्तु मानेन गच्छति॥ ( અહીં પાઠ પડયો છે. )

१८ सूत्रम्—चत्तारि पुरिसजाया पन्नत्ता तंजहा—रूवं नामेगे जहइ नो धम्मं, धम्मं नामेगे जहइ नो रूवं एगे रूवंपि जहइ धम्मं पि जहइ, एगे नो रूवं जहइ नो धम्मं जहइ॥ ९॥ अस्य सम्बन्धमाह—

हेट्ठाणंतरसुत्ते गणसोही एस सुत्तसंबंधो। सोहत्ति व धम्मोत्ति व एगट्ठं सो दुहा होइ ॥ २५ ॥

अधस्तनेऽनन्तरसूत्रे गणस्य शोधिरुक्ता। शोधिरिति वा धर्मो इति वा एकार्थः। स च धर्मो द्विधा भवति रूपतो भावतश्च।
२२ तत्र तत्प्रतिपादनार्थमिदं सूत्रमित्येष सूत्रसम्बन्धः। सम्प्रति रूपधर्मव्याख्यानार्थमाह—

रूवं होति सलिंगं धम्मो नाणादियं तियं होइ। रूवेण य धम्मेण य जढमजढे भंगचत्तारि॥ २६ ॥

रूपं नाम भवति स्वलिंगं रजोहरणादिधर्मो ज्ञानादिकं त्रिकं रूपेण च त्यक्तेऽत्यक्ते च भंगाश्चत्वारः। तेन सूत्रपाठसिद्धा एव तेषां विषयभागमाह—

२६ रूवजढमण्णलिंगे धम्मजढे खलु तहा सलिंगम्मि। उभयजढो गिहिलिंगे दुहितो सहिओ लिंगेण॥ २७ ॥

रूपं त्यक्तं येन स धर्मस्वरूपत्यक्तः सुखादिदर्शनात्पाक्षिकः त्यक्तस्य परनिपातः। सोऽन्यस्य लिङ्गे द्रष्टव्यः। इयमत्र भावना—भावतो ज्ञानादित्रिकसमन्वितः कारणवशेनान्यलिङ्गं गृहिलिङ्गं वा यः प्रतिपद्यते। अत्र निदर्शनं यथा—कोऽपि राजा महामिथ्यादृष्टि-

पृ. १०. भा. २५-२९ ॥ ९८ ॥ नास्तिकवादी वावदूकः पण्डिताऽभिमानी दर्शनिभिः सह वादं दत्वा तद्बुद्धिमुपजीव्य दर्शनिनो हीलयति । अन्यदा साधूनुपद्रावयितुं प्रवृत्तो मया सह वादो दीयतां । तत्रैकः साधुर्वादलब्धिसम्पन्नः खचरलब्धिमानभूत् सङ्घस्याप्रभ्राजनेति गृहिलिङ्गमन्यलिंगं वा कृत्वा राज्ञः समीपे वादेनोपस्थितः प्रवृत्तो द्वयोरपि वादः । तत्र राजाऽल्पशक्तिकत्वात् स्वपक्षं निर्वाहयितुमशक्नुवन् हीलनां तस्य कृतवान् । ततः स वाददर्पस्फेटनाय तस्य राज्ञो मूर्धानं पदेनाक्रम्याकाशेन वायुरिव पलायित्वा स्वस्थानं गतः एतदेवाह—

तस्स पंडियमाणस्स बुद्धिलस्स दुरप्पणो । मुद्धं पाएण अक्कम्म वादी वाउरिवागतो ॥ २८ ॥

तस्य नास्तिकवादिनो राज्ञः पण्डितमानिनो बुद्धिः परस्य बुद्धिं लात्युपजीवति इति बुद्धिलः तस्य दुरात्मनो मूर्धानं पादेनाक्रम्य वादी वायुरिव पलायित्वा स्वस्थानमागतः । एष प्रथमपुरुषो द्वितीयो धर्मत्यक्तो न रूपत्यक्त इत्येवं रूपः खलु स्वलिङ्गे सति प्रतिपत्तव्यः । स च पार्श्वस्थादीनामन्यतमो निष्कारणप्रतिसेवी अवधावितुकामो वा वेदितव्यः । तस्य भावतस्त्यक्तधर्मत्वात्स्वलिङ्गस्य च धारणादिति । उभयजढो गिहिलिङ्गे इति उभयत्यक्तो मिथ्यादृष्टिर्गृहिलिङ्गे वर्तमान उभयसहितः स्वलिङ्गेन सहितो ज्ञानादित्रिकोपेतः ।

सूत्रम्—चत्तारि पुरिसज्जाया पण्णत्ता तं जहा—गणसंठितिं नामेगे जहति नो धम्मं, एगे धम्मं जहति, नो गणसंठितिं । एगे धम्मंपि जहति गणसंठितिं पि एगे नो धम्मं जहति नो गणसंठितिं ॥१०॥ अत्र भाष्यम्—

गणसंठितिं धम्मे या चउरो भंगा हवंति नायव्वा । गणसंठिति असिस्से महकप्पसुयं न दायव्वं ॥ २९ ॥

पूर्वप्रकारेण गणसंस्थितौ धर्मे च भङ्गाश्चत्वारो भवन्ति ज्ञातव्यास्ते च तत्र पाठसिद्धा एव गणसंस्थितिर्नाम गणस्य मर्यादा यथा अशिष्येऽयोग्ये शिष्ये महाकल्पश्रुतं न दातव्यम् । सम्प्रति चतुर्णामपि भङ्गानां विषयविभागमाह—

व्य. सू. ११-१२ ॥ ९८ ॥

सातिसयं इयरं वा अन्नगणे ते न देयमज्झयणं । इइगणसंट्ठितितो करेति सच्छंदतो केइ ॥ ३० ॥
देंतो दाता पढमो बितितो भंगो न कस्स इवि दंते, जो पुण अपत्त दायी, तइओ भंगो पडिच्छए वा जो देंति३१
उभयमवलंबमाणं कामं तु तगंपि पुज्जामो । सातिसयं देवेंदोपपातिकादि इतरऋा ॥ ३२ ॥

महाकल्पश्रुतमन्यद्वाध्ययनमन्यगणसक्तस्य न दातव्यमिति एवं प्रकारा गणसंस्थितिः स्वच्छन्दं तीर्थकरानुपदेशेन कुर्वन्ति । तत्रैवं गणसंस्थितौ कृतायां योऽन्यगणसक्तेऽपि पात्रे महाकल्पश्रुतादिकमध्ययनं ददाति तेन गणसंस्थितिस्त्यक्ता न धर्मस्तीर्थकरोपदेशेन वर्तमानत्वात् । एष हि भगवतां तीर्थकृतामुपदेशः सर्वस्यापि पात्रस्याविशेषेण दातव्या । यस्तु गणसंस्थितौ कृतायां न कस्यापि परगणसक्तस्य ददाति स द्वितीयः अपात्रस्य ददाति तं प्राप्य तृतीयो भङ्गः । तेन गणस्थितेस्तीर्थकराज्ञाखण्डनतो धर्मस्य च त्यक्तत्वात् । यस्त्वन्यथा व्यवच्छेदं पश्यन् मेधावी प्रवचनोपग्रहकरो भविष्यतीत्यादिगुणसमन्वितं प्रतीच्छिकमुपलभ्य तस्य स्वयमेवं निजं दिग्वन्धं कृत्वा सातिशयमन्यद्वाध्ययनं ददाति। तमप्यास्तां प्रथमभङ्गवर्तिनमित्यपि शब्दार्थः। उभयं गणसंस्थितिधर्मं चावलम्बमानं पूजयामः। एष चतुर्थपुरुषः ।

सूत्रम्—चत्तारि पुरिसज्जाया पण्णत्ता। तं जहा–पियधम्मं नामं एगे नो दढधम्मे नोपियधम्मे दढधम्मे नाम एगे पियधम्मे वि दढधम्मे वि, एगे नो पियधम्मे नो दढधम्मे ॥ ११ ॥ अस्य सम्बन्धमाह—

धम्मो न जहियव्वो गणसंट्ठितिमिच्छतो पसंसामो। जस्स पिओ सो धम्मो सो न जहति तस्सिमो जोग्गो ३३

अनन्तरसूत्रे इदमुक्तम्–गणसंट्ठिति नामेगे जहति नो धम्मं । तत्र यस्य प्रियो धर्मः । स एवं चिन्तयति–धर्मो न त्यक्तव्यो गणसंस्थितिमत्र न प्रशंसामः एवं चिन्तयित्वा धर्मं न जहाति एष तस्य प्रियधर्मसूत्रस्य योगः । सम्प्रति प्रियधर्मादिव्याख्यानार्थमाह—

वेयावच्चेण मुणी उवचिट्ठइ संगहेण पियधम्मो ॥ उवचिट्ठइ दढधम्मो सव्वेसिं निरतियारो य ॥ ३४ ॥

प्रियधर्मा मुनिर्यावत् द्रव्यत आहारादिना भावतो वाचनादि येन संगृह्यते तावत् वैयावृत्त्येन तस्योपतिष्ठते । नान्यदा अन्यस्य वा दढधर्मः । सर्वेषामविशेषेण वैयावृत्त्येनोपतिष्ठते तावत्सर्वत्र निरतिचारः । सम्प्रति भङ्गयोजनामाह—

दसविहवेयावच्चे अन्नयरे खिप्पमुज्जमं कुणइ । अच्चंतमणिव्वाही धिति विरिय किसे पढमभंगो ॥ ३५ ॥

यो दशविधस्य वैयावृत्त्यस्य वक्ष्यमाणस्यान्यतरस्मिन् वैयावृत्त्ये प्रियधर्मतया क्षिप्रमुद्यमं करोति, केवलमदढधर्मतया अत्यन्तमनिर्वाही तस्मिन् धृतिवीर्यकृशे प्रथमभङ्गः ।

दुक्खेण उगाहिज्जइ बिइओ गहियं ते नेइ जा तीरं । उभयतो कल्लाणो तइतो चरिमो अ परिकुट्ठो ॥ ३६ ॥

द्वितीयस्तुनो प्रियधर्मत्वात् दुःखेन महता कष्टेन प्रथमतो वैयावृत्त्यं ग्राह्यते । गृहीतं तु यावत् प्रतिज्ञायास्तीरं तावन्नयति, उभयतः कल्याणस्तृतीयः, चरमे न प्रियधर्मो नापि दढधर्म इत्येवं रूपो गच्छे प्रतिकुष्टो निराकृतः ।

सूत्रम्—चत्तारि आयरिया पण्णत्ता, तं जहा—पव्वायणायरिए एगे नामं नो उवट्ठावण आयरिए, उवट्ठावणायरिए नामं एगे नो पव्वावणायरिए । एगे पव्वायणायरिएवि उवठावणायरिएवि । एगे नो पव्वायणायरिए नो उवठायणायरिए धम्मायरिए ॥ १२ ॥ अस्य सम्बन्धमाह—

अदढापियधम्माणं तव्विवरीए करेंति आयरिए । तेसि विहाणंमि इमं कमेण सुत्तं समुद्दिट्ठं तु ॥ ३७ ॥

अदृढधर्माणामप्रियधर्माणां चानुशासनाय स्थविरान्द्याचार्या व्याख्यानार्थमाह—

**पव्वयण उट्ठावण उभय नोभयामिति चउत्थो। अत्तट्ठ परट्ठा वा पव्वावणा केवला पढमे ॥ ३८॥**

**एमेव य बितितो वी केवलमेत्तं उवठवे सो उ। तइउ पुण उभयं पीयत्तठ परट्ठ वा कुणउ ॥ ३९ ॥**

**जो पुण नो भयकारी सो कम्हा भवति आयरियो उ। भण्णति धम्मायरितो सो पुण गहितो वसमाणे वा ॥४०**

१८ प्रथमे प्रव्राजनाचार्यः द्वितीये द्वितीयभंगेन सूचितः उपस्थापनाचार्यः तृतीयभंगसूचित उभयः, प्रव्राजनोपस्थापनाचार्यः तत्र
प्रथमस्यात्मार्थस्य परार्थस्य केवला प्रव्राजना किमुक्तं भवति आत्मनिमित्ते परनिमित्ते वा यः केवलं प्रव्राजयति, स प्रथम प्रव्राजनाचार्यः
एवमेवानेनैव प्रकारेण द्वितीयः स केवलं मात्रं उपस्थापयति, यः प्रव्राजितस्य सत उपस्थापनामात्रं करोति स द्वितीय इत्यर्थः, । तृतीयः
पुनरपि प्रव्राजनमुपस्थापनं वात्मार्थे परार्थे वा करोति, यः पुनर्नोभयकारी स चतुर्थः। अथ स कस्माद्भवत्याचार्यः उभयविकलत्वात् ।
२२ सूरिराह—भण्यते स धर्माचार्यो धर्मदेशकत्वात् स पुनर्गृही श्रमणो वा वेदितव्यः। एवं च यत्राचार्यास्तथाह—

**धम्मायरि पव्वायण तहय उठावणा गुरूतइओ। कोइ तिहिं संपन्नो दोहिं वि एक्केक्कएण वा ॥ ४१ ॥**

प्रथमो धर्माचार्यो यस्तत्प्रथमतया धर्मं ग्राहयति। द्वितीयः प्रव्राजनाचार्यो यः प्रव्राजयति । तृतीयोगुरुरुपस्थापनाचार्यो यो महा-
व्रतेषूपस्थापयति। तत्र कश्चित्त्रिभिरपि सम्पन्नो भवति। तथाहि—कदाचित्स एव धर्मं ग्राहयति स एव प्रव्राजयति स एवोपस्थापयति।
२६ कश्चिद्द्वाभ्यां। तद्यथा धर्मग्राहकत्वेन प्रव्राजनेन च अथवा धर्मग्राहकत्वेनोपस्थापनेन अथवा प्रव्राजनेनोपस्थापनेन । केचिदेकैकेन गुणेन
तद्यथा—कश्चित् धर्ममेव ग्राहयति कश्चित्प्रव्राजयत्येव कश्चिदुपस्थापयत्येव

सूत्रम्—चत्तारि आयरिया पण्णत्ता तं जहा—उद्देसणायरिए एगे णामं एगे नो वायणायरिए, वायणायरिए एगे णामं एगे नोद्देसणायरिए । एगे उद्देसणायरिएवि वायणायरिएवि । एगे नोद्देसणायरिए नो वायणायरिए ॥१३॥

अमीषां स्वरूपमाह—

एगो उद्देसए सुयं एगो वाएइ तेण उद्दिठं । उदिसई वाएइ य धम्मायरिओ चउत्थो य ॥ ४२ ॥

एकः प्रथमः श्रुतमुद्दिशति न वाचयति । यथा मङ्गलबुद्ध्या प्रथमत आचार्य उद्दिशति तत उपाध्यायः, । अत्राचार्यः प्रथमभङ्गवर्ती, उपाध्यायो द्वितीयभङ्गे । तथा चाह— एको द्वितीय उपाध्यायस्तेनाचार्येणोद्दिष्टं वाचयति । य एवोद्दिशति स एव वाचयति एष तृतीयः । उभयविकलश्चतुर्थो धर्माचार्यः

सूत्रम्—चत्तारि अंतेवासी पन्नत्ता, तं जहा-उद्देसणंतेवासी नामं एगे नो वायणंतेवासी वायणंतेवासी-नामं एगे नो उद्देसणंतेवासी, एगे उद्देसणंतेवासी वि वायणंतेवासी वि । एगे नोद्देसणंतेवासी नोवायणं-तेवासी ॥ १४ ॥ अस्य सूत्रस्य सम्बन्धप्रतिपादनार्थमाह—

परुच्चायरियं होइ अंतेवासी उ मेलणा । अंतिगमज्झासमासन्नं समीवं चेव आहियं ॥ ४३ ॥

अधस्तनानन्तरसूत्रे आचार्याः प्रोक्ताः । आचार्यं च प्रतीत्यान्तेवासी भवति । ततो अन्तेवासी सूत्रमित्येषामेलनासम्बन्धः । अत्रा-न्तेवासी तत्र योऽन्तशब्दव्याख्यानार्थमेकार्थिकान्याह—अन्तं नाम अन्तिकमध्यास आसन्नं समीपं चैवाख्यातं । तत्र वसतीत्येवं शीलो

व्य. सू. १४-१५ ॥ १०० ॥

अन्तेवासी । सम्प्रति भङ्गभावनार्थमाह—

जह चेव उ आयरिया अंतेवासी वि होइ एमेव । अंते य वसति जम्हा अंतेवासी ततो होइ ॥ ४४ ॥

यथा चैव आचार्या उद्देशनादिभेदतश्चतुर्धा भवन्ति एवमेव अन्तेवासिनोऽपि यस्मादाचार्यस्यान्ते वसति तस्माद्भवत्याचार्यचतुर्द्धान्तेवासी । इयमत्र भावना—यो यस्यान्ते उद्देशनमेवाधिकृत्य वसति वर्तते स तं प्रत्युद्देशनान्तेवासी यस्यान्ते वाचनामेवाधिकृत्य वसति तस्य वाचनान्तेवासी । यत्तूद्देशनं वाचनां चाधिकृत्य यस्यान्ते भवति स तं प्रत्युभयान्तेवासी यस्यान्ते नोद्देशनं नापि वाचनामधिकृत्यान्ते वसति किन्तु धर्मश्रवणमधिकृत्य स तं प्रत्युभयविकलो धर्मान्तेवासी । एवं च त्रयोऽन्तेवासिनस्तथा धर्मान्तेवासी उद्देशनान्तेवासी वाचनान्तेवासी च । तत्र कश्चित्त्रिभिरपि प्रकारैः समन्वितो भवति, कश्चिद् द्वाभ्यां कश्चिदेकैकेन ॥

सूत्रं—तओ थेरभूमीतो पन्नत्ता तं जहा–जातिथेरे सुयथेरे परियायथेरे य । सट्ठिवरिसजाए जातिथेरे ट्ठाणसमवायधरे सुयथेरे, वीसवासपरियाए परियायथेरे ॥ १५ ॥ अस्य सम्बन्धमाह—

थेराणमंतिए वासो सो व थेरो इमो तिहा । भूमिं निय ट्ठाणंति य एगट्ठा होंति कालो य ॥ ४५ ॥

अनन्तरसूत्रे अन्तेवासिन उक्ताः । अन्तिके वासः स्थविराणां स च स्थविरोऽयं वक्ष्यमाणस्त्रिधेत्यनेन प्रक्रमेण सूत्रमिदं समापतितमित्येष सूत्रसम्बन्धः । सम्प्रत्यस्य व्याख्या–तिस्रः स्थविराणां भूमयः प्रज्ञप्ताः भूमिरिति स्थानमिति अवस्थारूपकाल इति त्रयोऽपि शब्दा एकार्थाः । उक्तं च थेरभूमिति वा थेरट्ठाणत्ति वा थेरकालोत्ति वा एगट्ठमिति ।

तिविहम्मि य थेरम्मी परूवणा जा जहिं सए ट्ठाणे । अणुकंपसुए पूआ परियाए वंदणादीणि ॥ ४६ ॥

उ. १०. भा. ४४–४९ ॥ १०१ ॥

त्रिविधस्थविरे त्रिविधस्थविरविषये या यत्र स्वके स्थाने प्ररूपणा सा सूत्रतः कर्तव्या । तद्यथा–षष्टिर्वर्षजातो जातिस्थविरः स्थान-समवायधरः श्रुतस्थविरः विंशतिवर्षपर्यायः पर्यायस्थविरस्तथा जातिस्थावरस्यानुकम्पा कर्तव्या । श्रुते श्रुतिस्थविरस्य पूजा पर्याये पर्यायस्थ-विरस्य वन्दनादीनि साम्प्रतमेतान्येव त्रीणि कर्तव्यानि विस्तरेणाह—

आहारोवहि सेज्जा संथारो खेत्तसंकमे । किति छंदाणुवत्तीहिं णु वत्तंति थेरगं ॥ ४७ ॥

उट्ठाणासणदाणादी जोग्गाहार पसंसणा । नीया सेज्जाएनिदेसवत्तितो पूएइ संथुयं ॥ ४८ ॥

उट्ठाणं वंदणं चेव गहणं दंडगस्स य । परियायथेरगस्स करेंति अगुरोरवि ॥ ४९ ॥

जातिस्थविरस्य कालस्वभावानुमत आहारो दातव्यः । उपधिर्यावता संस्तरति तावत्प्रमाणः शय्या वसतिः । सा ऋतुक्षमा दातव्या संस्तरको मृदुकः क्षेत्रसंक्रमे क्षेत्रान्तरे संक्रामयितव्ये तस्योपधिमन्ये वहन्ति । पानीयेन चानुकम्पते । उक्ता जातिस्थविरस्यानुकम्पा, श्रुतस्थ-विरस्य पूजामाह–किइ इत्यादि कृतिच्छदोनुवृत्तिभ्यां स्थविरं श्रुतस्थविरमनुवर्तयन्ति । किमुक्तं भवति ? श्रुतस्थविरस्य कृतिकर्मवन्दनकं दातव्यं, च्छन्दतश्च तस्यानुवर्तनीयम् । तथा उट्ठाणत्ति आगतस्याभ्युत्थानं कर्तव्यं, आसनप्रदानमादिशब्दात् पादप्रमार्जनादिपरिग्रहः, । तथा योग्याहारोपनयनं समक्षं परोक्षत्वात्प्रशंसना गुणकीर्तनं, तथा तत्समक्षनीचशय्यायामवस्थातव्यम् । निर्देशवर्तिकत्वमेवं श्रुतं श्रुतस्थविरं पूज-येत् । तथा पर्यायस्थविरस्यागुरोरप्यप्रव्राजकस्याप्यवाचनाचार्यस्यापि आगच्छत उत्थानं ( कुर्वन्ति ) कुर्वीथाः । वन्दनकं च क्षमाश्रमणतो दण्डकस्य च ग्रहणमिति

व्य. सू. १६ सूत्रम्—ततो सेहभुमी पण्णत्ता, तं जहा सत्तराइंदिया चउमासिया छम्मासिया, छम्मासिया य उक्कोसिया
॥ १०१ ॥ चाउम्मासिया मज्झमिया सत्तराइंदिया जहन्ना ॥ १६ ॥ अस्य सम्बन्धमाह—

तुल्ला भुमिसंखाविया च ठ्ठावेंति ते इमे हुंति । पडिवक्खतो व सुत्तं परीयाए दीहहस्से य ॥ ५० ॥

१८ तुल्या भूमीसंख्या शैक्षिकाणामिति कृत्वा अथवा पूर्वसूत्रे स्थविरा उक्ताः । ते च स्वयं स्थित्वा अन्यान् स्थापयन्ति । ते चाप्येवं स्थाप्यमाना इमे वक्ष्यमाणा भवन्तीति तत्प्रतिपादनार्थमिदं सूत्रमथवा प्रतिपक्षत इदं सूत्रमापतितं । तद्यथा—पूर्वसूत्रे स्थविरास्तेषां च प्रतिपक्षाः शैक्षा यदि वा स्थविराणां दीर्घः पर्यायः शैक्षकाणां शैक्षकत्वेन ह्रस्व इति स्थविरसूत्रानन्तरं शैक्षकसूत्रम् । अस्याक्षरगमनिका भाव्यत् । सम्प्रति शैक्षकाणां यद्वक्तव्यं तत्संसूचनाय द्वारगाथामाह—

२२ सेहस्स तिन्निभूमीतो दुविहा परिणामगा दुवे जड्डा । पत्तजहंते संभुजणा य भूमित्तिय विवेगो ॥ ५१ ॥

शैक्षकस्य तिस्रो भूमयो वक्तव्याः । सूत्रोपात्तत्वात्तथा शैक्षका द्विविधाः परिणामका वक्तव्याः । द्वौ च जड्डौ तथा पात्राणि पात्रभूतान् त्यजति दोषा वक्तव्याः । संभोजना च तथा भूमित्रिकस्य जलमूककरणजड्डलक्षणस्य विवेकः परित्यागो वक्तव्यः एष गाथाद्वारसंक्षेपार्थः । व्यासार्थस्तु प्रतिद्वारमभिधातव्यः । तत्र प्रथमतो भूमिद्वारमाह—

२६ सेहस्स तिण्णिभूमी जहण्ण तह मज्झिमा य उक्कोसा । राइंदिव सत्त चउमासिया य छम्मासिया चेव ॥ ५२ ॥

शैक्षकस्य तिस्रो भूमयस्तद्यथा—जघन्या मध्यमा उत्कृष्टा च तत्र जघन्या सप्तरात्रिं दिवा, मध्यमा चातुर्मासिकी उत्कृष्टा षण्मासिकी ।

पुव्वोवट्ठपुराणे करणजयट्ठा जहण्णिया भूमी । उक्कोसा दुम्मेहं पडुच्च असद्दहाणं च ॥ ५३ ॥

उ. १०. भा. ५०-५७ ॥ १०२ ॥

पूर्वमुपस्थ उपस्थितः पूर्वोपस्थः स चासौ पुराणश्च पूर्वोपस्थपुराणस्तस्मिन् करणजयाय जघन्या भूमिर्भवति । इयमत्र भावना—यः पूर्वप्रव्रज्योत्प्रव्रजितः पश्चात्पुनरपि प्रव्रज्यां प्रतिपन्नवान् स सप्तमे दिवसे उपस्थापयितव्यः । तस्य हि यावद्भिर्दिवसैः पूर्वविस्मृतसामाचारीकरणमत्यन्तदुःखं भवति । एष जघन्या भूमिर्दुर्मेधसमश्रद्दधानं च प्रतीत्य उत्कृष्टा षण्मासिकी भूमिः ।

एमेव य मज्झिमिया अणहिज्जंते य सद्दहंते य । भावियमेहाविस्सवि करणजयट्ठाय मज्झिमिया ॥ ५४ ॥

एवमुक्ते उत्कृष्टे च अनधियाने अश्रद्दधाने च माध्यमिका भूमिः प्रतिपत्तव्या । अथवा भावितस्यापि श्रद्दधानस्यापि मेधाविनश्चापि च करणजयार्थं मध्यमिका भूमिः । गतं भूमिद्वारमधुना द्विविधपरिणामकद्वारमाह—

आणा दिट्ठंतेण य दुविहो परिणामगो समासेणं । आया परिणामो खलु तत्थ इमो होइ नायव्वो ॥ ५५ ॥

स द्विविधः परिणामको भवति तद्यथा आज्ञया दृष्टान्तेन, तत्र समासेन संक्षेपेण आज्ञापरिणामः खल्वयं वक्ष्यमाणो भवति तमेवाह—

तमेव सच्चं नीसंकं, जं जिणेहिं पवेइयं । आणाए अक्खातो जिणेहिं परिणामगो ॥ ५६ ॥

तदेव सत्यं यज्जिनैः प्रवेदितमित्येवं यो निःशङ्कं श्रद्दधाति न च कारणं जानीते एष आज्ञया परिणामको जिनैराख्यातः । दृष्टान्तपरिणामकमाह—

परोक्खं हेउगं अत्थं पच्चक्खेण उ साहयं । जिणेहिं एस अक्खातो दिट्ठंतपरिणामगो ॥ ५७ ॥

परोक्षहेतुकं हेतुना लिङ्गेन गम्यं तं हेतुकमर्थं प्रत्यक्षेण प्रत्यक्षप्रसिद्धेन दृष्टान्तेन साधयन् आत्मबुद्धावारोपयन् यो वर्तते एष दृष्टान्त-

व्य. सू. १६ परिणामको जिनैराख्यातो दृष्टान्तेन विवक्षितमर्थं परिणामयत्यात्मबुद्धावारोपयतीति दृष्टान्तपरिणामक इति व्युत्पत्तेस्तत्राज्ञापरिणामक-

॥ १०२ ॥ आज्ञयैव कायान् श्रद्दधाति । दृष्टान्तपरिणामकस्तु दृष्टान्तेन श्रद्दधापयितव्य इति तस्य कायश्रद्धानोत्पादनार्थमिदमाह—

**तस्सिंदियाणि पुव्वं सीसंते जइ उ ताणि सद्दहइ । तो से नाणावरणं सीसइ ताहे दसविहं तु ॥ ५८ ॥**

१८ तस्य दृष्टान्तपरिणामस्य पूर्वमिन्द्रियाणि श्रोत्रादीनि शिष्यन्ति । तत्र यदि तानीन्द्रियाणि श्रद्दधाति ततः तमेतस्य ज्ञानावरणं दश-
विधं शिष्यते । कथमित्याह—

**इंदियावरणं चेव नाणावरणाइयं । तो नाणावरणं चेवमाहियं तु दुपंचहा ॥ ५९ ॥**

इन्द्रियावरणं ज्ञानावरणं च तत्रेन्द्रियावरणं नाम इन्द्रियविषयशब्दादिसामान्योपयोगावरणं, ज्ञानावरणं इन्द्रियविषयेष्वेव शब्दादिषु

२२ विशेषोपयोगावरणमिन्द्रियावरणं, ज्ञानावरणं च श्रोत्रेन्द्रियादिभेदतः प्रत्येकं पञ्चप्रकारमेव ज्ञानावरणं द्विपञ्चधा दशप्रकारमाख्यातम् ।
तानेव दश भेदानविविक्ता ( वैवक्त्ये ) नाह—

**सोयावरणं चेव णाणावरणं च होइ तस्सेव। एवं दुयभेएणं णायव्वं जाव फासत्ति ॥ ६० ॥**

श्रोतावरणं तथा तस्यैव श्रोत्रस्य ज्ञानावरणमेवं द्विकभेदेन तावत् ज्ञातव्यं यावत्स्पर्शस्तद्यथा—चक्षुरिन्द्रियावरणं चक्षुरिन्द्रियज्ञानावरणं

२६ घ्राणेन्द्रियावरणं घ्राणेन्द्रियज्ञानावरणं रसनेन्द्रियावरणं रसनेन्द्रियज्ञानावरणं स्पर्शेन्द्रियावरणं स्पर्शनेन्द्रियज्ञानावरणमिति । साम्प्रतमिन्द्रि-
यावरणस्य विज्ञानावरणस्य विषयविभागार्थमिदमाह—

अपटुप्पण्णो बालो अतिवुड्ढो तह असन्नी वा ॥ ६१ ॥

उ. १०. भा. ५८–६५ ॥ १०२ ॥

वहिरस्स उ विन्नाणं आवरियत्तउण सोयमावरियं। न वि जाणंते किमयं सद्दो संखस्स पडहस्स ॥ ६२ ॥

विन्नाणावरियं तेसिं कम्हा जम्हा उ तेसुणं तावि।

वधिरस्य विज्ञानं श्रोत्रेंद्रियविज्ञानमाष्टतं सामान्यतः शब्दमात्रश्रवणेऽपि तद्गतविशेषापरिज्ञानात् । न तु श्रोत्रमाष्टतं सामान्यतः शब्द-मात्रश्रवणात् तथा योऽपटुप्रज्ञो वालो यश्चातिवृद्धो यो वाऽसंज्ञी अमनस्कः पंचेंद्रियः एतेषां विज्ञानमाष्टतं कस्मात् यस्मात् ते शृण्वन्तोऽपि नो वै जानते, ।किमयं शब्दः शंखस्य उत पटहस्येति ।

किं ते जीवमजीवाजीवात्ति य एव तेण उदियम्मि । भण्णइ एव वियाणसु जीवा चउरिंदिया बिंति ॥ ६३ ॥

किं ते वधिरादयो जीवा उताजीवास्तत्र जीवा एवेति तेनोदितं भण्यते एवं वधिरादिवत् चतुरिन्द्रिया अपि जीवा इति विजानीहि श्रोत्रावरणमात्रेण जीवत्वामच्युतेः ।

एवं चक्खुदिंय घाणिंदिय जिब्भिदियोवघाएहिं । एक्केक्कगहाणीए जावउ एगिंदिया नेया ॥ ६४ ॥

एवमेकैकहान्या एकैकेन्द्रियपरिहानितः चक्षुरिन्द्रिय घ्राणेन्द्रिय जिव्हेन्द्रियोपघातैः क्रमेण त्रीन्द्रियादयः तावत् ज्ञेया यावदेकेन्द्रियाः चक्षुरिन्द्रियोपघाते त्रीन्द्रिया घाणेन्द्रियोपघातेऽपि द्वीन्द्रियाः जिह्वेन्द्रियोपघातेऽप्येकेन्द्रियाः । इह पूर्वं विज्ञानावरणेऽपीन्द्रियमनाष्टतमुक्त-मिदानीमिन्द्रियावरणेऽपि विज्ञानमनाष्टतमुपदर्शयति ।

सन्निस्सिंदियघाए वि तन्नाणं नावरिज्जइ । विन्नाणं न तत्थ सन्नीणं विज्जमाणे वि इंदिए ॥ ६५ ॥

व्य. सू. संज्ञिन इन्द्रियघातेऽपि न ज्ञानमुपहतेन्द्रियज्ञानं नाव्रियते । एतच्चाग्रे भावयिष्यते । असंज्ञिनां पुनर्विद्यमानेऽपीन्द्रिये विज्ञानं नास्ति ।
१६ यथोक्तं प्राक् यथा चाग्रे वक्ष्ये । एतदेव भावयति—

॥ १०३ ॥ जो जाणइ य जच्चंधो वन्ने रूवे विकप्पसो । न ते वावरिते तस्स विन्नाणं तं तु चिट्ठइ ॥ ६६ ॥

पासत्ता वि न याणंति विसेसं वण्णमादिणं । बाला असन्निणो चेव विन्नाणाववरियम्मि उ ॥ ६७ ॥

१८ यो नाम जात्यन्धः स्पष्टचक्षुर्वर्णान् रूपाणि च विकल्पशोऽनेकप्रकारं जानाति तस्य नेत्रेऽप्यावृते तत् विज्ञानं तिष्ठति अन्धीभूतोऽपि वर्णविशेषान् रूपविशेषांश्च तथैव स्पर्शतो जानातीत्यर्थः । तथा बाला असंज्ञिनश्च पश्यन्तोऽपि विज्ञाने आवृते वर्णादीनां विशेषं न जानन्ति । तदेवमिन्द्रियोपघातेऽपि न विज्ञानोपघातो विज्ञानोपघातेऽपि नेन्द्रियोपघात इति विज्ञानेन्द्रिययोर्भेदस्तथैव तदावरणयोरपि भेद इति ज्ञानावरणं दशधा, सांप्रतमेकैकेन्द्रियहान्या यत् एकेन्द्रियत्वं पूर्वमुक्तं तद्भावयति—

२२ इंदिय उवघाएणं कमसो एगिंदि उव संवुत्तो । अणुवहए बहुकरणे विसुज्झती उसहादीहिं ॥ ६८ ॥

अवविज्जए उवविज्जए य जह इंदिएहिं सो पुरिसो । एस उवमा पसत्था संसारीणिंदिय विभागे ॥ ६९ ॥

कोऽपि पुरुषः क्रमशः क्रमेणेन्द्रियाणां श्रोत्रादीनामुपघातेन एकेन्द्रिय एव संवृत्तः । तत्र चानुपहते उपकरणे उपकरणेन्द्रिये पुनरौपधादिभिर्विशुद्ध्यति सर्वस्पष्टेन्द्रियो भवति । तत्र यथा स पुरुष इन्द्रियैरपचीयते उपचीयते च । एषा उपमा संसारिणामिन्द्रियविभागे
२६ प्रशस्ता तथैव संसारिणोऽपि पञ्चेन्द्रियाभूत्वा चतुरिन्द्रियास्त्रीन्द्रिया द्वीन्द्रिया एकेन्द्रियाश्च परिणमंति, पुनर्द्वीन्द्रियास्त्रीन्द्रियाश्चतुरिन्द्रियाः पञ्चेन्द्रियाश्च भवन्तीत्यर्थः ।

परिणामतो जं भणियं जिणेहिं अह कारणं न याणाति । दिठंते परिणामेण परिवाडी उक्कमकंमाणं ॥ ७० ॥

उ. १०, भा. ६६-७२ ॥ १०४ ॥

अथ यदुक्तं जिनैः परिणामतः संसारिणामिन्द्रियविभागस्तत्र कारणं न जानाति । एवं तेनोक्ते दृष्टान्तेन परिणाममधिकृत्य क्वचिदुत्क्रमपरिपाटी वक्तव्या । एतदेव सविस्तरं भावयति ।

चरिएण कप्पिएण व दिठंते ण व तहा तयं अत्थ । उवणेइ जहाणुपरो पत्तियइ अजोग्गरूवम्मि ॥ ७१ ॥

चरितेन कल्पितेन वा दृष्टान्तेन यथा तं विवक्षितमर्थमुपनयति । यथा परे अयोग्यरूपमपि प्रत्येति ।

दिठंतो परिणामे कहिज्जते उक्कमेण वि कयाइ । जह ऊ एगिंदीण वणसइ कत्थई पुव्वं ॥ ॥ ७२ ॥

दृष्टान्तान्परिणामयतीति परिणामस्तस्मिन् दृष्टान्तपरिणामके इत्यर्थः । कदाचिद्बोधोत्पादानुगुण्येन उत्क्रमेणापि कथ्यते । यथा शस्त्रपरिज्ञायामेकेन्द्रियाणां जीवत्वप्रसाधनविधौ पूर्वं प्रथमोद्देशके वनस्पतिः कथ्यते । अन्तिमे चोद्देशके वायुकायिकः । तत्र प्रथमत उत्क्रमेण वनस्पतीनां जीवत्वख्यापनार्थमाह—

पत्तंति पुप्फंति फलं वदंती, कालं वियाणंति तहेंदियत्थे ।
जाती य बुद्धी य जरा य जेहिं, कहं न जीवा उ भवंति ते ऊ ॥ ७३ ॥

ये पत्रयन्ति पत्राणि मुञ्चन्ति । पुप्फंति पुष्पभाजो भवन्ति फलं च ददति कालं च स्वपत्रपुष्पफलनिमित्तं जानन्ति । इन्द्रियार्थांश्च गीतादीन् ये विजानन्ति बकुलादीनां तथा दर्शनात् । तथा तेषां जातिर्वृद्धिर्जरा च, ते कथं न जीवा भवन्ति ? भवन्त्येवेति भावः । पुरुषादिधर्माणां सर्वेषामपि तत्रोपम्यमानत्वात्, प्रयोगश्च वनस्पतयो जीवा जातिजरावृद्ध्याद्युपेतत्वात् मनुष्यवत्—

व्य. सू. जाहे ते सद्दहिया ताहे कहिज्जंति पुढविकाइया, । जह उ पवालग लोणा उवल गिरीणं च परिवुड्ढी ॥७४॥
१६ यदा ते वनस्पतयो जीवत्वेन श्रद्धिता भवन्ति तदा पृथिवीकायिका जीवाः ( कथ्यन्ते, यथा) प्रवालादिषु परिवृद्धिदर्शनात् ।
॥ १०४ ॥ कललंडरसादीया जह जीवा तहेव आउजीवावि । जोइंगणखज्जुए वा जहुण्ह तह तेउ जीवावि ॥७५॥

१८ यथा कललं गर्भप्रथमावस्थारूपमण्डरस इत्येवमादयो जीवास्तथैवाप्कायजीवा अपि प्रतिपत्तव्याः, प्रयोगः अप्कायिका जीवा अनुपहतत्वे सति द्रवत्वात् कललं च रसादिवत् । तथा यथा ज्योतिरङ्गणः खद्योतकः यथा वा ज्वरिते उष्मेति स जीवस्तथा तेजोजीवा अपि । प्रयोगभावना त्वेवम्—तेजस्कायिका जीवा असूर्यकिरणत्वे सत्यूष्मधर्मोपेतत्वात् ।

जाहे सद्दहिते तेऊ वाऊ जीवा से ताहे सीसंति । सत्थपरिण्णाएवि य उक्कमणं तु एयट्ठा ॥ ७६ ॥

२२ यदा तेजस्कायिकान् जीवत्वेन श्रद्दधाति तदा से तस्य वायवो जीवाः शिष्यन्ते तथा वायवो जीवा अपरे प्रेरितत्वे सति तिर्यग्गति गमनात् गवादिवत् शस्त्रपरिज्ञायामप्युत्क्रमकरणं पूर्वं वनस्पत्युद्देशस्यान्ते वायुकायिकोद्देशस्य करणमित्यर्थः । तदर्थं सुखेन जीवत्वप्रतिपत्त्यर्थं; उपसंहारमाह—

एस परिणामगो भणितो अहुणा उ जङ्गं वुच्छामि । सो दुविहो नायव्वो भासाए सरीरजङ्गो उ ॥ ७७ ॥

२६ एष द्विविधोऽपि परिणामक उक्तोऽधुना जड्डं वक्ष्ये । स जड्डो द्विविधो ज्ञातव्यः, तद्यथा—भाषणायां भाषाजड्डः शरीरजड्डश्च ।

जलमुगएलमूगो मम्मणमूगो य भासजङ्गो य । दुविहो सरीरजङ्गो तुल्लो करणे अनिपुणो अ ॥ ७८ ॥

उ. १०, भा. ७४–८३ ॥ १०५ ॥

भापाजड्डस्त्रिविधस्तद्यथा–जडमूक एडकमूक मन्मनमूकश्च । शरीरजड्डो द्विविधस्तद्यथा–शरीरेण क्रियायामनिपुणश्च ।

पढमस्स नत्थि सद्दो जलमज्झे व भासए । बीयउ एलगो चेव अच्चंत वुच्चुयायइ ॥ ७९ ॥

अथ मत्स्यजलमूकस्य जलमध्ये इव भापमाणस्य नास्ति शब्दः, द्वितीय एडमूकः एडकमिव वुच्छुयायते ।

मम्मणो पुण भासंतो खलए अंतरंतरा । चिरेण नीति से वाया अविसुद्धा व भासते ॥ ८० ॥

मन्मनः पुनर्भापमाणो अन्तरंतरा स्खलति यदि वा तस्य भाषमाणस्य वाक् चिरेण तस्य निर्गच्छति अविशुद्धा वा । सम्प्रति वन्तजड्डेति द्वारमाह—

दुविहेहिं जड्डदोसे विसुद्धं जो उ उज्जती । काया चत्ता भवे तेणं मासा चत्तारि भारिया ॥ ८१ ॥

द्विविधेन जड्डदोषेन विशुद्धं य उज्झति तेन कायाः षट्कायास्त्यक्ता भवेयुः न संरक्षितास्तथास्य प्रायश्चित्तं चत्वारो गुरुका मासाः । एतेन संभोजनद्वारं व्याख्यातम् ।

कहिए सद्दहिए चेव उवविंति परिग्गहे । मंडलीए उवट्ठत्तु इमे दोसा य अंतरा ॥ ८२ ॥

षट् जीवनिकाये कथिते श्रद्धिते च पततग्रहे उपवेन्ति पतग्रहे तत्र समुद्देशाप्यते इत्यर्थः । एतदनुपस्थापितो भवति तदा तं मण्डल्यां समुद्देशयेत् । अन्तरा पुनर्भेद्यमाने इमे वक्ष्यमाणा दोषास्तानेवाह—

पायस्स विराहण अतिहीदट्ठूण उड्ढगमणं वा । सेहस्स दुंगुच्छा सव्वे दुदिट्ठधम्मत्ति ॥ ८३ ॥

व्य. सू. उत्पाटयतो नयत आनयतो नयतो वा पात्रस्य विराधना स्यात् । यदि वा अतिथीन् दृष्ट्वा तस्य वंति वमनं प्रवर्तते गमनत्वात्तत एव
१६ प्रदेशात् कुर्यात् । शैक्षकस्य वा जुगुप्सा जनेन क्रियते यथा केनापि दोषेण दुष्ट एष ततः पृथग् भुङ्क्ते । सर्वान्वा कश्चित् जुगुप्सीत यथा
॥ १०५ ॥ पात्रमप्येवंभूतं भोजनात् बहिः कुर्वन्ति अहो दुष्टधर्माण इति । सम्प्रति भूमित्तिय विवेगो इति व्याख्यानार्थमाह—

**जलमूग एलमुगो सरीरजड्डो य जो जायइ तुल्लो । जं वुत्तंति विवेगो भूमित्तिय ते न दिक्खिज्जा ॥ ८४ ॥**

१८ यदुक्तम्—भूमित्रिकस्य विवेक इति । तस्यायमर्थः जलमूक एडमुकः शरीरजड्डश्च । योऽतिस्थूलस्तानेतान् त्रीन् न दीक्षयेत् ।

**दुम्मेहमणतिसेसी न जाणती जो य करणतो जड्डो । ते दुन्निवि तेण उ सो दिक्खेइ सिया सो अतिसेसी ॥८५॥**

दुर्मेधसंयतश्च करणतो जड्डस्तमनतिशेषी अनतिशायी न जानाति तेन कारणेन तौ द्वावपि स दीक्षयेत् । अथ स्यात्सोऽतिशेषी ततो न दीक्षयति ।

२२ **अहव न भासा जड्डं जहाइति परं परागतं च्छउमो । इयरंपि देसहिंडग असतीए वावि टूविज्जा ॥ ८६ ॥**

अथवा भाषाजड्डत्ति दुर्मेधसं परं परागतं मातृपक्षपरं परागतं गुरुपक्षपरं परागतं च छद्मस्थो न त्यजति इतरमपि करणजड्डं देशहिण्डकस्य देशदर्शनाय असति चान्यस्मिन् साधौ दीक्षयेदन्यथा विवेचयेत् न दीक्षयेत् दीक्षयन् वा परिष्ठापयेत् । अत्रैव मतान्तरं दूषयति—

**मासतुसानाएणं दुम्मेहतंपि केइ इच्छंति । तं न भवति पलिमंथो णयावि चर विणा णाणं ॥ ८७ ॥**

२६ केचित् माषतुषज्ञातेन दुर्मेधास्तमपि दीक्षितुमिच्छन्ति तन्न भवति यतो दुर्मेधसः पाठने स्वयं सूत्रार्थयोः पलिमन्थः न चापि तस्य
ज्ञानं विना चरणं तत आत्मनः परस्य च केवलक्लेशान्न तद्दीक्षणमिति ।

नातिथुलं न उज्झत्ति मेहावी जो अ वोव्वडो । जलमुगमेलमुगं च परिठावेज्ज दोण्णिवि ॥ ८८ ॥

नातिस्थूलं नोज्झयन्तीत्यर्थः । यश्च मेधावी वोब्बडो भाषाजड्डस्तमपि नोज्झति । जलमूकं मेडकमूकं द्वावप्येतौ परिष्ठापयेत्—

मुत्तूण करणजड्डं परिवट्टंति जाव सेस छम्मासा । एक्केक्कं छम्मासो जस्स य दट्ठुं विविंचणया ॥ ८९ ॥

मुक्त्वा करणजड्डं शेषं दुर्मेधसं भाषाजड्डं यावत्षण्मासास्तावत् परिवर्तयन्ति अनुवर्तयन्ति । ततः परमन्यस्याचार्यस्य समर्प्यते । सोऽपि षण्मासान् परिवर्तयति तदनन्तरमन्यस्य सोऽपि षण्मासात्परमेकैकं तस्य षण्मासास्तत्र त्रयाणामाचार्याणां मध्ये यस्य समीपं संख्यां गृहीतवान् । यावन्तं दृष्ट्वा याचते ममैनं शिक्षां देहीति तस्य विवेचनं तस्य दानमित्यर्थः । अमुमेवार्थं स्पष्टतरमाह—

तिण्हं आयरियाणं जोणं गाहेइ सीस तस्सेव । जइ एत्तिएण गाहित्तो न परिट्ठावए ताहे ॥ ९० ॥

त्रयाणामाचार्याणां मध्ये यो ग्राहयति तस्यैव शिष्यः स दीयते । यदि एतावता आचार्यत्रिकेण परिपाट्या मिलित्वा ग्राहितो भवति ततस्तदा न परिस्थाप्यते ।

देंति य जंगमथेराण वावि अहवा वि दट्ठूणं जो उ । भणती मज्झं कज्जं दिज्जति तस्सेव सो ताहे ॥ ९१ ॥

अथवा अजङ्गमस्थविराणां स वैयावृत्यकरणाय दीयते यदि वा यस्तं दृष्ट्वा भणति–मम कार्यमेतेन तस्माद्दीयतामिति । ततस्तस्यैव दीयते—

जो पुण करणे जड्डो उक्कोसं तस्स होइ छम्मासा । कुलगणसंघनिवेयण एयं तु विहिं तहिं कुज्जा ॥ ९२ ॥

यः पुनः करणे जड्डः तस्योत्कृष्टं परिपालनं भवति यावत् षण्मासाः । ततः परं कुलस्य गणस्य संघस्य वा निवेदनं क्रियते । स

व्य. सू. १७-१८ ॥ १०६ ॥

यत्करोति तत्प्रमाणमेतं विधिं कुर्यात् ॥

सूत्रम्—नो कप्पइ निग्गंथाण वा निग्गंथीण वा खुड्डगं वा खुड्डियं वा उणट्ठ वासजायं उवट्ठावेत्तए वा संभुञ्जित्तएवा ॥ १७ ॥ कप्पइ निग्गन्थाणवा निग्गन्थीण वा खुड्डगं वा खुड्डियं वा साइरेगअट्ठवासजायं उवट्ठावेत्त
१८ ए वा संभुञ्जित्तए वा ॥ १८ ॥ अस्य संबंधप्रतिपादनार्थमाह—

पव्वज्जा परियातो वुत्तो सेहो उ विज्जए जत्थ। जम्मण परियागस्स उ विजाणणट्ठा इमं सुत्तं ॥ ९३ ॥

प्रव्रज्यापर्यायोऽनन्तरसूत्रेणोक्तो यत्र शिष्यः स्थाप्यते। संप्रति तस्यैव जन्मपर्यायस्य विज्ञानार्थमिदं सूत्रमित्येष सम्बन्धः। सूत्राक्षरगमनिका—न कल्पते निर्ग्रन्थानां निर्ग्रन्थीनां वा क्षुल्लकं वा क्षुल्लिकां वा ऊनाष्टवर्षजातमुपस्थापयितुं वा संभोक्तुं वा मण्डल्यां, तथा
२२ कल्पते निर्ग्रन्थानां वा क्षुल्लकं वा क्षुल्लिकां वा सातिरेकाष्टवर्षजातमुपस्थापयितुं वा उपस्थाप्य मण्डल्यां संभोक्तु वा अथ कस्मादूनाष्टवर्षजातस्योपस्थापनादि न कल्पते। अत आह—

ऊणट्ठए चरित्तं न चिट्ठए चालणीए उदगं वा। बालस्स य जे दोसा भणिया आरोवणा दोसा ॥ ९४ ॥

ऊनाष्टकेनाष्टवर्षजाते बाले चालिन्यामुदकमिव चारित्रं न तिष्ठति तथा ये बालस्य दोषा भणिता या च बालस्योपस्थापने आरो-
२६ पणा सा प्रसजति। बालस्य दोषानाह—

कायवइमणोजोगो हवंति तस्स ण वङ्घिया जम्हा। संबंध अणाभोगे उमे सहसा ववादेणं ॥ ९५ ॥

तस्य वालस्य कायवाङ्मनोयोगा यस्मादनवस्थिता भवन्ति तस्मान्नोपस्थापयेत। यत्रैवापवादमाह—सम्बन्धिनमनाभोगे अवमे दुर्भिक्षे सहसाकारेणं संभोजनेऽपवादेनोपस्थापयेत् ऊनाष्टवर्षजातमपि। तत्र सम्बन्धिद्वारव्याख्यानार्थमाह—

**भुंजिस्से समयासद्धिं नीयो निच्छइ संपयं। सो अ नेहेण संबंधो कहं चिठेज्ज तं विणा ॥ ९६ ॥**

एष वालको मया सह भोक्ष्यते इत्येव भणित्वा नीतो मण्डल्यां स च सम्प्रति तमाचार्यं विना भोक्तुं नेच्छति, । स वाचार्यस्यस्नेहेन सम्बधस्ततः कथं प्रवज्यायां गृहीतायां सह भोजनं विना तिष्ठेत्, नैव तिष्ठेदिति भावः ।

**अणुवट्ठविउ एसो संभुंजइ मा बुवेज्ज अपरिणयो। ताहोवट्ठाविज्जइ तो णं संभुंजए ताहे ॥ ९७ ॥**

तत्र हु निश्चितमपरिणता मा ब्रूयुरेव यथैषोऽनुपस्थापितो मण्डल्यां संभुङ्क्ते ततः स तदा उपस्थाप्यते तदनन्तरं संभोजनं—मण्डल्यामिति।

**अहव अणाभोगेण सहसक्कारेणं वावि हुज्ज संभुत्तो। उमम्मि वि सहु तत्तो विप्परिणामं तु गच्छेज्जा ॥९८॥**

अथवा अनाभोगेन सहसाकारेण वा मण्डल्यां स युक्तो भूयात्। ततोऽस्य मा प्रापदनवस्थाप्रसङ्ग इति तमूनाष्टवर्षजातमप्युपस्थाप्य मण्डल्यां संभोजयेत्। अवमे दुर्भिक्षे जाते मा विपरिणामं गच्छेदिति उपस्थाप्य मण्डल्यां संभोज्यते। एतदेव भावयति—

**अदिक्खायतो मा मे मं इमे पछन्नभोजिणो। अपरोहमिति भावेज्जा तेणावि सह भुंजते ॥ ९९ ॥**

इमे प्रच्छन्नभोजिनो मा मेऽवमे दुर्भिक्षे अदीक्षयन्ति अदीक्षां कर्तुमिच्छन्ति तेन कारणेनाहं परः कृत इति स भावयेत्। ततस्तेनापि सह झटित्येवोपस्थापितेन संभुंक्ते ॥

**सूत्रम्—नो कप्पइ निग्गन्थाण वा निग्गन्थीण वा खुड्डगस्स वा खुड्डियाए वा अवञ्जणजायस्स आयारपकप्पे**

नाम अज्झयणे उद्दिसित्तए ॥ १९ ॥ कप्पइ निग्गंथाण वा निग्गन्थीण वा खुड्डगस्स खुड्डियाए वा वञ्जणजायस्स आयारपकप्पे नाम अज्झयणे उद्दिसित्तए ॥ २० ॥

लेहट्टट्ठमचरिमे उवठामो पसंगओ । उद्देसो सेससुत्तंपि सुत्तस्सेस उवक्कमो ॥ १०० ॥

१८ रेखास्थं परिपूर्णमष्टमं वर्षं यस्य से रेखास्थाष्टमवर्षस्तस्मिन् प्रमत्तसूत्रेणोपस्थापनाज्ञानात्ततो मा तत्प्रसङ्गतः शेषसूत्रमप्युद्दिशेदिति सूत्रस्याधिकृतस्य एप उपक्रमः सम्बन्धः। सूत्रस्य व्याख्या न कल्पते निर्ग्रन्थानां वा क्षुल्लकस्य वा क्षुल्लिकावा वा अव्यञ्जनजातस्य न व्यञ्जनान्युपस्थारोमाणि जातानि यस्य स तथा तस्य आचारप्रकल्पो नामाध्ययनं निशीथापरपर्यायमुद्देष्टुं । अत्र कारणं भाष्यकृदाह—

अहिअट्ठमवरिसस्स विओरवि पढितेन उकप्पा । देंति अवंजणजातस्स वंजणाणं परूवणा ॥ १०१ ॥

२२ जहा चरित्तं धारेउ ऊणठो वज्ज पच्चको । तहावि वुक्कं वुद्धी उ अववायस्स नो सहू ॥ १०२ ॥

अधिकाष्टवर्षस्यास्य पठितेऽप्याचारे अव्यञ्जनजातस्य अत्र व्यञ्जनानां प्ररूपणा कर्तव्या । सा च सूत्रव्याख्यायां कृता, न तु नैव सूरयः प्रकल्पमाचारप्रकल्पं नामाध्ययनं ददति । कुत इत्याह—जहेत्यादि यथा ऊनाष्टा ऊनाष्टवर्षश्चारित्रं धारयितुमप्रत्यलोऽयमर्थः । तथा अजातव्यंजनतया अपक्वबुद्धिरपरिपाका या बुद्धिरपवादस्य धारणे न ददति; तथा कल्पते निर्ग्रन्थानां निर्ग्रन्थीनां वा क्षुल्लकस्य वा क्षुल्लि-
२६ काया वा व्यञ्जनजातस्य आचारप्रकल्पो नामाध्ययनमुद्देष्टुं अथ स्तोककालादू दीक्षितश्चापि जातव्यञ्जनस्य दीयते न किंवा नेत्यतआह—

सूत्रम्—तिवासपरियायस्स समणस्सणिग्गंथस्स कप्पइ आयारपकप्प नामं अज्झयणे उद्दिसित्तए ॥ २१ ॥

जातव्यंजनस्यापि त्रिवर्षपर्यायस्य श्रमणस्य निर्ग्रन्थस्य कल्पते आचारप्रकल्पो नामाध्ययनमुद्देष्टुं यदि पुनस्त्रयाणां वर्षाणां आरत

उ. १०. भा. १००-१०५ ॥ १०८ ॥ जातव्यंजनस्यापि त्रिवर्षपर्यायस्य श्रमणस्य निर्ग्रन्थस्य कल्पते आचारप्रकल्पो नामाध्ययनमुद्देष्टुं यदि पुनस्त्रयाणां वर्षाणां आरत

उद्दिशति ततस्तस्य प्रायश्चित्तं चत्वारो गुरुकाः । त्रिवर्षपर्यायस्याप्यपरिणामकस्यातिपरिणामकस्य चोद्दिशतश्चतुर्गुरुकं । उद्दिशति ततस्तस्य प्रायश्चित्तं चत्वारो गुरुकाः ।

उद्दिशति ततस्तस्य प्रायश्चित्तं चत्वारो गुरुकाः । त्रिवर्षपर्यायस्याप्यपरिणामकस्यातिपरिणामकस्य चोद्दिशतश्चतुर्गुरुकं ।

सूत्रम्—चउवासपरियागस्स समणस्स निग्गंथस्स कप्पइ सुयगडे नामं अंगे उद्दिसित्तए ॥ २२ ॥ पंचवा-सपरियागस्स समणस्स निग्गंथस्स कप्पति दसाकप्पववहाराओ दिसित्तएवि ॥ २३ ॥ अट्ठवासपरियागस्स सम-णस्स निग्गंथस्स कप्पति ठाणसमवाए उद्दिसित्तए ॥ २४ ॥ दसवासपरियागस्स समणस्स निग्गंथस्स कप्पति विवाहे नामं अंगं उद्दिसित्तए ॥ २५ ॥ चतुर्वर्षपर्यायस्य श्रमणनिर्ग्रन्थस्य कल्पते सूत्रकृतं नामाङ्गमुद्देष्टुं पञ्चवर्षपर्यायस्य दशक-ल्पस्य व्यवहारा विकृष्टो नाम षड्भ्य आरभ्य नव वर्षाणि यावत् तत्पर्यायस्य स्थानं समवायस्य दशवर्षपर्यायस्य व्याख्याप्रज्ञप्तिः । पञ्चम-मङ्गमेतदेव सहेतुकं वक्तुकामो भाष्यकृदाह—

चउवासे सुयगडं कप्पववहार पंचवासस्स । विगट्ठ ठाणस्स समवातो दसवरिसविवाहपण्णत्ती ॥ १०३ ॥

चतुश्चतुर्वर्षपर्यायस्य सूत्रकृतं पञ्चवर्षस्य कल्पव्यवहारावुपलक्षणमेतत् । दशाश्रुतस्कन्धश्चाविकृष्टपर्यायस्य स्थानं समवायश्च दशवर्ष-पर्यायस्य व्याख्याप्रज्ञप्तिमुद्दिशति । किं कारणमेतावत् कालातिक्रमणे तत आह—

चउवासो गाढमती न कुसमएहिं तु हीरए सो उ । पंचवरिसे उ जोग्गो अववायस्सत्ति तो देंति ॥ १०४ ॥
पंचण्हुवरि विगिट्ठो सुयथेरा जेण तेण उ विगिट्ठे । ठाणं महिड्ढियंति य तेणं दसवासपरियाए ॥ १०५ ॥

सूत्रकृताङ्गे त्रयाणां त्रिषष्ठ्यधिकानां पापण्डिकशतानां दृष्टयः प्ररूप्यन्ते ततो हीनपर्यायो मतिभेदेन मिथ्यात्वं यायात् । चतुर्वर्षप-
व्य. सू. यायस्य धर्मेऽवगाढमति र्भवति ततः कुसमयैर्नापह्रियते तेन चतुर्वर्षपर्यायस्य तदुद्देष्टुमनुज्ञातं तथा पञ्चवर्षोपवादस्य योग्य इति कृत्वा पञ्च-
२६–२८ र्यायस्य धर्मेऽवगाढमति र्भवति
॥ १०८ ॥ वर्षस्य दशकल्पव्यवहारान् ददाति । तथा पञ्चानां वर्षाणामुपरि पर्यायो विकृष्ट उच्यते येन कारणेन स्थाने समवाये नवाधीतेन श्रुतस्थविरा भवन्ति तेन कारणेन तदुद्देशनं प्रति विकृष्टपर्यायो गृहीतस्तथा स्थानं समवायश्च महर्धिकं प्रायेण द्वादशानामप्यङ्गानां तेन सूचनादिति तेन तत्परिकर्मितमतौ दशवर्षपर्याये व्याख्याप्रज्ञप्तिरुद्दिश्यते ।

१८ सूत्रम्—एक्कारसवासपरियागस्स समणस्स निग्गंथस्स कप्पइ खुड्डिया विमाणविभत्ती । महल्लिया विमाणपवित्ती अंगचूलिय वंगचूलिया विवाहचूलिया नामं अज्झयणमुद्दिसित्तए ॥ २६ ॥ अस्य व्याख्या—

एक्कारस्स वासस्स खुड्डीया महल्ली विमाणपविभत्ती । कप्पइ य अंगवंगे विवाहे चेव चूलीओ ॥ १०६ ॥

२२ अंगाणमंगचूली महकप्पसुयस्स वग्गचूलीओ । विवाहचूलिया पुण पण्णत्तीए मुणेयव्वा ॥ १०७ ॥

एकादशवर्षस्य क्षुल्लिकाविमानप्रविभक्तिर्यत्र कल्पेषु विमानानि वर्ण्यन्ते । महतीविमानप्रविभक्तिर्यत्र विमानान्येव विस्तरेणाभिधीयन्ते । अङ्गानामुपासकदशाप्रभृतीनां पञ्चानां चूलिका निरावलिका अङ्गचूलिका महाकल्पश्रुतस्य चूलिका, वर्गचूलिका व्याख्या पुनः प्रज्ञप्तेर्व्याख्याप्रज्ञप्ते श्चूलिकामंतव्या ।

२६ सूत्रम्—बारसवासपरियागस्स समणस्स निग्गंथस्स कप्पइ । अरुणोववाए गरुलोववाए ववरुणोवाए वेस-

व्य. १०. भा. १०६-१११ ॥ १०९ ॥

मणोववाए वेलंधरोववाए नामअज्झयणं उद्दिसिउं ॥ २७ ॥

वारसवासे अरुणोववाय वरुणो य गरुलवेलंधरो । वेसमणुववाए य तहा य ते कप्पति उद्दिसिउं ॥ १०८ ॥

द्वादशवर्षपर्यायस्य अरुणोपपातो वरुणोपपातो गरुडोपपातो वेलंधरोपपातो वैश्रमणोपपातश्च । एतानि पञ्चाध्ययनानि उद्देष्टुं कल्पन्ते ।

तेसिं सिरिनामा खलु परियट्टंति एंति देवा उ । अंजलि मउलिय हत्था उज्जावेत्ता दसदिसा उ ॥ १०९ ॥

नागावरुणो वासं अरुणा गरुला य वीयगं देंति । आगंतूण य बेंती संदिसह कि करेमित्ति ॥ ११० ॥

तेषामरुणोपपातादीनामध्ययनानां ये सदृशनामानः खल्वरुणादयो देवास्ते यदि तान् प्रणिधायाध्ययनानि परावर्तन्ते तदा ते अञ्जलिमुकुलितहस्ता दशापि दिश उद्योतयन्ति समागच्छन्ति समागत्य च किङ्करभूताः पर्युपासते; तथा नामानो वरुणाश्च गन्धोदकादिवर्षं वर्षन्ति । अरुणो गरुडाश्च वीजकं सुवर्णं ददतः प्रत्यासन्नमागत्य च ब्रुवते सन्दिशत किं कुर्मो वयमिति ।

सूत्रम्—तेइस वासपरियागस्स समणस्स निग्गंथस्स कप्पइ । उट्ठाणसुए समुट्ठाणसुए देविंदोववाए णागपरियावणियाए ॥ २८ ॥ अस्य व्याख्या—

तेरसवासे कप्पइ उट्ठाणसुए तहा समुट्ठाणे देविंद परियावण नागाण तहेव परियावणीया ॥ १११ ॥

त्रयोदशवर्षस्य कल्पते उत्थानश्रुतं तथा समुत्थानं श्रुतं देवेन्द्रपरियापनिका नागानां तथैव परियापनिका नागपरियापनिका इत्यर्थः ।

साम्प्रतममीषामध्ययनानामतिशयमाह—

परियट्टिज्जइ अहियं उट्ठाणसुयं तु तत्थ उट्ठेइ । कुलगामदेसनामादी समुट्ठाणसुए निविस्सन्ति ॥ ११२ ॥

देविंदा नागा विय परियाणीमुवेंति ते दोवी । चोद्दसवासुद्देसी महसुमिणभावणज्झयणं ॥ ११३ ॥

यत्र प्रणिधाय उत्थानश्रुतं परावर्त्यते तत्र कुलग्रामदेशादि उत्तिष्ठति उद्वसीभवतीत्यर्थः । ततः कार्ये निष्पन्ने समुत्थानश्रुते परावर्त्यमाने ते कुलग्रामदेशादयः स्वस्थीभूय पुनर्निविशन्ति; । देवेन्द्रपरियापनिकायां परावर्त्यमानायां देवेन्द्रा नागपरियापनिकायां नागाः
१८ समागच्छन्ति ।

सूत्रम्—चउदसपरियागस्स समणस्स निग्गंथस्स कप्पति सुमिणभावणा नामं अज्झयणमुद्दिसित्तए ॥२९॥

चतुर्दशवर्षपर्यायस्य श्रमणस्य निर्ग्रन्थस्य कल्पते महास्वपनभावनानामाध्ययनमुद्देष्टुं चोद्दसवासुद्दिसए इत्यादि भाष्यगाथोत्तरार्धं सुप्रतीतमधुनाध्ययनार्थमाह—

२२ इच्छंती सुसुमिणा बायाला चेव हुंति महासुमिणा । बायत्तरि सव्वसुमिणा वन्निज्जंते फलं तेसिं ॥ ११४ ॥

अत्र महास्वप्नभावनाध्ययने त्रिंशत्सामान्यस्वप्नाः द्वाचत्वारिंशन्महास्वप्ना वर्ण्यन्ते फलं च तेषां वर्ण्यन्ते ।

सूत्रम्—पण्णरसवासपरियायस्स समणस्स निग्गंथस्स कप्पइ चारणभावणा नामज्झयणमुद्दिसित्तए ॥ ३० ॥

अत्र भाष्यम्—

२६ पन्नरसे चारणभावणंति उद्दिसिए उ अज्झयणं । चारणलद्धी तहियं उपज्जंती तु अहियम्मि ॥ ११५ ॥

उ. १०. भा. ११२-११७ ॥ ११० ॥

पञ्चदशे पञ्चदशवर्षपर्यायस्य चारणभावनेत्यध्ययनमुद्दिश्यते । तस्य कोऽतिशय इत्याह—चारणलब्धिः तस्मिन्नधीते उत्पद्यते येन वा तपसा कृता चारणलब्धिरुपजायते तदुपवर्ण्यते ।

सूत्रम्—सोलसवासपरियायस्स समणस्स णिगंथस्स कप्पइ तेअनिसग्गा नाम अज्झयणमुद्दिसित्तए ॥३१॥ सत्तरसवासपरियायस्स समणस्स निग्गंथस्स आसीविसभावणा नाममज्झयणमुद्दिसित्तए ॥ ३२ ॥ अट्ठारसवास-परियायस्स समणस्स निग्गंथस्स कप्पत्ति दिट्ठीविसभावणा नाममज्झयणमुद्दिसित्तए ॥ ३३ ॥ एगुणवीसवास-परियायस्स समणस्स निग्गंथस्स कप्पइ दिट्ठिवायनामंग उद्दिसित्तए ॥ ३४ ॥ विसतिवासपरियाए समणे निग्गंथे सव्वसुयाणुवाती भवति ॥ ३५ ॥ अस्य व्याख्या—

तेअनिसग्गा सोलसआसीविसभावणं च सत्तरसे । दिट्ठिविसमट्ठारस उगुणवीसे दिट्ठिवाओ उ ॥ ११६ ॥

षोडशवर्षे तेजोनिसर्गोनामाध्ययनमुद्दिश्यते । सप्तदशे वर्षे आसीविसभावनामुद्दिश्यन्ते । दृष्टीविषभावनामष्टादशे वर्षे एकोनविंशतितमे वर्षे दृष्टिवादोनाम द्वादशमङ्गमुद्दिश्यते । साम्प्रतमेतेषामध्ययनानामतिशयानाह—

तेयस्स निसरणं खलु आसीविसत्तं तहेव दिट्ठिविसं । लद्धीतो समुप्पज्जे समहीएसुं तु एएसु ॥ ११७ ॥

एतेषु तेजोनिसर्गप्रभृतिष्वध्ययनेषु यथाक्रमं तेजसो निस्सरणमासीविषत्वं दृष्टीविषमित्येव लब्धयः समुत्पद्यन्ते । इयमत्र भावना तेजोनिसर्गेऽध्ययनेऽधीतो तेजोनिस्सरणलब्धिरुत्पद्यते-येन वा तपसा कृता तेजोलब्धिर्भवति । तच्च उपवर्ण्यते, आशीविषसंभावनायां

व्य. सू. पठितायां आशीविपत्वलब्धैर्वा समाचरणैरासीविषतया कर्म वध्यते, तान्युपवर्ण्यन्ते । एवं दृष्टीविषभावनायामपि भावनीयम् ।

३५-३६ **दिट्ठिवाए पुण होइ सव्वभावाण रूवणं । नियमा सव्वसुयाणुवाइ वीसइ वासे उ बोधव्वो ॥ ११८ ॥**

॥ ११० ॥ दृष्टिवादे पुनर्भवति सर्वभावानां रूपणं प्ररूपणं नियमात् विंशतिवर्षः पुनः सर्वश्रुतानुपाती भवति। सर्वमपि श्रुतं यथा भणितेन योगेन तस्य पठनीयं भवति । अथ कस्य तीर्थकरस्य काले कियन्ति प्रकीर्णकान्याभवन्त्यत आह—

१८ **चउद्दसय सहस्साइं पइण्णगाणं तु वद्धमाणस्स। सेसाण जत्तिया खलु सीसा पत्तेयबुद्धाओ ॥ ११९ ॥**

भगवतो वर्धमानस्वामिनः तीर्थे चतुर्दशप्रकीर्णकसहस्राण्यभवन् शेषाणां च तीर्थकृतां यस्य यावन्तः शिष्यास्तस्य तावन्ति प्रकीर्णकानि प्रत्येकबुद्धा अपि तस्य तावन्तः ।

**पत्तस्स पत्तकाले एयाणि जो उ उद्दिसे तस्स । निज्जरलाभो विपुलो किह पुण तं मे निसामेह ॥ १२० ॥**

२२ पात्रस्य योग्यस्य परिणामकस्येत्यर्थः । एतेनापात्रेऽपरिणामकेऽतिपरिणामके वा ददानो महती श्रुताशातनेति प्रतिपादितम् । प्राप्ते काले यथोदिते एतानि प्रकीर्णकानि य उद्दिशति तस्य सुविपुलो निर्जरालाभः कथं पुनः सविपुलो निर्जरालाभः । सूरिराह—तं विपुलं निर्जरालाभं कथ्यमानं निशमयत मेते कथयति ।

**कम्ममसंखेज्जभवं खवेइ अणुसमयमेव आउत्तो । अन्नयरम्मि जोगे सज्झायम्मी विसेसेण ॥ १२१ ॥**

२६ कर्म ज्ञानावरणीयादिकमसंख्येयभवोपार्जितमन्यतरकेऽपि योगे प्रतिलेखनादावायुक्तो अनुसमयमेव क्षपयति, विशेषतः स्वाध्याये आयुक्तः ।

उ. १०. भा. ११८-१२४ ॥ १११ ॥

आयारमादियाणं अंगाणं जाव दिट्ठिवातो उ । एसविही विण्णेओ सव्वेसिं आणुपुव्वीए ॥ १२२ ॥

आचारादिकानामङ्गानां यावत् दृष्टिवादो दृष्टिवादपर्यन्तानां सर्वेषामानुपूर्व्या एषोऽनन्तरोदितो विधिर्विज्ञेयः । पात्रस्योचिते काले यदुचितमङ्गं तद्दातव्यं, न शेषमित्यर्थः ॥

सूत्रम्—दसविहे वेयावच्चे पण्णत्ते । तं जहा—आयरियवेयावच्चे । उवज्झायवेयावच्चे, थेरवेयावच्चे तवस्सि वेयावच्चे, सेहवेयावच्चे, गिलाणवेयावच्चे, साहम्मियवेयावच्चे, कुलवेयावच्चे, गणवेयावच्चे, संघवेयावच्चे । आयरियवेयावच्चे करेमाणे समणे निग्गंथे महानिज्जरे महापज्जवसाणे भवति । अस्याक्षरगमनिका नवरं वैयावृत्त्यं त्रयोदशभिः पदैस्तान्यग्रे वक्ष्यन्ते । तथा महानिर्जरः प्रतिसमयमनन्त्यनन्तकर्म परमाणुनिर्जरणात् महापर्यवसानसिद्धिगमनात् ॥ ३६ ॥ अस्य भाष्यप्रपञ्चः

दसविह वेयावच्चं इमं समासेण होइ विन्नेयं। आयरियउवज्झाए थेरे य तवस्सि सेहे य ॥ १२३ ॥

अतरंतकुलगणे या संघे साहम्मि वेज्जवच्चे य। एतेसिं तु दसण्हं कायव्वं तेरसपएहिं ॥ १२४ ॥

दशविधमिदं वक्ष्यमाणं समासेन विज्ञेयं । तद्यथा—आचार्यस्य उपाध्यायस्य स्थविरस्य तपस्विनः शैक्षकस्य अतरन् ग्लानस्तस्य संघस्य साधर्मिकवैयावृत्त्यं गाथायां सप्तमी सर्वत्र प्रतिपत्तव्या; एतेषां त्वाचार्यादीनां दशानामपि यथा योगं त्रयोदशभिः पदैर्वैयावृत्त्यं कर्तव्यं तान्येव त्रयोदशपदान्याह—

व्य. सू. भत्ते पाणे सयणासणे य पडिलेहण पायमच्छिमद्धाणे। राया तेणं दंडग्गहे य गेलन्नमत्ते य ॥ १२५ ॥
३६ भक्तेन भक्तानयनेन वैयावृत्त्यं कर्तव्यं, १ पानीयेन पानीयानयनेन २ शयनेन शय्या संस्तारकेन ३ आसनेन आसनप्रदानेन ४ प्रति-
॥ १११ ॥ लेखनेन क्षेत्रस्योपधेर्वा प्रत्युपेक्षणेनापि। पाएत्ति पादप्रमार्जनेन यदि वा औषधपानेन अक्ष्णि अक्षिरोगिणो भेषजप्रदानेन ७। अध्वानि अध्वनं प्रपन्नानामुपग्रहेण ८ राजद्विष्टे निस्तारणेन ९। तेणत्ति शरीरस्तेनेभ्यश्च संरक्षणेन १०। तथा विचारादिभ्य आगतानां दण्डग्रहणात् ११, ग्लानत्वे जाग्रतो यत् योग्यं तत्सम्पादनेन १२। मत्तेयत्ति मातृकत्रिकढौकनेन १३। एतानि त्रयोदशपदानि ॥

१८ जा जस्स होइ लद्धी तं तु न हावेइ संतविरयम्मि। एयाणुत्तत्थाणि उपायं किंचित्थ वुच्छामि ॥ १२६ ॥

या यस्य भवति लब्धिः स तां सति वीर्ये पराक्रमे न हापयेदिति। ख्यापनार्थं त्रयोदशपदान्युपात्तानि। एतानि चोक्तार्थानि सुप्रतीतानि तथापि किंचिदत्र विनेयजनानुग्रहाय वक्ष्यामि ॥

२२ पायपरिकम्मपाए उसह भेसज्ज देइ अच्छीणं। अद्धाणे उवगेण्हइ रायदुट्ठे य नित्थारे ॥ १२७ ॥

पायत्ति पादपरिकर्म प्रमार्जनादि करोति यदि वा औषधं पाययन्ति। अच्छित्ति अक्ष्णो रोगे समुत्पन्ने भेषजं ददाति अध्वनि प्रतिपन्नान् उपगृह्णाति उपधिग्रहणतो विश्रामणाकरणेन चोपष्टभ्नाति। राजद्विष्टे समुत्पन्ने ततो निस्तारयति।

सरीरोवहि तेणे हि सा रक्खति सति बलंमि संतंमि,। दंडग्गहणं कुणंती गेलन्ने यावि जं जोग्गं ॥ १२८ ॥

२६ शरीरस्तेनेभ्य उपधिस्तेनेभ्यश्च सति विद्यमाने बले सति (रक्षति) विचारभूम्यादिभ्य आगतानां पर्यायादिवृद्धानां साधूनां दण्डग्रहणं करोति। ग्लानत्वे च जाते यत् योग्यं तत्सम्पादयति।

उ. १०, भा. १२५-१३३ ॥ ११२ ॥

उच्चारे पासवणे खेले मत्तयतिय त्तिविहमे य, सव्वेसिं कायव्वं साहम्मिए तत्थिमो विसेसो ॥ १२९ ॥

उच्चारे प्रश्रवणे खेले श्लेष्मणि मात्रकात्रिकमेतत्। त्रयोदशपदात्मकं वैयावृत्त्यं त्रिविधं मनसा वाचा कायेन च सर्वेषामाचार्यादीनां दशानामपि कर्तव्यम् तत्रायं साधर्मिके विशेषस्तमेवाह—

होज्ज गिलाणो निन्हवो न यत्थ विसेसं जाणइ जणो उ। तुब्भेत्थं पव्वतितो न तरति किं न कुणह तस्स॥१३०॥
ताहे मा उड्डाहो उत्तीहो तस्स फासुएणंति। पडुयारेण करो निच्चो एत्ती एत्थ अह सीसो ॥ १३१ ॥

कोऽपि निन्हवः कोऽपि ग्लानो भवेत् न च तत्र जने विशेषं जानाति एष निन्हव एते च सुसाधव इति ततो जनो ब्रूयात्—युष्माकमत्र प्रव्रजितो न तरति, न शक्नोति, तस्याः किन्तु कुरुत प्रतिजागरणं ततो माभूत् प्रवचनस्योड्डाह इति तस्यापि प्रासुकेन प्रत्यवतारेण भक्तपानादिना वैयावृत्त्यं करोति। अथानन्तरमत्र शिष्यश्चोदयति। किं तदित्याह—तित्थगरवेयावच्चं किं वा न होति निज्जरतहियं अहवेति आयरितो अत्र तीर्थकरवैयावृत्त्यं कस्मान्न भणितं किंतु न कर्तव्यं किं वा तत्र निर्जरा न भवति एवं शिष्येणोदितो अथानन्तरमाचार्यो ब्रवीति—

आयरियग्गहणेण तित्थयरो तित्थ होइ गहिओ उ। किं वा न होयायरिउ आयारं उवदिसंतो उ ॥ १३२ ॥
णिदरिसणत्थ जह खंदएण पुट्ठो य गोयमो भयवं। केण उ तुह्मं सिट्ठंति धम्मायरिए पच्चाह ॥ १३३ ॥

आचार्यग्रहणेन तत्र दशानां मध्ये तीर्थकरो गृहीतो द्रष्टव्यः। अथ किं वा केन वा कारणेन न भवत्याचार्यो भवत्येवेति भावः। स्वयमाचारकरणं परेषामित्याचारोपदेशनमित्याचार्यशब्दप्रवृत्तिनिमित्तं ततः तीर्थकरेऽपि समस्तीति भवति तीर्थकरः। आचार्योऽत्र निदर्श-

व्य. सू. ३६ ॥ ११२ ॥

नार्थं। यथा स्कन्दकेन भगवान् गौतमः पृष्टः—केनेदं तव शिष्टं कथितमिति। स प्रत्याह—धर्माचार्येणेति।

**तह्मा सिद्धं एयं आयरियगहणेण गहिय तित्थयरो। आयरियादी दसवी तेरस गुण होंति कायव्वा ॥ १३४ ॥**

**तीसुत्तरसयमेग ठाणाण वन्नियं तु सुत्तंमि। वेयावच्चे सुविहियं निम्मं निव्वाणमग्गस्स ॥ १३५ ॥**

यस्मात् युक्तिनिदर्शनं चास्ति तस्मात्सिद्धमेतत् आचार्यग्रहणेन तीर्थकरो गृहीतः। आचार्यादीनि च दशापि पदानि त्रयोदशगुणानि भवन्ति कर्तव्यानि। एकैकस्मिन् पदे त्रयोदशभिः पदैः वैयावृत्त्यकरणात्। एवं च सति वैयावृत्त्ये वैयावृत्त्यविषये सूत्रे त्रिंशदुत्तरं स्थानानां शतं वर्णितं किं विशिष्टमित्याह—सुविहितानां मापणं निर्वाणमार्गस्य ॥

**ववहारे दसमए दसविह साहुस्स जुत्तजोग्गस्स। एगंत निज्जरा से न हु नवरि कयम्मि सज्झाए ॥ १३६ ॥**

व्यवहारे दशमे उद्देशके यत् दशविधं वैयावृत्त्यमुक्तं तस्मिन्साधोर्युक्तयोगस्यैकान्तनिर्जरा भवति। न हु नवरि केवलं स्वाध्याये कृते से तस्यैकान्तनिर्जरेति ॥

**एसोणुगमो भणितो अहुणा उ नउ सो य होइ दुविहो उ; नाण नओ चरणनओ ते समासं तु वुच्छामि ॥१३७॥**

तदेवमेषोऽनुगमो भणितोऽधुना नयो वक्तव्यः। तत्र यद्यपि नयाः शतसंख्यास्तथापि ते सर्वे नयद्वये अन्तर्भवन्ति। तत्र आह—नयो द्विविधो भवति, ज्ञाननयश्चरणनयो नाम क्रियानयस्तयोः समासं संक्षेपं वक्ष्यामि। तमेवाह—

**नायंमि गिण्हियव्वे अगिह्लियव्ववंमि चेव अत्थंमि। जइयव्वमेव इई जो उवदेस सो नयो नाम ॥ १३८ ॥**

उ. १०. भा. १३४-१३९ ॥ ११३ ॥

ज्ञाने सम्यक् परिच्छिन्ने गृहीतव्ये उपादेये अग्रहीतव्येऽनुपादेये हेय इत्यर्थः । चशब्दः खलूभयो र्ग्रहीतव्याग्रहीतव्ययोरनुकर्षणार्थः
उपेक्षणीयवस्तुसमुच्चयार्थो वा एवकारस्त्ववधारणे । तस्य चैवं व्यवहितमयोगः । ज्ञात एव ग्रहीतव्ये अग्रहीतव्ये उपेक्षणीये च नाज्ञाते
अर्थे ऐहिकामुष्मिकरूपे तत्र ऐहिको ग्रहीतव्यः स्रक् चन्दनादिः, अग्रहीतव्यो विषशस्त्रकंटकादिः, उपेक्षणीयस्तृणादिरामुष्मिको ग्रहीतव्यः
सम्यग् दर्शनादिः, उपेक्षणीयो विवक्षया अभ्युदयादिस्तास्मिन्नर्थे यतितव्यमेवेति अनुस्वारलोपात् एवममुनाक्रमेण ज्ञानपुरस्सरणरूपेण ऐहि-
कामुष्मिकफलप्राप्त्यर्थिना सत्वेन यतितव्यं प्रवृत्त्यादिलक्षणो यत्नः कार्यः । इत्थं चैतदङ्गीकर्तव्यं सम्यक् ज्ञानप्रवर्तमानस्य फलविसंवाद
दर्शनात्तथा चोक्तमन्यैरपि " विज्ञप्तिः फलदा पुंसां न क्रिया फलदा मता । मिथ्याज्ञानात् प्रवृत्तस्य, फलसंवाददर्शनात् ॥ " तथा मुष्मिक
फलार्थिनापि ज्ञात एव यतितव्यमागमोऽपि तथा प्रतिपादनात् । उक्तं च–"पढमं नाणं ततो दया एवं चिट्ठइ सव्वसंजए । अन्नाणी किं
काही किं वा नाहीच्छेयपावगं " ॥ इतश्चैतदेवमङ्गीकर्तव्यं यस्माचीर्थकरगणधरैरगीतार्थानां केवलानां विहारक्रियापि निषिद्धा ।
तथा चागमः—

**गीयत्थो अ विहारो बीइतो गीयत्थमीसितो भणितो । एत्तो तइय विहारो नाणुन्नातो जिणवरेहिं ॥ १३९ ॥**

न खलवन्धेनान्धः समाकृष्यमाणः सम्यक्पन्थानं प्रतिपद्यते इत्यभिप्रायः । एवं तावत्क्षायोपशमिकं ज्ञानमधिकृत्योक्तम् । क्षायिकम-
प्यङ्गीकृत्य विशिष्टफलसाधकत्वं तस्यैव प्रतिपत्तव्यं । यस्मादर्हतोऽपि भवाम्भोधितटस्थस्य दीक्षाप्रतिपन्नस्य तपश्चरणवतोऽपि न तावदप-
वर्गप्राप्तिरुपजायते यावज्जीवाजीवाद्यखिलवस्तुपरिच्छेदरूपं केवलज्ञानं नोत्पन्नामिति तस्मात् ज्ञानमेव प्रधानमैहिकामुष्मिकफलप्राप्ति-
कारणमिति स्थितं, इति जोज्वदेस सो नयो नाम इति,एवमुक्तेन प्रकारेण य उपदेशो ज्ञानप्राधान्यख्यापनपरः स नयो नाम ज्ञाननय इत्यर्थः।

वक्खारो नाम एकस्यां वलभ्यामभिनिर्विगडो विष्वक् अपवरकस्तस्मिन् कारणे सति वसति एतद्विषयमिदं सूत्रं यदि
पुनः कारणमृते विष्वग् अपवरके वसति, तत्पूर्ववर्णिता मिथ्यात्वादयो दोषाः किं पुनर्भवेत्तत्कारणं, यद्वशात् पृथक् अपव-
रके तिष्ठति, तत्र आह–त्वग् दोषादीनि त्वग्दोषच्चयव्याध्यादीनि कारणानि ज्ञातव्यानि, । तथाहि–त्वग्दोषादिकमाचार्यो
यदि निष्काशयति, तदा तस्य प्रायाश्चित्तं चतुर्गुरुकम् । तस्मान्न स निर्यूहयितव्यः । किन्तु पृथगपवरके स्थितः परिपालनीयः ।
स च त्वग्दोषो द्वाभ्यां प्रकाराभ्यां भवति । तथा चाह—

**संदंतमसंदंते असंदिणसित्तमंडलपसुत्ती । किमिपूयं रसिगा वा पस्संदति तत्थिमा जयणा ॥३३७॥**

द्विविधस्त्वगदोषस्तद्यथा–स्पन्दमानोऽस्पन्दमानश्च, । तत्रास्पन्दनोऽस्रावणश्चित्रप्रसुप्तिर्मण्डलप्रसुप्तिश्च । यस्तु स्पन्दमानः
स कृमीन् प्रस्पन्दते पूतं वा रसिकां वा । तत्र स्पन्दमाने त्वग् दोषे इयं वक्ष्यमाणा यतना तामेवाह—

**संदंतो वक्खारो अंतो बाहिं च सारणा तिण्णि । जत्थ विसीएज्ज ततो णाणादी उग्गमादी वा ॥३३८॥**

स्पन्दमाने त्वग्दोषेऽनंतरेकस्यां वलभ्यां विष्वगपवरके तस्याभावे एकस्मिन्निवेशनेऽन्यस्यां वसतौ स्थाप्यते, । तत्र
च वसतास्तिस्रः सारणाः साराः कर्तव्याः । यत्र ( त्र ) सको विसीदेत् । कास्तास्तिस्रः सारा इत्याह–ज्ञानादौ ज्ञाने दर्शने
चारित्रे च । अथवा उद्गमादावुद्गमे उत्पादनायामेषणायां च अथवान्यथा तिस्रः सारास्ता एवाह—

**अहवा भत्ते पाणे सामायारीए वा विसीयंतं । एएसु तीसु सारे तिन्नि वि काले गुरूपुच्छे ॥३३९॥**

अथवेति प्रकारान्तरे भक्ते पाने सामाचार्यां च एतेषु त्रिषु स्थानेषु सीदंतं सारयन्त्याचार्या यदि वा तिस्रः—सारानाम त्रीनपि कालान् गुरुःपृच्छति । कथमित्याह—

**गोसे केरिसयं तिय, कयमकयं वा किं ते आवासं। भिक्खं लद्धमलद्धं किं दिज्जउ वा ते मज्झरहे ॥३४०॥**

**पेहिय पेहियं वा वट्टइ ते केरिसं च अवररहे । निज्जूहणंमि गुरुगा अविही परियट्टणे वावि ॥३४१॥**

गोसे प्रातरिदं पृच्छति । कीदृशं ते शरीरमिति, । तथा त्वया किमावश्यकं कृतमकृतं वा तथा मध्याह्ने पृच्छति—भैक्षं त्वया लब्धमलब्धं वा किं तव दीयतामिति । तथा अपराह्ने पृच्छति । किं तवोपकरणं केनापि त्वया वा प्रेक्षितं किं वा न प्रेक्षितं । कीदृशं वा ते शरीरमिति । यदि पुनरेव सारां न करोति, किन्त्वेवमेव परित्यजति, तदा गुरोः प्रायश्चित्तं चत्वारो गुरुकाः, । अनिर्यूहणेऽपि यद्यविधिना परिवर्तनं परिपालनं कारयति तदापि चतुर्गुरुकं प्रायश्चित्तं ।

**आणादिणो य दोसा विराहणा होइ इमेहिं ठाणेहिं। पासवणफासलाला सेए मरुएण दिठंतो ॥३४२॥**

न केवलं प्रायश्चित्तं किन्त्वाज्ञादयश्च दोषास्तथा एभिर्वक्ष्यमाणैः स्थानैर्विराधना साधूनामात्मविराधना भवति, । कैः स्थानैरित्याह—प्रश्रवणेन स्पर्शेन लालया स्वेदेन च प्रस्वेदेन । तथाहि—स्पन्दमानत्वग्दोषवतः प्रश्रवणस्पर्शनेनापि व्याधिरन्यत्र संक्रामति, । तथा गात्रस्पर्शनेन यदि वा तेन व्याधितेन ये परिभुक्ताः पीठफलकादयस्तान् यद्यन्व्याधितः परिभुक्ते तदा व्याधिः संक्रामति । तथा लालया सह भोजने व्याधिः संक्रामति । तस्य प्रस्वेदेन यदि कोऽपि स्पृश्यते, तदा तस्यापि

व्याधिः संचरति, । अत्र च दृष्टान्तो मरुकेण संडकब्राह्मणेन तत्कथानकं चावश्यके प्रबन्धतः कथितमिति ततोऽवधार्यं, । साम्प्रतमेतदेव पश्चार्धं व्याचिख्यासुः प्रथमतः प्रश्रवणे यतनामाह—

**पासवण अन्नअसती भूतीए लक्खे माहु दूसियं मोयं। चलणतलेसु कमेज्जा एमेवेय निक्खमपवेसो ॥३४३॥**

तस्य स्पन्दमानत्वग्दोषवतः पृथक् कायिकी भूमिः कर्तव्या; । अन्यस्याविष्वक् प्रश्रवणभूमेरसति अभावे एकस्या एव कायिक्या भूमेस्तस्य योग्यं पृथक् अवकाशं भूत्या लक्षयति वृषभो यथा साधवस्तं परिहरन्ति, । तथा चाह—मा कोऽपि त्वग्दोषव्याधितस्य दूषितं मोकं प्रश्रवणं पादैराक्रमेत् । आक्रमेण को दोष इत्यत आह—आक्रान्ते तस्य प्रश्रवणे चरणतलेषु पादतलेषु त्वग्दोषव्याधिः संक्रामति, । तथा तस्य त्वग्दोषव्याधितस्य येनावकाशेन निष्क्रमणं प्रवेशो वा तमवकाशं भूत्या लक्षयति, । येन साधवस्तमपि परिहरन्ति, । अपरिहरणेऽनन्तरोदित एव दोषः ॥

**निंती व सो काउतली कमेसुं संथारतो दूर अदंसणेवी ।**
**मा फासदोसेण कमेज्ज तेसिं तत्थिक्कवत्थादिवि परिहरंति ॥ ३४४ ॥**

सस्पन्दमानत्वग्दोषी क्रमयोः पादयोस्तलके उपानहौ कृत्वा निर्गच्छति प्रविशति वा । योऽप्यस्पन्दमानत्वग्दोषी तस्यापि कायिकी भूमिर्विष्वक् क्रियते न पुनः पृथग् भूमिनिर्गमप्रवेशस्थानम् ॥ सम्प्रति स्पन्दमानस्यास्पन्दमानस्य च स्पर्शविषयां साधारणां यतनामाह—अस्पन्देऽपि त्वग्दोषे आस्तां स्पन्दमाने इत्यपि शब्दार्थः । संस्तरको दूरे क्रियते मा स्पर्शदोषेण तेषां

शेषसाधूनां व्याधिः संक्रमेदिति हेतोस्तथा न केवलं दूरे संस्तारकः क्रियते। किन्तु तेन त्वग्दोषवता यत्स्पृष्टं वस्त्रादि तत्परिहरन्ति। पूर्वोक्तादेव दोषात्तदेवं प्रश्रवणयतनास्पर्शयतना च सप्रपञ्चोक्ता ॥ सम्प्रति लालास्वेदयतनामाह—

**न य भुंजतेगट्ठा लालादोसेण संकमति वाही। सेओ से वज्जिज्जइ जलपडलंतरप्पो य ॥ ३४५ ॥**

न च एकार्थे एकस्मिन्पात्रे तेन त्वग्दोषवता सह साधवो भुंजते। कुत इत्याह यतो लालादोषेण संक्रामति व्याधिः। तथा से तस्य त्वग्दोषवत स्वेदप्रस्वेदो वर्ज्यते। तथा जल्लः शरीरमल्लस्तथा तत्सत्कानि पात्रपटलानि तथा आन्तरकल्पश्च परिह्रियते व्याधिसंक्रमभयात्तथा चाह—

**एएहिं कमइ वाही एत्थं खलु सेउएण दिठंतो। कुट्ठय कच्छुयसिवं नयणामय कामलादीया ॥ ३४६ ॥**

एतैर्जल्लादिभिर्व्याधिस्त्वग्दोषव्याधिः संक्रामति। अत्र दृष्टान्तः खलु सेतुकेन (सिद्धकेन) तत एतानि परिह्रियन्ते,। किं नाम त्वग्दोष एव उतान्यस्मिन्नपि रोगे तत आह–कुष्टे चयव्याधौ कच्छ्वां पामायामशिवे शीतलिकायां नयनाऽमये नयनदोषे कामलादावेषा अनन्तरोदिता प्रश्रवणादिविषया यतना दृष्टव्या ॥

**एसा जयणा बहुस्सुए अबहुस्सु न कीरते तु वक्खारो। ठावेंति एगपासे अपरिभोगंमि उ जतीणं ॥ ३४७ ॥**

एषा अनन्तरोदिता यतना बहुश्रुते दृष्टव्या। अबहुश्रुतेऽप्येवं, नवरं स सम्बद्धगृहापवरके स्थाप्यते, भिन्नस्तु वखारोऽपवरको न क्रियते,। सम्बद्धगृहापवरकाभावे च वसतेरेकस्मिन् यतीनामपरिभोग्ये तं स्थापयन्ति,। अपान्तराले कटो दीयते,।

कटाभावे भूत्या अन्तरं क्रियते । अथ किं कारणमबहुश्रुतो बहिर्न क्रियते ? तत आह–

**विवज्जतो उट्ठविवज्जएहिं मा बाहिभावं अबहुस्सुतो उ।**

**रुट्ठाए भूतीव तिरो करेंति, मा एक्कमेक्कं सहसा फुसेज्जा ॥ ३४८ ॥**

उट्ठविवज्जकैरहं विवर्जित परिहृत इत्येवमबहुश्रुतो मा बहिर्भावमुपयासीदिति भिन्ने अपवरके न स्थाप्यते किन्तु वसतेरे-
कस्मिन् प्रदेशे, तत्रापि काष्ठादिना फलकादिरूपेण तदभावात् भूत्या वा अन्तरं कुर्वन्ति, । मा एकैकेन त्वग्दोषेण साधवः
सहसा स्पृशेयुः । अस्पन्दमानत्वग्दोषे विधिविशेषमाह—

**अगलंते न वक्खारो लालासेया विवज्जण तहेव। उस्सासभाससयणासणादीहिं होति संकंती ॥३४६॥**

अगलति अस्पन्दमाने त्वग्दोषे पृथक् वक्षस्कारोऽपवरको न क्रियते,। लालास्वेदादीनामादिशब्दादुच्छ्वासभाषाशय-
नासनादिपरिग्रहः वर्जनं तथैव यथा प्रागभिहितं गलति त्वग्दोषे तस्मादुच्छ्वासादीनां वर्जनमत आह–उच्छ्वासभाषाशयना-
सनादिभिरादिशब्दात्पीठफलकादिपरिग्रहः संक्रांति र्व्याधिर्भवति ॥

**मुत्तूण जल्लपडलं धरेंति भाणं से काइयाइगते। सीए व दाउ कप्पं उवरिमधोयं परिहरंति ॥ ३५० ॥**

यदि स त्वग्दोषे व्याध्युपेतः कायिक्या व्युत्सर्गाय व्रजति भाजनं च तस्य धारयितव्यं भवति, तदा से तस्य कायिक्या-
गतस्य मुक्त्वा स्फेटयित्वा जल्लपटलं भाजनमलखरण्टितं पटलमन्ये साधवो धरन्ति यावत्स आयाति,। अथ स त्वग्दोषी

ग्लानः शीते पतति नात्मीयैर्वस्त्रैः कम्बलेन च संस्तरति तदा तस्य कल्पं वस्त्रं प्रावरणाय दीयते,। सोऽपि च त्वग्दोषी आत्मीयानां वस्त्रकल्पानामुपरि प्रावृणोति। तच्च समर्पितं वस्त्रमधौतं परिहरन्ति। यदा तु तद्वस्त्रमात्मना प्रावरितुकामास्तदा प्रक्षालयित्वा प्रावृण्वन्ति ॥

**असहुस्सुवत्तणादीणि कुव्वतो छिक्कुजत्तियं। खेयमकुव्वतु धोइज्जा मट्टियादीहिं तत्तियं॥ ३५१ ॥**

असहस्य त्वग्दोषव्याधितस्यागाढं ग्लानीभूतस्योद्वर्त्तनादि उद्वर्तनमुपविष्टीकरणमित्यादि कुर्वतो यावत्स्पृष्टं त्वग्दोषगात्रादिना तावत्खेदमकुर्वन् मृत्तिकादिभिरुद्घृष्य प्रक्षालयेत् ॥

**असती मोय महीए कयकप्प अगलंतमत्तए निसिरो। सेणावकए कप्पइतरे निसिरंति जयणाए॥३५२॥**

मोकमह्याः प्रश्रवणभूमेरभावे अगलत्यस्राविणि कृतकल्पे मात्रके व्युत्सृजति प्रश्रवणमन्ये साधवोऽन्यस्मिन्मात्रके पृथग्मात्रकाभावेतेनैव यत्र त्वगदोषी व्युत्सृष्टवान् तत्रैव कृतकल्पे मात्रके इतरे साधवो यतनया यथा कायिक्या मात्रस्य च शरीरावयवस्पर्शो न भवति, तथा कायिकां निसृजन्ति ॥

**एसा जयणा उ तहिं कालगते पुण इमो विही होइ। अंतरकप्पं जल्लपडलं च अगलंति उज्झंति॥३५३॥**

एषा अनन्तरोदिता यतना तत्रगलत्यगलति वा त्वग्दोषवति कालगते पुनस्त्वगदोषवति विधिरयं वक्ष्यमाणो भवति. तत्र प्रथमतो अगलत्याह–आन्तरं कल्पं भाजनस्य जल्लपटलमुपरितनं वस्त्रमेते द्वे अपि वस्त्रे उज्झंति परिष्ठापयन्ति। किं

कारणमतआह—

**धोयावि न निद्दोसा तेण छड्डुंति ते दुवे। सेसगं तु कए कप्पे सव्वं से परिभुंज्जइ ॥ ३५४ ॥**

प्रक्षालिते अपि ते वस्त्रे न निर्दोषे तेन छर्द्येते परिष्ठाप्येते शेषकं तु सर्वमपि से तस्य कृते कल्पे परिभुज्यते दोषाभावात्

गलति त्वगदोषे विधिमाह—

**संदंतस्स वि किंचण असतीए मोत्तु भायणुक्कोसं। लेवट्टगमवणित्ता अगणामयं धोविउं लिंपि ॥३५५॥**

स्पन्दमानस्यापि स्पन्दमानत्वगदोषवतो यत्किञ्चनाऽस्ति तत्सर्वं परिष्ठाप्यते केवलं यदि भाजनं नास्ति सति वा भाजने यदि तद्भाजनं सलक्षणं तदा तदेकभाजनमुत्कृष्टं मुक्त्वा शेषं परिष्ठाप्यते। तत्रापि लेपमट्टकं वापनीय उष्णोदकादिभिः प्रक्षाल्यान्यमयमिव कृत्वा पुनः लिम्पेत् ततः परिभुञ्जीत ॥

**अगलंतमत्तसेवी असती कप्पे काउ भुंजंति। एसा जयणा उ भवे सव्वेसिं तेसिं नायव्वा ॥ ३५६ ॥**

यदि कायिकीभूमिर्न विद्यते बहिश्च सागारिकस्तथा शेषसाधूनामरोगाणां मात्रकमगलन् अस्पन्दमानत्वगदोषवान् सेवते किमुक्तं भवति—कायिकीं तस्मिन् मात्रके व्युत्सृजति ततः कृतेकल्पेऽरोगाः तस्मिन् व्युत्सृजन्ति यदि पुनरकृते कल्पे व्युत्सृजन्ति तदा प्रायश्चित्तं चतुर्गुरुकं,। एषा यतना सर्वेषां गलत्त्वगदोषिणामन्येषां च क्षयव्याध्याद्युपेतानां ज्ञातव्या।

**सूत्रम्—८ जत्थ एए बहवे इत्थीओ य पुरिसा य पण्हावेन्ति, तत्थ से समणे निग्गन्थे अन्नयरंसि**

अचित्तंसि सोयंसि सुक्कपोग्गले निग्घाममाणे हत्थकम्मपडिसेवणपत्ते आवज्जइ मासियं परिहारट्ठाणं अणुग्घाइयं । अस्य सम्बन्धप्रतिपादनार्थमाह—

एगाणि यस्स दोसा केत्तिय भवसो उ सुत्तसंबंधो। कारणनिवासिणो वा दुविहा सेविस्स पच्छित्तं ॥३५८॥

एकाकिनो दोषा के इति शिष्यस्य प्रश्नावकाशमाशङ्क्याधिकृतसूत्रस्योपनिपातः । एष भवति सूत्रस्य सम्बन्धः, । अथवा कारणनिवासिनो द्विविधासेविनः सचित्तासेविनोऽचित्तासेविनश्च किं प्रायश्चित्तमिति परप्रश्नमुपजीव्य प्रायश्चित्तप्रतिपादनाय सूत्रद्वयमाहेति सम्बन्धः, । अनेन सम्बन्धेनायातस्यास्य व्याख्या—यत्र यस्मिन् प्रदेशे प्रत्यन्तत उपलभ्यमानाः स्त्रियः पुरुषाश्च प्रभुनुवन्ति मैथुनकर्म प्रारम्भन्ते तत्र तस्मिन् प्रदेशे मैथुनकर्म दृष्ट्वा कश्चिदुदीर्णमोहः स श्रमणो निर्ग्रन्थोऽन्यतरस्मिन्नचिंते हस्तकर्माद्युचिते युगच्छिद्रनलिकादौ श्रोत्रवति शुक्रपुद्गलान् निर्घातयन् शुक्रपुद्गलनिर्घाताय हस्तकर्मप्रवेशनाय प्रसक्तो भवति । स च तथा प्रसक्त आपद्यते अनुद्घातितं गुरुकं मासिकं परिहारस्थानं प्रायश्चित्तस्थानं । तथा यत्रैते बहवः स्त्रियः पुरुषाश्च प्रभुनुवन्ति मैथुनकर्मप्रारम्भे तत्र तत् दृष्ट्वा कश्चित् स श्रमणो निर्ग्रन्थोऽन्यतरस्मिन्नर्चिंते प्रतिमादौ श्रोत्रवति शुक्रपुद्गलान् निर्घातयन् मैथुनप्रतिसेवनाप्रसक्तो भवति, । स च तथा प्रसक्त आपद्यते चातुर्मासिकमनुद्घातितं परिहारस्थानमित्येष सूत्रसंक्षेपार्थः । अधुना भाष्यविस्तरः—

बाहिं वक्खारट्ठिए महिलादागम अवारणे गुरुगा। वारण पेसे पेलणमुदए पडिसेवणा भणिया ॥३५८॥

बहिर्वक्षस्कारे अपवरके स्थिते त्वग्दोषवति तत्र निवेशनादौ वा कृतसङ्केता स्त्री सस्त्रीको वा पुरुषः समागच्छेत् । स चा-
गच्छन् वारयितव्योऽवारणे प्रायश्चित्तं चत्वारो गुरुकाः । वारणेत्यादि तत्र यथा वारणं तथा वक्तव्यम् । अथ बहिर्वर्षं गाढं
पतित उपलक्षणमेतत् । स्तेनाः स्वापदानि वा बहिर्विद्यन्ते तेन ते न निर्गच्छन्ति । तदा तेष्वनिर्गच्छत्स्वधिकृतसूत्रस्याव-
काशः तथा साधोः स्त्रिया प्रेरणा क्रियते । तथा प्रेरणायां तथा उदये वेदोदये सूत्रे प्रतिषेवणा भणिता ॥ किमुक्तं भवति ।
प्रेरणायामुदये चाधिकृतसूत्रस्योपनिपातस्तत्र वारणप्रतिपादनार्थमाह—

**पडिसेहो पुव्वुत्तो, उज्जु अणुज्जुमिहुणे चउत्थंमि । उ निग्गममनिग्गमे विजहिं च सुत्तस्स पारंभो ।३५६।**

वारणं प्रतिषेधः । स च कल्पाध्ययने चतुर्थोद्देशके पूर्वमुक्तस्तथा तस्मिन् मिथुनमृजु किंवा अनृजु इत्याद्यपि यद्वक्त-
व्यम् । ततस्तत्रैवाभिहितं तथा सस्त्रीकस्य पुरुषस्य यथा च सति निर्गमो भवति यथा वाऽनिर्गम एतदपि तत्रैव व्याख्यातम्
जहिं च सुत्तस्स पारंभो इत्येतत् पश्चाद्व्याख्यास्यते ॥ गतं वारणद्वारमधुना उदये प्रतिसेवनेति व्याचिख्यासुस्तान् प्रतिसेव-
मानान् दृष्ट्वा कोऽपि वेदोदयवशात् येषु येषु स्थानेषु प्रतिसेवनामारभते, तानि प्रतिपादयति ॥

**जुगच्छिद्दनालिगादिसु पढम जामादि सेवणा सोही । मूलादी कप्पंमि या पुव्वुत्ता, पंचमजामे भवे सुत्तं ॥**

युगच्छिद्रे नालिकायामादिशब्दात्तथाविधान्यवस्तुपरिग्रहः, तेषु युगच्छिद्रनालिकादिषु प्रथमयामासेवने प्रथमयामादासे
वायां शोधिर्मूलादिका पूर्वं कल्पाध्ययने उक्ता, सा चैवं यदि रात्रेः प्रथमयामे युगच्छिद्रेण नालिकायां करकर्म करोति तदा

प्रायश्चित्तमूलं, द्वितीयं यामे च्छेदः, तृतीये यामे षड् गुरु चतुर्थे यामे चतुर्गुरु। प्रभाते दिवसस्य प्रथमयामे रात्रिगतप्रथमयामापेक्षया पञ्चमे यामे मासगुरुस्तथा चाह–पञ्चमे यामे भवति सूत्रम्– पञ्चमयामविषयमाधिकृतसूत्रमिति भावः । एतेन यदुक्तं प्राक् यत्र च सूत्रस्य प्रारंभ स्तद्वक्ष्ये इति तद्भावितम् ॥ ३६०

९ जत्थ [ जहा ८ ] निग्घाएमाणे मेहुणपडिसेवणपत्ते आवज्जइ चाउम्मासियं परिहारठाणं अणुग्घाइयं । सम्प्रति द्वितीयसूत्रव्याख्यानार्थमाह—

दुविहच्चा पडिमेयरस्सन्निहितेतरअचित्तसच्चित्ते। बाहिं व देउलादिसु सोही तेसिं तु पुव्वुत्ता ॥ ३६१ ॥

अर्च्चा द्विविधा। तद्यथा–अचित्ता सचिता च। तत्राचित्ता द्विविधा–प्रतिमा इतरा च। इतरा नाम स्त्रीशरीरं निर्जीवं। एकैका पुनर्द्विविधा–सन्निहिता असन्निहिता च । एतेषु सर्वेष्वपि स्थानेषु प्रतिसेवनायां प्रथमे रात्रेर्यामे मूलं, द्वितीये च्छेदः, तृतीये षड्गुरु, चतुर्थे चतुर्गुरु पञ्चमेऽपि चतुर्गुरु सचित्ता स्त्रीशरीरं तत्राग्रे विधिर्वक्ष्यते । तत्र ग्रामादीनामन्तरुक्तं बहिरधिकृत्याह–बहिर्देवकुलादिषु प्रतिमादिकमचित्तमासेवमानस्य करकर्म वा कुर्वतस्तेषां भावानां शोधिः पूर्वोक्ता अनन्तरोक्ता द्रष्टव्या । करकर्म कुर्वतः पञ्चमे यामे मासगुरुप्रतिमाद्यचित्तासेवने चतुर्गुरु इत्यर्थः सम्प्रति या प्रेरणा पूर्वमुक्ता तां भावयति—

संगारदिन उ एसा सातितं वच्चेहिं अपेच्छंती । पेलेज्जवतं कुलडा पुत्तठा देज्ज रूवं वा ॥ ३६२ ॥

साधुं कायिक्यादिनिमित्तं निर्गच्छन्तं दृष्ट्वा सा कुलटा चिन्तयेत् स एष आगतो येन मम संकेतो दत्तः । एवं चिन्त-

यित्वा तं साधुं गृह्णीयात् । साधुश्च तत्तथाग्रहणमास्वादयेत् । तथा च सति धर्मविराधना । अथवा तं दत्तसंकेतं पुरुषमपेक्ष्य-माणा तं कायिक्यादिविनिर्गतं साधुं प्रेरयेत् तत्रापि धर्मविराधना यदि वा काऽपि महिला तस्य साधो रूपं रमणीयं दृष्ट्वा 'ईदृशो मम पुत्रो भूयात्' इति पुत्रार्थी सती साधुमाददीत । यदि नेच्छति ततोऽहमुड्डाहं करिष्यामि । ततो धर्मविराधना

अत्रैव प्रायश्चित्तविधिमाह—

**जइ सेव पढमजामे मूलं सेसेसु गुरुगवच्छ । अहवादिव्वाईयं सच्चित्तं होइ नायव्वं ॥ ३६३ ॥**

यदि प्रागुक्त प्रेरणावशात् स्त्रियं रात्रेः प्रथमयामे सेवते तदा प्रायश्चित्तं मूलं । द्वितीये यामे च्छेदस्तृतीये षट् गुरुकाः । चतुर्थे चत्वारो गुरुकाः । पञ्चमेऽपि चत्वारो गुरुका इति । तदेवं प्रेरणाव्याख्यानद्वारेण सचित्तमचित्तं व्याख्यातमथवान्यथा सचित्तमचित्तं तथा चाह—अथवा सचित्तं भवति ज्ञातव्यं दिव्यादिकं दिव्यं तैर्यग्योन मानुषं च प्रतिपिपादयिषुराह—

**जं सासु होति तियं ना दिव्वपासवं व संगीयं । जह वुत्तं उवहाणं न तं न पुसं इहावसं ॥३६४॥**

असवः प्राणाः सह असवो यस्य येन वा तत् सासु—सचित्तमित्यर्थः । यत्तु सासुसचित्तं तत्त्रिधा त्रिप्रकारं भवति । दिव्यं मानुषं पाशवं च । तत्र मानुषं त्रितयं सचित्तं, तद्यथा—जघन्यमध्यममुत्कृष्टं च । तत्र जघन्यं प्राकृतं, मध्यमं कौटुंबमुत्कृष्टं दण्डिनं । यथा त्रिविधं मानुषं दिव्यमपि जघन्यादिभेदभिन्नं त्रिधा, पाशवमपि च त्रिधा जघन्यादिभेदतः सङ्गीतं व्याख्यातं यथा कल्पाध्ययने तथात्रापि व्याख्येयं यथा चोक्तमत्रोपधानं प्रायश्चित्तं तदपि न तत्पूर्णमिहापन्नं न वक्तव्यं

किन्तु वक्तव्यं । द्वयोर्नञोः प्रकृत्यर्थं च गमनात् । अत्रैवापवादमाह—

**बितियपदे तिगिच्छं निवीइयमाइयं अतिक्कंते । ताहे इमेण विहिणा जयणाए तत्थ सेवेज्जा ॥३६५॥**

चिकित्सां निर्विकृतिकादिकां प्रागुक्तामतिक्रान्ते अस्थाने शब्दश्रवणतो हस्तकर्मकरणतो वा अनुपशाम्यति वेदोदये ततो द्वितीयपदे अपवादपदे अनेन वक्ष्यमाणेन विधिना यतनया सेवेत । तमेव विधिमाह—

**खल खिलमदिट्ठविसयं विसत्तअब्वंगवं गणं काउं । ताहे इमंमि लेसे गीयत्थजतो निलिज्जेज्जा ॥३६६॥**

खलं प्रतीतं । यत्र सजीवस्यापि सेवने वैराग्यमुपजायते किं पुनर्निर्जीवस्यासेवने । तत्र निर्जीवप्रतिपादनार्थमाह—खलखिलं खलाखिलं निर्जीवमित्यर्थः । तत्कथं सेवते इत्यत आह—अदृष्टविषयं यथा भवत्येवं सेवेत रात्रौ सेवतेति भावः । पुनः कथमित्याह—विसत्वं विगताः सत्वा यत्र तत् विसत्वं विगतजनमित्यर्थः । अव्यङ्गं, नाम यस्य क्षतं क्षतकृतं न विद्यते तस्य व्यञ्जनं कृत्वा क्षतं कृत्वा अन्यं वेतालोत्थानदोषप्रसजनात् । ततोऽस्मिन् निर्जीवलेश्ये संलेप्ये मूत्रविवरे इत्यर्थः । गीतार्थो यतोऽरक्तद्विष्टः सन् निलीयते शुक्रपुद्गलान्निष्काशयेत् ॥

**सूत्रम्—१० नो कप्पइ निग्गन्थीण वा निग्गन्थाण वा निग्गन्थिअन्नगणाओ आगयं खुयायारं सबलायारं भिन्नायारं संकिलिट्ठायारचित्तं तस्स ठाणस्सअ णालोयावेत्ता अपडिक्कमावेत्ता अनिन्दावेत्ता-अगरहावेत्ता अविउट्टावेत्ता अविसोहावेत्ता अकरणाए अणब्भुट्ठावेत्ता अहारिहं पायच्छित्तं अपडि-**

वज्जावेत्ता उवट्ठावेत्तए वा संभुञ्जित्तए वा संवसित्तए वा तेसिं इत्तरियं दिसं वा अणुदिसं वा उद्दिसित्तए वा धारेत्तए वा ।

अस्य सम्बन्ध प्रतिपादनार्थमाह—

अभिनिव्वगडादीसु व समणीणं पडिस्सगस्स दोसेण। दोसबहुला गणातो अवक्कमे काइ संबंधो ॥३६७॥

अनन्तरसूत्रेष्वभिनिर्विगडादिका वसतिरुक्ता । तासु च अभिनिर्विगडादिकासु संयतीनां मध्ये उपाश्रयस्य दोषेण कापि दोषबहुला सामाचारी प्रमादपरा सती गणादपक्रामेत् । तस्या अनेन सूत्रेण विधिरुच्यते इत्येष सूत्रसम्बन्धः ॥

प्रकारान्तरेण सम्बन्धमाह—

इत्थी पराहाइ जहिं व सोयए तेण सबलियायारो। उज्जुय विहारमण्णं उव्वेज्ज बिइतो भवे जोगो ॥३६८॥

यत्र स्त्री उपलक्षणमेतत् पुरुषो वा प्रश्नौति प्रस्पन्दते मिथुनकर्म समारभते इत्यर्थः । वाशब्दः सम्बन्धस्य प्रकारान्तरोपदर्शने । तत्र तत् दृष्ट्वा तेन हेतुना काचित् उदीर्णप्रबलवेदा सचित्ते वाऽचित्ते वा तत्राचित्ते मृतकस्य सचित्ते पुरुषलिङ्गे तिर्यक्योनिकलिङ्गे वा शबलिताचारा सती अन्यदुद्यतविहारमुपेयात् आश्रयेत्तस्या विधिरनेनोद्यते इत्येष द्वितीयो योगः सम्बन्धो अनेन सम्बन्धेनायातस्यास्य व्याख्या न कल्पते—निर्ग्रन्थानां वा निर्ग्रन्थीनां वा निर्ग्रन्थीं क्षताचारां शबलाचारां संक्लिष्टाचारां क्षतादीनां शब्दानामर्थः प्राग्वत् । तस्य स्थानस्य अनालोचयित्वा यस्मिन् सेविते सा क्षताचाराऽभवत् तत्स्थानमअनालोच्य तस्मात्स्थानादप्रतिक्राम्य तथा तस्य स्थानस्य विषये प्रायश्चित्तमप्रतिपाद्य उपस्थापयितुं वा संभोक्तुं

वा संवस्तुं वा तस्यां इत्वरां दिशमनुदिशं वा उद्देष्टुमनुज्ञापयितुं नापि तस्याः स्वयं धारयितुं कल्पते इत्येष सूत्राक्षरार्थः ॥ सम्प्रति भाष्यविस्तरः । तत्र परप्रश्नावकाशमाह—

**जा होइ परिभवंतीह निग्गया सीयए कहं सत्ती । संवासमाइएहिं स छलिज्जइ उज्जमंतावी ॥३६९॥**

या प्रमादगणं परिभवन्ती धर्मश्रद्धया गृहवासादिह निर्गता सा कथं सीदति येन सा क्षताचारापि जाता । अत्र सूरिराह—संवासादिभिः सा उद्यच्छन्त्यपि उद्यमं कुर्वत्यपि शबली क्रियते । इयमत्र भावना—सा एकाकीत्वेन विहरन्ती गृहस्थाभिः समं वसन्ती स्वशक्त्यनुसारेणोद्यमं कुर्वत्यपि च्छलनां प्राप्नोति । आदिशब्दाद्गोचरचर्यायां विचारभूमौ वा यतः सत्येकाकिनी च्छलनामाप्नुयादिति । अथैकाकिनी सा कथं जातेत्यत आह—

**अद्धाण निग्गयादी कप्पट्ठी संभरंति जा बितिया । आगमणदेसभंगे चउत्थी पुण मग्गए सिक्खं ॥३७०॥**

अध्वनि अवमौदर्येणाशिवेन वा निर्गता । आदिशब्दात् राजद्विष्टेन वा सार्थेन वा स्तेनैरभिहृता, निर्गताऽपि परिगृह्यते । एषा प्रथमा, द्वितीया कप्पर्द्धिं दुहितरं संस्मरन्ती एकाकिनी जाता । तृतीया परचक्रागमनेन देशभङ्गे एकाकिनी । चतुर्थी शिक्षां मृगयमाणा एकाकिनी जाता । तत्राध्वनिर्गतादीनां व्याख्यानार्थमाह—

**गोउम्मुगमादीया नाया पुव्वमुदाहडा उमे । असिवे य दुट्ठे य सत्थे वा तेणाभिहते ॥ ३७१ ॥**

अवमौदर्ये संयत्यो न संस्तरंति । तत्र गोज्ञातं पूर्वमुदाहृतं यथा अल्पं गोब्राह्मणं नन्दति तत एतत् ज्ञातमवधार्य या यत्र

संस्तरति सा तत्र गच्छति, अशिवे समुपस्थिते उन्मुकज्ञातमुदाहृतं पूर्वं कल्पाध्ययने यथा उन्मुकानि बहूनि मिलितानि ज्वलन्ति एकं द्वे वा न ज्वलतः, । एवमशिवमपि बहुषु गाढमुपतिष्ठति । नैकस्मिन् द्वयोर्वा ततो वृन्दघाते एकाकिनी जाता । एताभ्यां प्रकाराभ्यामध्वानं प्राप्ता । तथा राजद्विष्टेन पूर्वभणितेनैकाकिनी जायते । सार्थे वा स्तेनैभिरहृता एकाकिनी जायते, ततः सा आचार्योपाध्यायप्रवर्तिनीविरहिता निर्द्धर्म्मीभूता पार्श्वस्थादिविहारं विहृत्य पुनरपि संवेगमापन्ना कंचिदाचार्यमुपाध्यायं गणावच्छेदकं वा द्रष्टुमुपस्थिता विज्ञपयति,—यथाहं पार्श्वस्थादिविहारात् प्रतिक्रमामि ततो मम सङ्ग्रहं कुरुत यावदाचार्यमुपाध्यायं त्वात्मीयं पश्यामि । एवमन्यगणादागतं । तस्मात्स्थानादप्रतिकाम्य न कल्पते उपस्थापयितुं, नापि षड्विधेन संभोगेन, यथा संभवमार्यिकाणां संयतानां च संभोक्तुं नापि यावदात्मीयमाचार्यादिकं न गच्छति, तावदित्वर आचार्य एषा दिगित्युच्यते, । इत्वर उपाध्यायप्रवर्तिनी वा दीयते, एषा अनुदिक् गतमध्वानं प्रतिपन्नादीतिद्वारं अधुना कप्पर्ड्डि संभरंति जा वितिया इति व्याख्यानार्थमाह—

**अन्नत्थदिक्खिया थेरी तीसे धूया य अन्नहिं । वारिज्जंति एसा एज्जा धूयानेहेण तं गणं ॥ ३७२ ॥**

अन्यत्र गच्छे स्थविरा माता दीक्षिता, अन्यत्र गच्छान्तरे से तस्य दुहिता दीक्षिता । ततः सा माता दुहितुः स्नेहेन आत्मीयानाचार्योपाध्यायान् पृच्छति व्रजामि तां दुहितरं द्रष्टुं ' । सा वार्यमाणाप्याचार्योपाध्यायैर्निर्गता । एवमेकाकिनी सा जाता एकाकितया निर्धर्मीभूता यत्र सा दुहिता दीक्षिताऽस्ति, तं गणमागता दृष्टा दुहिता संवेगमापन्ना, शेषं प्राग्वत् ॥ इदानीमागमनदेशं मज्झे इत्यादिव्याख्यानार्थमाह—

वसभे य २ उवज्झाए ३ आयरिय ४ कुलेण ५ वावि थेरेण। गणथेरेण गणेण व६ संघथेरेण संघेण७।३७६।
भणिया न विसज्जंती लहुगादी सोही जाव मूलं तु। नीयय हरिऊण ततो अण्णो से दिज्जते उ गणो।३८०।

यदा संयत्या भणितेऽपि सा प्रवर्तिनी न विसर्जयति तदा (२) वृषभो गीतार्थः कोऽपि साधुर्गत्वा तामापृच्छति। तत्रापि यदि न विसर्जयति तदा प्रायश्चित्तं चतुर्लघु। ततो यः (३) साधुरुपाध्यायस्थानं प्राप्तस्तेन आपृच्छ्यते। तत्राप्यविसर्जने चतुर्गुरु ततो यः साधु(४)राचार्यस्थानं प्राप्तः स तामापृच्छति। यदि न विसर्जयति तर्हि तस्याः प्रायश्चित्तं षड्लघु। ततः(५) कुलेन कुलस्थविरेण वा भणनीया। तत्राविसर्जने षट्गुरु। ततो गणेण (६) गणस्थविरेण वा सा प्रज्ञापनीया तथाप्यमुत्कलने प्रायश्चित्तं च्छेदस्तदनन्तरं सङ्घेन सङ्घस्थविरेण वा सा भणनीया तथापि चेन्न विसर्जयति तर्हि प्रायश्चित्तं तस्या मूलं अन्यच्च यदि वा सङ्क्रमपक्रामति। ततस्तस्याः सकाशात् हृत्वा से तस्या अन्यो गणो दीयतेऽन्यस्याः प्रवर्त्तिन्याः सा समर्प्यते इत्यर्थः॥

एमेव उवज्झाए अविसज्जंते हवंति लहुगाओ। भणणंते गुरुगादी जाव नवमं तु ॥ ३८१ ॥
एमेवय आयरिए अविसज्जंते हवंति गुरुगा उ। वसभाईएहिं भणिए छल्लहुगाई उ जा चरिमे ॥३८२॥

संयत्या भणितया स्वयं प्रवर्तिन्यास्तस्यामविसर्जनायां यदि तस्या उपाध्यायो न तां भणति यथा विसर्जयेमां साध्वीमिति तदा तस्य प्रायश्चित्तं चत्वारो लघुकाः। उपाध्यायातिक्रमणे यद्याचार्यो न भणति यथेमां विसर्जयेति, तदा तस्यापि

प्रायश्चित्तं चतुर्लघु एवं तावत् प्रवर्तिन्यामविसर्जयन्त्यामुक्तमिदानीमाचार्यस्योपाध्यायस्य वा अविसर्जयतः प्रतिपाद्यते । एव-
मेव अनेनैव प्रकारेणोपाध्याये अविसर्जयति प्रथमतो भवन्ति चत्वारो लघुकाः । ततो वृषभादिक्रमेण प्रायश्चित्तं वर्धमानं
तावत् द्रष्टव्यं यावत् पर्यन्ते नवममनवस्थाप्यलक्षणं प्रायश्चित्तं आचार्येण प्रथमतोऽभण्यंते गुरुकाश्चत्वारस्ततस्तदादिकं वृष-
भादिक्रमेण प्रवर्धमानं तावदवसेयं यावत्पर्यन्ते चरमं पाराश्चितमितीयमक्षरयोजना भावार्थस्त्वयम्—संयत्या प्रेषणे प्रवर्तिन्या
विसर्जितायामविसर्जितायां वा यद्युपाध्यायो न विसर्जयति तदा तस्य प्रायश्चित्तं चत्वारो लघुकास्ततोऽन्येन साधुना गीतार्थेन
स उपाध्यायो भण्यते । तथाप्यमुत्कलने चतुर्गुरु ततो यः साधुरुपाध्यायस्थानं प्राप्तस्तेन स प्रज्ञाप्यते तथाप्य विसर्जने षड्-
लघु तदनन्तरमाचार्यस्थानं प्राप्तः साधुः प्रेष्यते तेनाप्यविसर्जने षड्गुरु कुलेन ततः कुलस्थविरेण वा भावनीयस्तत्राविसर्जने
च्छेदः । गणेन गणस्थविरेण वा भणनेऽप्यविसर्जने मूलं सङ्घेन स्थविरेण वा प्रज्ञापनायामप्यमुत्कलनेऽनवस्थाप्यं तथा संय-
त्याभणने प्रवर्तिन्या विसर्जितायामविसर्जितायां वा यदि आचार्यो न विसर्जयति तदा तस्य प्रायश्चित्तं चतुर्गुरुकम् तदनन्तरं
तस्य समीपे वृषभः प्रेष्यते तस्याप्यमुत्कलने षट् लघु । तत उपाध्यायस्थानप्राप्तेन साधुना भणनेऽप्यविसर्जने षट् गुरु ।
तदनन्तरमाचार्यस्थानप्राप्तः साधुः प्रेषणीयः । तस्याप्यमुत्कलने च्छेदः । कुलेन कुलस्थविरेण भणितेऽप्यविसर्जने मूलं गणेन
गणस्थविरेण वाऽनवस्थाप्यं सङ्घेन सङ्घस्थविरेण वा पाराश्चितं संघातिक्रमे तस्या गणादपहरणं सङ्घेन । तथा चाह—

**साहत्थमुंडियं गच्छवासिणं बंधवेत्तिमग्गंती । अण्णस्स देइ संघो णाणचरणरक्खणा जत्थ ॥ ३८३ ॥**

पार्श्वस्थादिभिः स्वहस्तमुण्डितां गच्छवासिनीं पार्श्वस्थादि गच्छवासिनीं वा बान्धवा उद्यतविहारिणो ये संसाराभिस्तार-

# છઠ્ઠા ઉદ્દેશાનો સાર.

(૧) સાધુ પોતાના સગાને ત્યાં ગોચરી જવા ઇચ્છે, તો વૃદ્ધ (આચાર્યાદિ) સાધુને પૂછ્યા વિના સગાંને ત્યાં ગોચરી ન જવાય, પણ સ્થવિર (વૃદ્ધ) ને પૂછીને જવાય, પૂછતાં જો સ્થવિર તેને આજ્ઞા આપે તો જવાય, સ્થવિર આજ્ઞા ન આપે, તો ન જવાય. જો સ્થવિરની આજ્ઞા વિના સગાંને ત્યાં જાય તો તેને છેદ કે પરિહારતપનું પ્રાયશ્ચિત્ત આવે, સ્થવિર જેને આજ્ઞા આપે, તો પણ તે જો ઓછું ભણેલો ઓછાબોધવાળો હોય તો એકલા સાધુને સગાંને ત્યાં જવું ન કલ્પે, પણ બીજો બહુશ્રુત બહુ બોધવાળો હોય તેની સાથે જવું કલ્પે, ત્યાં ગયા પછી તેના જવા પહેલાં પૂર્વે ચોખા રંધાયા હોય તો તે લેવા કલ્પે અને દાળ રંધાઇ હોય તો દાળ કલ્પે પણ ગયા પછી જે રંધાય તે ન કલ્પે. ભા. ગા. ૭૨ ॥

(સૂ. ૨.) આચાર્ય ઉપાધ્યાયને સમુદાયમાં રહેતાં પાંચ અતિશયો હોય છે. તેમાં પ્રથમ એ છે કે આચાર્ય કે ઉપાધ્યાયને બહાર પગ પૂંજવાનું ન બને તો ઉપાશ્રયની અંદર તેઓના પગ પૂજે તો દોષ ન લાગે, બીજો એ છે કે આચાર્ય ઉપાધ્યાય ઉપાશ્રયની અંદર કે તેના વાડામાં સ્થંડિલ જાય તો પણ દોષ ન લાગે, ત્રીજો અતિશય–આચાર્ય ઉપાધ્યાયને શ્રમ થયો હોય તો વેયાવચ્ચ કરનાર શિષ્ય પાસે સેવા કરાવે, ન ઇચ્છા હોય તો ન કરાવે. (૪) આચાર્ય ઉપાધ્યાય ઉપાશ્રયના અંદરના ભાગમાં એક બે ત્રણ દિવસ રહે તો દોષ ન લાગે. (૫) આચાર્ય ઉપાધ્યાય એક બે ત્રણ દિવસ ઉપાશ્રયના બહારના ભાગમાં રહે તો દોષ ન લાગે.

( સૂ. ૩. ) જે ગણુાવચ્છેદક ભવિષ્યમાં આચાર્ય પદ પામવા યોગ્ય હોય તેવાને બે અતિશય જાણુવા. ( ૧ ) ઉપાશ્રયના અંદરના ભાગમાં એક બે દિવસ રહે તો દોષ ન લાગે. ( ૨ ) ઉપાશ્રયના બહારના ભાગમાં એક–બે દિવસ રહે તો દોષ ન લાગે.

( સૂ. ૪. ) ગામ ( પ્ર. ૧. ઉ. સૂ. ૬ પ્રમાણે ) થી માંડીને રાજધાની સુધીમાં એક વંડામાં એક બારણુાવાળા અને એકજ નીકળવા પેસવાના દરવાજાવાળા મકાનમાં આચાર્યથી જુદા ખંડમાં ઘણી સંખ્યામાં અગીતાર્થ સાધુ હોય તેમને રહેવું ન કલ્પે, પણ જો તેમની ખબર લેનાર આચાર પ્રકલ્પ ( નિશીથ સૂત્ર ) ભણેલો સાધુ હોય તો તેમને છેદ કે પરિહાર તપનું પ્રાયશ્ચિત્ત ન આવે, પણ જો તેવો નિશીથસૂત્ર ભણેલો ગીતાર્થ ન હોય તો તે બધાને તે જુદા ખંડમાં રહેવા બદલ છેદ કે પરિહારતપનું પ્રાયશ્ચિત્ત આવે.

( સૂ. ૫. ) ગામથી લઇને રાજધાની સુધીના ક્ષેત્રમાં જુદા વાડાના ઘરમાં કે બીજા દરવાજાવાળા કે જુદો નીકળવા પેસવાનો માર્ગ છે તેવા સ્થાનમાં અગીતાર્થો ઘણા હોય તો પણુ તેમને રહેવું ન કલ્પે, પણ નિશીથસૂત્ર ભણેલો જો કોઇ તેમની ત્રીજે દિવસે ખબર લેનાર સાથે રાત રહે તોતે બધાને છેદ કે પરિહારતપનું પ્રાયશ્ચિત્ત ન આવે, પણ જો તેવી ખબર લેનાર ગીતાર્થ ન હોય તો તે બધાઓને છેદ કે પરિહાર તપનું પ્રાયશ્ચિત્ત આવે.

( સૂ. ૬. ) ઉપર પ્રમાણે જુદા વાડાના ઘરમાં કે બીજા દરવાજાવાળા ઘરમાં કે નીકળવા પેસવાનો રસ્તો બીજો હોય તેવા સ્થાનમાં ઘણું ભણેલો ગીતાર્થ હોય તો પણુ તેને એકલાને રહેવું ન કલ્પે, ત્યારે ન ભણેલાને તો જુદું કેમ રહેવાય ?

( સૂ. ૭. ) પણુ કારણુ પડે એક વાડાના એક દરવાજાના એક નીકળવા પેસવાના માર્ગવાળા ઘરમાં રહે તો ગીતાર્થને જુદા ઓરડામાં રહેવું કલ્પે. પણ તેણે પોતાનું ચારિત્ર મલિન ન થાય તે માટે બંને વખતે સવાર સાંજે ગુરૂ પાસે જવું જોઈએ.

यन्ति तान् विमार्गयन्ती अन्वेषयन्ती अन्यस्याचार्यस्योपाध्यायस्यान्यस्याश्च प्रवर्तिन्याः सङ्घो ददाति । यत्र तस्या ज्ञानचरणरक्षणा भवति किमित्वेवमत आह—

**नाणे चरणस्स पव्वज्जकारणं नाणचरणनो सिद्धी । जहि नाणचरणवुड्ढी अज्जाठाणं तहिं वुत्तं ।३८४।**

प्रव्रज्याकारणं ज्ञानस्य चरणस्य च ज्ञानचरणनिमित्तं प्रव्रज्या प्रतिपद्यते इति भावः । यतो ज्ञानचरणतः सिद्धिर्नान्यस्मात्ततो यत्र ज्ञानचरणवृद्धिस्तत्रार्याणामार्यिकाणां स्थानमवस्थानमुक्तं तीर्थकरगणधरैः । पार्श्वस्थादीनां सकाशे ज्ञानचरणे न ततस्तेभ्यस्तामपहृत्य सङ्घो अन्यस्य ददाति ॥

**मोत्तूण इत्थ चरिमं इत्तिरितो होइ ऊ दिसाबंधो । उसणदिक्खियाए आवकहाए दिसाबंधो ॥३८५॥**

अत्र एतेषु चतसृषु मध्ये चरमां चउत्थी पुण मग्गए सिक्खमित्येवंरुपां मुक्त्वा शेषाणां तिसृणामध्वनिर्गतादिकादीनां दिग्बन्ध इत्वरो भवति । चरमायाः पुनरवसन्नदीक्षिताया यावत्कथिको दिग्बन्धः

**सूत्रम् ११ कप्पइ निग्गन्थाण वा निग्गन्थीण वा निग्गन्थं अन्नगणाओ आगयं खुयायारं ( जहा १० ) तस्स ठाणस्स आलोयावेता पडिक्कमावेत्ता निन्दावेत्ता गरहावेत्ता विउट्टावेत्ता विसोहावेत्ता अकरणाए अब्भुट्ठावेत्ता अहारिहं पायच्छितं पडिवज्जावेत्ता उवट्ठावेत्तए वा ( जहा १० ) धारेत्तए वा ॥ ववहारस्स छट्ठो उद्देसओ समत्तो ॥**

अस्याचरगमनिका भाष्यविस्तरश्च प्राग्वत् द्रष्टव्यस्तथा चाह—

**एसेव गमो नियमा निग्गंथाणंपि होइ नायव्वो । नवरं पुण नाणत्तं अणवट्ठप्पो य पारंची ॥३८६॥**

एष एवानन्तरोदितो गमः प्रकारो निर्ग्रन्थानामपेत्य गणादागच्छतां भवति नियमात् ज्ञातव्यः । नवरं पुनः प्रायश्चित्ते नानात्वं अनवस्थाप्यं पाराश्चितं च । इयमत्र भावना—येन प्रव्राजितः स क्षुल्लको भिक्षुर्वा स चेत् संयते प्रेषिते न मुत्कलयति तदा तस्य प्रायश्चित्तं चतुर्लघु । ततो वृषभादिक्रमेण प्रायश्चित्तं पूर्वप्रकारेण वर्धमानं तावद् द्रष्टव्यं यावत्सङ्घेन सङ्घस्थविरेण वा भणनेऽप्यमुत्कलनेऽनवस्थाप्यं तथा तस्य साधुना भणनेऽप्यमुत्कलने यद्युपाध्यायस्तं प्रव्राजकं न भणति यथा विसर्जयैनमिति तदा तस्य प्रायश्चित्तं चतुर्लघु । आचार्यस्याभणने चतुर्गुरुतथा उपाध्यायः साधुप्रेषणे यदि न मुत्कलयति तदा चतुर्लघु । ततो वृषभादिक्रमेण पूर्ववद्वर्धमानं प्रायश्चित्तं तावद् द्रष्टव्यं यावत्संघातिक्रमेऽनवस्थाप्यं, आचार्यस्य तु चतुर्गुरुकादारभ्य तावद्वक्तव्यं यावत्सङ्घातिक्रमे पाराश्चितमत्रापि निर्ग्रन्थ्या इव चत्वारो भेदास्तथा चाह—

**अद्धाण निग्गयादी कप्पट्ठगसंभरंतो बिइतो । आगमणदेसभंगे चउत्थ उ मग्गए सिक्खं ॥३८७॥**

प्रथमोऽध्वनिर्गतादिकोऽद्वितीयः कल्पस्थकं बालकं संस्मरन्, तृतीयः परचक्रागमेन देशभङ्गे चतुर्थः पार्श्वस्थादिदीक्षितः शिक्षां मार्गयति । अमीषां च व्याख्यानं सविस्तरं प्राग्वन्निरवशेषं द्रष्टव्यमत्राप्यचरमं मुक्त्वा शेषाणां त्रयाणामित्वरो दिग्बन्धश्चतुर्थस्य तु यावत्कथिक इति श्रीमलयगिरिविरचितायां व्यवहारटीकायां षष्ठ उद्देशकः समाप्तः ॥

षष्ठोद्देशके ग्रन्थाग्रं० २३०९

# છઠ્ઠા ઉદ્દેશાનો સાર.

(૧) સાધુ પોતાના સગાને ત્યાં ગોચરી જવા ઇચ્છે, તો વૃદ્ધ (આચાર્યાદિ) સાધુને પૂછ્યા વિના સગાંને ત્યાં ગોચરી ન જવાય, પણ સ્થવિર (વૃદ્ધ) ને પૂછીને જવાય, પૂછતાં જો સ્થવિર તેને આજ્ઞા આપે તો જવાય, સ્થવિર આજ્ઞા ન આપે, તો ન જવાય. જો સ્થવિરની આજ્ઞા વિના સગાંને ત્યાં જાય તો તેને છેદ કે પરિહારતપનું પ્રાયશ્ચિત્ત આવે, સ્થવિર જેને આજ્ઞા આપે, તો પણ તે જો ઓછું ભણેલો ઓછાબોધવાળો હોય તો એકલા સાધુને સગાંને ત્યાં જવું ન કલ્પે, પણ બીજો બહુશ્રુત બહુ બોધવાળો હોય તેની સાથે જવું કલ્પે, ત્યાં ગયા પછી તેના જવા પહેલાં પૂર્વે ચોખા રંધાયા હોય તો તે લેવા કલ્પે અને દાળ રંધાઇ હોય તો દાળ કલ્પે પણ ગયા પછી જે રંધાય તે ન કલ્પે. ભા. ગા. ૭૨ ॥

(સૂ. ૨.) આચાર્ય ઉપાધ્યાયને સમુદાયમાં રહેતાં પાંચ અતિશયો હોય છે. તેમાં પ્રથમ એ છે કે આચાર્ય કે ઉપાધ્યાયને બહાર પગ પૂંજવાનું ન બને તો ઉપાશ્રયની અંદર તેઓના પગ પૂજે તો દોષ ન લાગે, બીજો એ છે કે આચાર્ય ઉપાધ્યાય ઉપાશ્રયની અંદર કે તેના વાડામાં સ્થંડિલ જાય તો પણ દોષ ન લાગે, ત્રીજો અતિશય—આચાર્ય ઉપાધ્યાયને શ્રમ થયો હોય તો વેયાવચ્ચ કરનાર શિષ્ય પાસે સેવા કરાવે, ન ઇચ્છા હોય તો ન કરાવે. (૪) આચાર્ય ઉપાધ્યાય ઉપાશ્રયના અંદરના ભાગમાં એક બે ત્રણ દિવસ રહે તો દોષ ન લાગે. (૫) આચાર્ય ઉપાધ્યાય એક બે ત્રણ દિવસ ઉપાશ્રયના બહારના ભાગમાં રહે તો દોષ ન લાગે.

( સૂ. ૩. ) જે ગણાવચ્છેદક ભવિષ્યમાં આચાર્ય પદ પામવા યોગ્ય હોય તેવાને બે અતિશય જાણવા. ( ૧ ) ઉપાશ્રયના અંદરના ભાગમાં એક બે દિવસ રહે તો દોષ ન લાગે. ( ૨ ) ઉપાશ્રયના બહારના ભાગમાં એક—બે દિવસ રહે તો દોષ ન લાગે.

( સૂ. ૪. ) ગામ ( ઉ. ૧. ઉ. સુ. ૬ પ્રમાણે ) થી માંડીને રાજધાની સુધીમાં એક વંડામાં એક બારણાવાળા અને એકજ નીકળવા પેસવાના દરવાજાવાળા મકાનમાં આચાર્યથી જુદા ખંડમાં ઘણી સંખ્યામાં અગીતાર્થ સાધુ હોય તેમને રહેવું ન કલ્પે, પણ જો તેમની ખબર લેનાર આચાર પ્રકલ્પ ( નિશીથ સૂત્ર ) ભણેલો સાધુ હોય તો તેમને છેદ કે પરિહાર તપનું પ્રાયશ્ચિત્ત ન આવે, પણ જો તેવો નિશીથસૂત્ર ભણેલો ગીતાર્થ ન હોય તો તે બધાને તે જુદા ખંડમાં રહેવા બદલ છેદ કે પરિહારતપનું પ્રાયશ્ચિત્ત આવે.

( સૂ. ૫. ) ગામથી લઇને રાજધાની સુધીના ક્ષેત્રમાં જુદા વાડાના ઘરમાં કે બીજા દરવાજાવાળા કે જુદો નીકળવા પેસવાનો માર્ગ છે તેવા સ્થાનમાં અગીતાર્થો ઘણા હોય તો પણ તેમને રહેવું ન કલ્પે, પણ નિશીથસૂત્ર ભણેલો જો કોઇ તેમની ત્રીજે દિવસે ખબર લેનાર સાથે રાત રહે તોતે બધાને છેદ કે પરિહારતપનું પ્રાયશ્ચિત્ત ન આવે, પણ જો તેવી ખબર લેનાર ગીતાર્થ ન હોય તો તે બધાઓને છેદ કે પરિહાર તપનું પ્રાયશ્ચિત્ત આવે.

( સૂ. ૬. ) ઉપર પ્રમાણે જુદા વાડાના ઘરમાં કે બીજા દરવાજાવાળા ઘરમાં કે નીકળવા પેસવાનો રસ્તો બીજો હોય તેવા સ્થાનમાં ઘણું ભણેલો ગીતાર્થ હોય તો પણ તેને એકલાને રહેવું ન કલ્પે, ત્યારે ન ભણેલાને તો જુદું કેમ રહેવાય ?

( સૂ. ૭. ) પણ કારણ પડે એક વાડાના એક દરવાજાના એક નીકળવા પેસવાના માર્ગવાળા ઘરમાં રહે તો ગીતાર્થને જુદા ઓરડામાં રહેવું કલ્પે. પણ તેણે પોતાનું ચારિત્ર મલિન ન થાય તે માટે બંને વખતે સવાર સાંજે ગુરૂ પાસે જવું જોઇએ.

( સૂ. ૮. ) કોઇ જગ્યાએ ઘણાં સ્ત્રી-પુરૂષો સ્નાન કરતાં હોય ત્યાં કોઇ પણ સાધુ કર્મવશથી વિકાર પામી અચિત્ત વસ્તુમાં હસ્તદોષ લગાડે તો એક માસનું અનુદ્‌ઘાતી પરિહારતપનું પ્રાયશ્ચિત્ત આવે.

( સૂ. ૯. ) અને અનાચારનું સેવન કરે તો ચાર માસના અનુદ્‌ઘાતિ તપનું પ્રાયશ્ચિત્ત આવે.

( સૂ. ૧૦. ) સાધુ સાધ્વીને અન્ય ગણુથી આવેલા સાધુ સાધ્વી જેમણે પોતાના આચારને ક્ષય કર્યો હોય, મલિન કર્યો હોય, સંકિલષ્ટ કર્યો હોય તેમને પ્રાયશ્ચિત્ત આપી શુદ્ધ કર્યા વિના સાથે જોડી લેવાં ન કલ્પે, તેમ ગોચરીવંદન વહેવાર પણ ન કલ્પે, તેમ તેને પોતાનાં સાધુ સાધ્વી તરીકે ઓળખાવવાં પણ ન કલ્પે.

( સૂ. ૧૧. ) પણ તે સાધુ સાધ્વી પોતાની મેળે તે દોષો શુદ્ધ હૃદયથી આચાર્યને કહી બતાવે, તે ફરી ન કરવાની પ્રતિજ્ઞા કરે, અધર્મ કૃત્યને નિંદે, ગુરૂ સમક્ષ ગર્હા કરે, તે પાપથી પાછાં ફરે, તેની બરોબર શુદ્ધિ કરે અને તેનું ઉચિત પ્રાયશ્ચિત્ત તપ કર્યા પછી સાથે લેવાં ગોચરી વિગેરે બધું કલ્પે, તેમ તેને પોતાનાં તરીકે ઓળખાવવાં કલ્પે. ( મૂળ સૂત્ર ૧૦ માં સાધ્વીનો અધિકાર છે ૧૧ માં સાધુનો છે પણ તે બંને સૂત્રો સાધુ સાધ્વીને લાગુ પડતાં હોવાથી સૂત્રસારમાં સાથે લીધાં છે. )

લુણસાવાડા,
અમદાવાદ.

મુનિ માણેક.

लेखक—मुनिमाणेक. मून्य रु. २-४-० प्रकाशक—वकील केशवलाल प्रेमचंद
मुद्रक—शाह गुलाबचंद लल्लुभाइ आनंद प्री. प्रेस—भावनगर.

# व्यवहार सूत्रे सप्तम उद्देशकः ( सप्तम विभाग )



संशोधक—मुनि माणेक.

प्रकाशक—वकील केशवलाल प्रेमचंद,

अमदावाद.



भावनगर—आनंद प्री. प्रेसमां शाह गुलाबचंद लल्लुभाइए छाप्युं.

प्रथम खंड सपूर्ण मूल्य रु. १७ फक्त सातमा उद्देशानु मूल्य रु. ३-४-० बीजो खंड संपूर्ण मूल्य रु. १५

## —: વ્યવહાર સૂત્ર વાંચનારા માટે સૂચના :—



પ્રથમ વિભાગમાં પીઠિકા છે જેમાં સૂત્રનો સાર છે.
દ્વિતીય વિભાગમાં, તૃતીય વિભાગ સંપૂર્ણમાં પ્રથમ ઉદ્દેશો છે.
ચતુર્થ વિભાગમાં, બીજો તથા ત્રીજો ઉદ્દેશો છે.

**અહીં પ્રથમ ખંડ પૂરો થાય છે.**

૪–૫–૬ ઉદ્દેશા અમદાવાદ છપાય છે.
સાતમો આ તૈયાર થઇ બહાર પડે છે.
૮–૯–૧૦ ઉદ્દેશ ભાવનગર છપાય છે.

મળવાનાં ઠે૦—**શ્રી મોહનલાલજી જૈન શ્વે૦ જ્ઞાન ભંડાર–સુરત ગોપીપુરા.**
**અમદાવાદ—પ્રકાશક કેશવલાલ પ્રેમચંદભાઇ વકીલ–મોદી હાજાપટેલની પોળ.**

# સાતમા ઉદ્દેશાના વિષયનો સંક્ષિપ્તસાર.



૧ જે સાધુ સાધ્વીઓ સાંભોગિક છે અર્થાત્ એક આચાર્યની મર્યાદામાં છે, તેમાં સાધ્વીઓને વડીલ આચાર્યને પૂછ્યા વિના બીજા સંઘાડામાંથી આવેલી અતિચાર વિગેરેથી વ્રતમાં મલીનતા જેને છે તેને ગુરૂ પાસે પ્રાયશ્ચિત્ત અપાવ્યા વિના ( છઠ્ઠા ઉદ્દેશના ૧૦ મા સુત્ર પ્રમાણે ) સાથે સમુદાયમાં લેવી ન કલ્પે પરંતુ તે સાધ્વીને ગુરૂ પાસે લેઇ જઇ પ્રાયશ્ચિત્ત અપાવી સાથે લેવી કલ્પે છે, નિર્મળ કર્યા પછી સાધ્વીને જો સાથે ન લેતો સાધ્વીઓને ગુરૂ પ્રાયશ્ચિત્ત આપે.

૨ જે સાધુ સાધ્વીઓ એક ગુરૂની મર્યાદામાં છે તે સાધુઓને બીજા સંઘાડાના સાધુ સાથે ગોચરીનો વ્યવહાર હોય, પરંતુ બીજા સંઘાડાવાળા સાધુના આચારથી વિરૂદ્ધ વર્ત્તન કરતા હોય તો પૂંઠ પછવાડે વ્યવહાર બંધ ન કરવો, પણ પ્રત્યક્ષ ભૂલ બતાવી દેવી, જો તેનો પસ્તાવો કરી ભૂલ સુધારે તો તેની ગોચરીનો વ્યવહાર ન તોડવો, પસ્તાવો ન કરે ભૂલ ન સુધારે તો વ્યવહાર બંધ કરવો.

૩ સાધ્વીઓએ પ્રત્યક્ષ દોષ જોયા હોય તોપણ ગોચરી વ્યવહાર ન તોડવો, પણ પોતાના આચાર્યની આજ્ઞા લેઇ અશુદ્ધ આચારવાળી સાધ્વીના ગુરૂને પ્રથમ કહેવડાવી તેને સુધારવા તક આપવી છતાં ન સુધરે તો પછી કહેવડાવી દેવું કે તમારી સાથે અમારો વ્યવહાર બંધ છે.

૪–૫ કોઈપણુ સાધુએ પોતાની વેયાવચ્ચ માટે સાધ્વીને દીક્ષા આપવી ન કલ્પે. પરંતુ સાધ્વીની સલાહ લેઇ તે બાઈને દીક્ષા આપી તે સાધ્વીને સોંપવી.

૬–૭ તેજ પ્રમાણે સાધ્વીએ સાધુને દીક્ષા આપવી નહિ, પણુ યોગ્યતાવાળાને સાધુ પાસે દીક્ષા અપાવવી.

૮ સાધ્વીને એક સંઘાડામાં દીક્ષા લેઇ બીજા સંઘાડાની ચેલી થવું હોય તો તેને તેમ દીક્ષા ન આપવી, પણુ જ્યાં રહેવું હોય ત્યાં જઈ દીક્ષા લે.

૯ પણુ સાધુને કારણુસર એક સંઘાડામાં દીક્ષા લેઇ બીજા સંઘાડાના ગુરૂ ધારણુ કરી શકાય છે.

૧૦ સાધુઓને પરસ્પર વિખવાદ થયા પછી જુદા પડયા હોય અને ખમાવવું હોય તો દૂર બેઠે ખમાવવું ન કલ્પે.

૧૧–૧૨ સાધ્વીઓને વિખવાદ થયો હોય તો દૂર બેઠે પણુ ખમાવવું કલ્પે. સાધુઓને અયોગ્યકાળે સ્વાધ્યાય કરવું (સુત્ર ગોખવું) ન કલ્પે.

૧૩–૧૪–૧૫ સાધ્વીઓને સાધુની નિશ્રાએ કારણુસર સૂત્ર ગોખવું કલ્પે. સાધુ સાધ્વીઓને અસ્વાધ્યાયના દિવસોમાં ભણુવું ન કલ્પે. પણુ સ્વાધ્યાયના દિવસમાં ભણુવું કલ્પે.

૧૬ સાધુ સાધ્વીઓને પોતાને અશુચિ વિગેરેનું કારણુ હોય તો સૂત્ર ગોખવું ન કલ્પે પણુ પરસ્પર પાઠ આપવો કલ્પે.

૧૭ ત્રણુ વર્ષના પર્યાયવાળો સાધુ યોગ્યતા હોય તો ૩૦ વર્ષના પર્યાયવાળી સાધ્વીનો ઉપાધ્યાય થઇ શકે.

૧૮ પાંચ વર્ષના પર્યાયવાળો સાધુ ૬૦ વર્ષના પર્યાયવાળી સાધ્વીનો આચાર્ય–ઉપાધ્યાય થઇ શકે.

૧૯ કોઇ સાધુ વિહાર કરતાં કાળ ધર્મ પામ્યો હોય તો રસ્તામાં જતાં બીજો સાધુ જુએ તો તેને સાધુ તરીકે ઓળખી ત્યાંથી ઉપાડી એકાંત નિર્જીવ જગ્યામાં પુંજી પ્રમાર્જીને તેને પરઠવે ( રસ્તામાં રખડવા ન દે ) તેનું ઉપકરણુ કંઇ વાપરવા જેવું હોય

તો પોતે ગુરૂની નિશ્રાએ લે, અને ગુરૂને બતાવી તે આપે તો વાપરે.
તો પોતે ગુરૂની નિશ્રાએ લે, અને ગુરૂને બતાવી તે આપે તો વાપરે. ભાડે આપતી વખતે કરાર કરે કે આટલી જગ્યા સાધુ

૨૦ ગૃહસ્થોના ભાડે આપવાના મકાનોમાં સાધુ કારણ વિશેષે ઉતર્યા હોય તો ભાડે આપતી વખતે કરાર કરે કે આટલી જગ્યા સાધુ
વાપરશે અને તે કરાર ભાડે લેનારો સ્વીકારે તો મુળ ધણીનુ ઘર શયાતર થાય, પણ ભાડે લેનારે પુરૂં મકાન ભાડે લેઇ સાધુને
પોતે જગ્યા વાપરવા આપે તો તેનું ઘર શયાતર થાય, બંનેની થોડી થોડી જગ્યા વાપરે તો બંને શયાતર થાય.

૨૧ તે મકાન વેચાય અને વેચનાર કરાર કરે કે આટલી જગ્યા સાધુઓ વાપરશે તે ખરીદ કરનાર સ્વીકારે તો વેચનારનું ઘર શયા-
તર થાય, પણ તે ન સ્વીકારે અને વેચાતું લીધા પછી લેનાર પોતે જગ્યા આપે તો તેનું ઘર શયાતર થાય, બંનેની જગ્યા થોડી
થોડી વપરાય તો બંને શયાતર થાય.

૨૨ દીકરી વિધવા થયા પછી બાપને ઘેર રહી હોય તો તેની આજ્ઞા લેઈ ઉતરવું કલ્પે છે, તો માલિકના પિતા ભાઇ પુત્ર જે ઘરમાં
હકદાર હોય તેની આજ્ઞા લેઇ ઉતરવું કેમ ન કલ્પે ?

૨૩ માર્ગમાં પણ ગૃહસ્થી આજ્ઞા લઇ રહેવું કલ્પે છે.

૨૪ જ્યારે રાજ્યમાં રાજાનો ફેરફાર થાય અને અમુક રાજા નિમાવાનો પ્રગટ ઢંઢેરો જાહેર ન થાય અને બીજો રાજા તે રાજ્ય ન
સ્વીકારે ત્યારે સાધુઓએ પૂર્વે જેની આજ્ઞા લીધી હોય તે જ આજ્ઞામાં રહેવું કલ્પે છે.

૨૫ જ્યારે રાજ્યનો રાજા એક કે જુદા પ્રગટ નિમાય, લોકમાં તે જાહેર થાય, ત્યારે સાધુઓએ ત્યાં રહેવું હોય તો બીજી વખત
ત્યાંના નવા રાજાની આજ્ઞા લઇ રહેવું કલ્પે.

વીરપ્રભુના શાસનના સ્તંભરૂપ શ્રાવકોમાંના એક સંઘવી

# સ્વર્ગસ્થ ફુલચંદભાઇ કમળશીભાઇની સંક્ષિપ્ત જીવનરેખા.



વ્યવહારસૂત્ર પ્રાયઃ સાધુઓને ઉપયોગી છતાં શ્રાવકોએ દ્રવ્યનો સદુપયોગ કરવાથી જ આ સૂત્ર પ્રસિદ્ધ થયું છે, પ્રથમ ઉદ્દેશામાં પાર્શ્વનાથની ત્રીજા ઉદ્દેશામાં પ્રવર્ત્તક શાંતમૂર્ત્તિ કાંતિમુનિજી અને આ સાતમા ઉદ્દેશાને અંતે ઉપરોક્ત પુણ્યાત્મા શ્રાવકની તસ્બીર છે. તેમનું નિર્મળ ધાર્મિક વર્ત્તન અને પરોપકારી જીંદગી બીજાઓને આદર્શરૂપ થઇ પડશે—ફુલચંદભાઈનો જન્મ વિ. સં. ૧૮૮૧ ની સાલમાં જામનગરમાં થયો હતો, ફક્ત ગામઠી નિશાળમાં ગુજરાતી અભ્યાસ કરી પ્રથમ લખતર સ્ટેટમાં નોકરી કરી ઉત્તમ ગુણોથી વધતાં વધતાં આ રાજ્યના મુખ્ય કારભારી થયા અને લખતરસ્ટેટના નામદાર ઠાકોર સાહેબ ઝાલા કરણસિંહજી સાહેબના ઉદય સાથે તેમનો પણ ઉદય થતો ચાલ્યો, પોતાના ચારે પુત્રોને કેળવવા લક્ષ આપ્યું, મોટા પુત્ર જગજીવનદાસના પૌત્રો હાલ વિદ્યમાન છે, બીજા પુત્ર દલીચંદ ભાઇનો પુત્રો વિદ્યમાન છે.

પરંતુ પિતાના નામ તથા હોદ્દાને દીપાવનાર ત્રીજા પુત્ર નેણશીભાઇ અત્યારે ૬૬ વર્ષની ઉમરના વિદ્યમાન છે, જેમણે પિતાની દીવાનગિરિની જગ્યા આજસુધી શોભાવી રાજ્યની અને પ્રજાની પ્રીતિ મેળવી છે, અન્તે આખી જીંદગી આ રાજ્યની સેવામાં અર્પેલી છે.

—: લખતરનું દેરાસર :—

અહીં દેરાસર નહોતું પણ એક ભવ્ય પ્રતિમા આદીશ્વરપ્રભુની સં. ૧૯૦૩ માં નીકળી, તે હાલના દેરાસર પછવાડે એક ઓરડામાં



**સંઘવી કુલચંદભાઇ કમળશીભાઇ.**

શ્રીમાન્ અગ્રગણ્ય શ્રાવક.

લખતર સ્ટેટના મુખ્ય કારભારી.

જન્મ સ. ૧૮૮૧ સ્વર્ગવાસ સ. ૧૯૫૭

બિરાજમાન હતી, તથા વખારીયા હીરાભાઇ શ્રાવકનું એક ઘર હતું, અને નગરશેઠ પ્રેમાભાઇ હેમાભાઇની પેઢી હતી, આ કુલચંદ ભાઇના પ્રયાસથી ૧૯૩૦ ની સાલથી ટીપ થઇ અને હાલનું શીખરબંધી દેરાસર તૈયાર થયું. અને ગામના ઉદયથી આજુબાજુના ગામના શ્રાવકો અહીં રહેવા આવ્યા, અને ૧૯૩૬ ના શ્રાવણ વદી ૮ મે કુલચંદભાઇના ખર્ચથી અમદાવાદના ઝવેરી છોટાલાલભાઇ તથા મગનભાઇ સુબાના હસ્તક પ્રતિષ્ઠા થઇ, આ દેરાસરને અત્રેના ઠાકોર સાહેબે એક ખેતર તેના વાર્ષિક ખર્ચ માટે આપેલ છે તથા ઘીના દીવામાટે છ રૂપિયા વાર્ષિક આજસુધી આવ્યા કરે છે, તે તેમની સર્વ ધર્મ પ્રેમવૃત્તિ સૂચવે છે, અને કુલચંદભાઇએ પોતાના જીવનસુધી આ દેરાસરની ઉન્નતિ માટે પ્રયાસ કર્યો છે,

## —: તેમનાં બીજાં ધાર્મિક કાર્યો :—

દુર્ગંધિથી ભરેલી મલિન કાયાને પવિત્ર કરવા પરમ પવિત્ર પંચ પરમેષ્ઠિ નવકાર મંત્રનો ૨૭ લાખ જપ કર્યો તેવું તેમની નોંધમાં છે.

સિદ્ધગિરિની વિધિપૂર્વક ૯૯ યાત્રા કરી છે, અને અષ્ટાપદના દેરાસરમાં શાંતમૂર્ત્તિ મુનિવર્ય હંસવિજયજી મહારાજના ઉપદેશથી આરસ જડાવી તીર્થંકરગોત્ર બાંધનાર રાવણ અને મંદોદરીની નાટારંભ કરતી મૂર્ત્તિઓ તે દેરામાં પ્રભુ સન્મુખ પધરાવી છે, પુંડરિક ગણધરના ઉપર આરસની છત્રી કરાવી છે, અને ગિરનારતીર્થની તળાટીમાં પાંચ ઓરડાની ધર્મશાળા કરાવેલી છે, ધાર્મિક ક્રિયા, દેવપૂજન સામાયિક ગુરુવંદન વિગેરેમાં તત્પર હતા, અને છેવટના છ ચોમાસાં ૧૯૫૧ ની સાલમાં નોકરી ઉપરથી રીટાયર થઇ પાલીતાણામાં કર્યાં અને આત્મસાધન કર્યું તેમના સુપગલે નેણશીભાઇએ ચાલી મહા પુણ્યબંધનું કારણ એવો ઉપાશ્રય દેરાસરના સન્મુખ બનાવી આપી શ્રીસંઘને ૧૯૬૫ ના ફાગણ વદી ૧ અર્પણ કર્યો છે, અને ધોરીમાર્ગ વીરમગામ વઢવાણ પાટડીનો હોવાથી સાધુ સાધ્વી પાસે જાતે આવી સાધુ સાધ્વીની વૈયાવચ્ચ કરવાથી તેમને તથા અન્ય બંધુઓને ધર્મ જાગૃતિ કાયમ રહેલ છે કુલચંદ

ભાઇને લેખકે જોયા નથી પરંતુ તેમના આ સાક્ષાત્ આદર્શરૂપ નેણુશીભાઇ પુત્રને જોઇ તેમનાં પરોપકારી કૃત્યોથી કુલચંદભાઇનું જીવન કેવું પવિત્ર હશે તે અનુમાન કરી લેવાય છે. આ નેણુશીભાઇ સાધુ સાધ્વીની વેયાવચ્ચ દેરાસર સાધારણ દરેકની વ્યવસ્થા કરવા ઉપરાંત ગિરનાર પર્વતના પ્રાચીન દેરાસરના જીર્ણોદ્ધાર ખાતે રૂા. ૧૦૦૧) માતુશ્રી ડાહીબાના સ્મરણાર્થે આપેલા છે, રૂા. ૩૫૦) યાત્રાળુઓના રસોડા ખાતે આ સાલમાં આપેલા છે. તથા ગઇસાલમાં પિતાજીના સ્મરણાર્થે રૂા. ૩૫૧) આપેલા છે તથા પિતાજીની સ્વર્ગવાસની વૈશાખ વદ ૧૨ ની તિથિએ શત્રુંજયની તલાટીમાં સ્વામીભાઇને સાકરનું પાણી પીવા માટે રૂા. ૧૫૦૦) નાં સાડા છ ટકાના ડેવલેપમેન્ટ બોંડ આણંદજી કલ્યાણજીની પેઢીમાં આપેલાં છે. એટલુંજ નહિ, પણ વ્યવહારસૂત્રની ઉપયોગિતા ઉપદેશમાં જાણતાં સાતમા ઉદ્દેશાના પેટે પ્રસિદ્ધ કરવા ખુટતી રકમ આપી અમરનામ સાથે જ્ઞાનભકિત કરી છે. શ્રી આણંદજી કલ્યાણજીની પેઢીના સ્થાનિક પ્રતિનિધિ તરીકે કુલચંદભાઇ હતા તેમની ગેરહાજરી થયા બાદ નેણુશી કુલચંદ સ્થાનિક પ્રતિનિધિ છે. મરહુમે આણંદજી કલ્યાણજીની હેડ ઓફીસ અમદાવાદમાં સ્થાપવા શેઠ પ્રેમાભાઈ તથા શેઠ દલપતભાઇ ભગુભાઇની સાથે રહી સુરત મુંબઇના ગૃહસ્થોને સમજાવવામાં બનતો પ્રયાસ કર્યો હતો. તેમજ આણંદજી કલ્યાણજીનું રેકર્ડ પાલીતાણા દરબાર સાથે શત્રુંજયની તકરાર થતાં પાલીતાણાથી અમદાવાદ લેઇ જવામાં ઘટતો પ્રયત્ન કર્યો હતો.

ગુજરાત તરફથી શ્રી સિદ્ધગિરિજીની યાત્રાએ છહરી પાળતા નીકળતા સંઘોનો લખતર મુકામ થતાં મરહુમે શ્રી સંઘની બની શકયા પ્રમાણે યોગ્ય રીતે ભકિત કરી દ્રવ્યનો સદ્‌ઉપયોગ કર્યો હતો.

લખતર
સં. ૧૯૮૪ ના મહા વદી ૪

—મુનિ માણેક.

## ॥ सभाष्ये व्यवहारसूत्रे सत्तमो उद्देसओ ॥

व्याख्यातः षष्ठोद्देशकः । सम्प्रति सप्तम आरभ्यते । तत्र चेदमादि सूत्रम्—

१ जे निग्गन्था य निग्गन्थीओ य संभोइया सिया, नो कप्पइ निग्गन्थीणं निग्गन्थे अणा-
पुच्छित्ता निग्गन्थिं अन्नगणाओ आगयं खुयायारं सबलायारं भिन्नायारं संकिलिट्ठायारचित्तं तस्स
ठाणस्स अणालोयवित्ता ( जहा ६, १० ) पायच्छित्तं अपडिवज्जावेत्ता पुच्छित्तए वा वाएत्तए वा
उवट्ठावेत्तएवा संभुञ्जित्तए वा संवसित्तए वा तीसे इत्तरियं दिसं वा अणुदिसं वा उद्दिसित्तए
वा धारेत्तए वा, अस्य सूत्रस्य सम्बन्धमाह—

निग्गंथीण हिगारे ओसण्णत्ते य समणुवत्तंते । सत्तमए आरंभो नवरं पुण दोवि निग्गंथी ॥ १ ॥

निर्ग्रन्थी नामाधिकारेऽवसन्नत्वे षष्ठोद्देशकेचरमसूत्रद्वयाऽनुवर्त्तमाने सप्तमे उद्देशके सूत्रद्वयस्यारम्भो भवति । तत्र यथा षष्ठो-
देशके चरमसूत्रद्वये एकस्मिन् सूत्रे निर्ग्रन्थी द्वितीये सूत्रे निर्ग्रन्थ एवमिहापि नयत आह—नवरं सूत्रद्वयेपि द्वेपि निर्ग्रन्थ्यौ
एवमनेन सम्बन्धेनायातस्यास्य व्याख्याः—ये निर्ग्रन्था निर्ग्रन्थ्यश्च सांभोगिकाः स्युस्तेषां मध्ये निर्ग्रन्थीनां न कल्पते निर्ग्र-

न्थाननापृच्छयान्यस्माद्गणादागतां च्युताचारां भिन्नाचारां संक्लिष्टाचारचित्ताममीषां शब्दानामर्थः प्राग्वत्, यस्मिन् स्थाने सीदति स तस्य स्थानस्य अनालोच्य अप्रतिक्रम्य प्रायश्चित्तमप्रतिपाद्य प्रष्टुं वा वाचयितुं वा उपस्थापयितुं वा एषां संभोगेन संभोक्तुं वा संवस्तुं वा तस्या इत्वरं दिशमाचार्य लक्षणामनुदिशं वा उपाध्यायप्रवर्तिनी लक्षणामुपदेष्टुं वा अनुज्ञातुं नापि तस्याः स्वयं धारयितुमित्येष प्रथमसूत्राक्षरार्थः ॥ सम्प्रति भाष्यविस्तरः—

**सुत्तधम्मकहनिमित्तमादि घेत्तूण निग्गया गच्छा । पस्सवणचेइयाणं पुत्रं काऊण आगमणं ॥ २ ॥**

कस्याप्याचार्यस्य शिष्या सा सूत्रमुपलक्षणमेतदर्थं च गृहीत्वा तथा धर्मकथाः पठित्वा निमित्तं वातीतमनागतं गृहीत्वा आदि शब्दात् विद्यामन्त्रचूर्णयोगांश्च ज्ञात्वा गच्छान्निर्गता ततः संनिमित्तादिबलेन धर्मकथा च इत्यादीनामीप्सिता जाता ततः संस्तवेन तानावृत्त्य चैत्यायतनप्रज्ञापनातश्चैत्यायतनं कारितवती विपुलं तत्र सत्कारसमुदयमनुभवति । अन्यदा सा महत्तरिका तस्याः संबोधनार्थं वा विहारप्रत्ययं वा चैत्यमहमुद्दिश्य वा तत्र समागता सा तस्याः शिष्या परितुष्टा तत इभ्यगृहेषु विविधान्यशनादीनि वस्त्राणि च महार्हाणि तस्या महत्तराया उत्पादयति, ततस्तस्या महत्तरिकया साऽनुशिष्टा किमद्याप्यार्ये ! पार्श्वस्थत्वेन तिष्ठसि । कुरु संयमे समुद्योगं स्वयं वा सा उद्यंतु कामा एवं तस्यामुपस्थितायां यदि चैत्यानामन्यः शुश्रूषकोऽस्ति । ततस्तस्मात्स्थानात् प्रतिक्राम्य तां महत्तरिका नयति, अथ नास्ति चैत्यानामन्य शुश्रुषकस्ततो यदि तस्मात्स्थानात् प्रतिक्राम्य तां महत्तरिका नयति तदा चैत्याभक्ति निमित्तं तस्याः प्रायश्चित्तं चतुर्गुरुकं, । एवं पूजां महत्तरिकायाः कृत्वा महत्तरिकया सह गुरु सन्निधावागमनमेतदेवाभिधित्सुराह—

धम्मकहनिमित्तेहियविज्जामंतेहिं चुस्मजोगेहिं । इप्भादि जोसियाणं संथवदाणे जिणाययणं ॥३॥

धर्मकथानिमित्तं विद्यामन्त्रैश्चूर्ण योगैश्चइत्यादि । जोषित्वा प्रीतयित्वा संस्तवदाने परिचयकरणे तथाविध प्रज्ञापनया जिनायतनं कारितवती ॥

संबोहणट्ठयाए विहारवत्ती व जिणवरमहेव। मपह(महय)रिया तत्थ गया निज्जरणं भत्तवत्थाणं ॥४॥

तस्याः सम्बोधनार्थं विहारवृत्या वा जिनवरमहे वा तस्या महत्तरिका तत्र गता तत इभ्यगृहेषु तस्या विविधस्य भक्तस्य महार्हाणां वस्त्राणां निर्जरणं दानं तया कारितम् ॥

अणुसट्ठ उज्जमंती विवज्जए चेइयाण सारवए ॥ पडिवज्जंत अविज्जंतए उ गुरुगा अभत्तीए ॥ ५ ॥

ततः सा महत्तरिकया संयमोद्योगकरणे समनुशिष्टाः स्वयं वा उद्यच्छन्ती वर्तते । तत्र विद्यमाने चैत्यानां सारापके साराकारके तां नेतुं प्रतिपद्यन्ते । अविद्यमाने तु चैत्यसारकारके तस्यानयने अभक्तिनिमित्ताश्चत्वारो गुरुकास्तासां महत्तरिकाणां प्रायश्चितम् ॥

आगमणं सक्कारं हिंडंति जहिं विरूवरूवेहिं । लाभेण सन्नियट्टा हिंडंती तो तहिं दिट्ठा ॥ ६ ॥

एवं सत्कारं सन्मानं च प्रतिगृह्य गुरुसमीपे आगमनं ततो लाभेन वस्तुलाभेनोपेताः सन्निवृत्ता विरूपरूपैरन्यदेशसत्कैर्वस्त्रैः प्रावृत्तास्तत्रभिचां हिण्डन्ते । चैत्यवन्दनाय वा व्रजन्ति । तत्र हिण्डमाना वृषभैर्दृष्टा एतदेव स्पष्टं भावयति—

प्रक्षेपकमुपचारविषयनिमित्तहरणार्थतया न ज्ञास्यन्ति । नापि कयाचित् सिद्धपुत्रिकया स्तैन्यकरणाय प्रव्रजितया एतत् उत्कृष्टवस्त्रादिकं स्तेनितं न ज्ञास्यंति तस्मादेतच्छिष्यापननिमित्तमेष गुरुको दण्डः । एतदेव सप्रपञ्चमाह—

**अवराहो वि गुरूतासिं सच्छंदेणोवहिं तुजाघेत्तुं । न कहंती भिन्ना वा जं निट्ठरमुत्तरं बेंति ॥१४॥**

अपराधोऽपि तासां संयतीनां गुरुरेव यत् स्वच्छन्दसा उपधिं गृहीत्वा न कथयन्ति भिन्ना वा ज्ञाता वा सत्यो यन्निष्ठुरमुत्तरं ब्रुवते । अन्यच्च अनापृच्छया गृह्णत्यो विषयहरणार्थतया चरिकासिद्धपुत्रीभिः प्रक्षेपकं न ज्ञास्यन्ति । एतदेव भावयति—

**अचियत्ता निक्खंता निरोहलावन्नलंकियं दिस्सा । विरहालंभे चरिया आराहणा दिक्खलक्खेण ॥१५॥**

कापि महेला कुटुम्बिनो अवियत्ता अप्रीतिमती अहमिति प्रव्रजिता । नवरं संयतीत्वे निरोधेन कुतोऽपि कर्मकरणादीनामर्थाय निर्गमनं ततः शरीरस्य लावण्यमद्भुतां लावण्यालंकृतां भिक्षामटतीं स भर्त्ता दृष्ट्वा लोभं गतः । सा चात्मतृतीया भिक्षामटती विरहो न विद्यते यत्र तामालापयति । ततः स चरिकां दानसन्मानाभ्यामाराधयति । ततश्चरिका ब्रूते—सन्दिश यन् मया कर्तव्यं । स प्राह—एतां संयतीं तथा कुरुत यथा प्रतिभज्यते । ततः सा दीक्षालक्षेण दीक्षाव्याजेनाहं प्रव्राजिष्यामीत्येवं रूपेण तां संयतीमुपागता ॥

**अहवावि अन्नो कोई रूवगुणुम्माइतो सुविहियाए । चरियाए पक्खेवं करेज्ज छिद्दं अविंदंतो ॥१६॥**

अथ च कोऽप्यन्योऽविरतः सुविहितायाः संयत्या रूपगुणेनोन्मादित उन्मादं ग्राहितच्छिद्रमविन्दन् अलभमानश्चरिकया दानसन्मानाभ्यामाराधितया प्रक्षेपमुपचारं कुर्यात् ॥

**सिद्धीवि कावि एवं अहवा उक्कोसणंतगा भिन्ना। होहं वीसं भेउं अगहियगहिए य लिंगंमि ॥१७॥**

अथवा चरिकया अभावे चरिकया प्रयोजनासिद्धौ कापि सिद्ध्यपि सिद्धपुत्रिकापि एवं दानसन्मानाभ्यां गृहीत्वा प्रयुज्येत, ततोऽनापृच्छया ग्रहणेऽजानत्यस्ता स्तमप्युपचारं गृह्णीयुस्तथा च सति महान् दोषः। अथवा सा सिद्धपुत्रिका तासां संयतीनामुत्कृष्टान्यनन्तकानि वस्त्राणि दृष्ट्वा भिन्ना वस्त्रग्रहणलोभेन चित्त(वि)भक्तमुपागता भविष्याम्यहं प्रव्रजितेति विश्रम्य गृहीत अगृहीते च लिङ्गे उत्कृष्टवस्त्राणां स्तैन्यं कुर्यात्। पर आह—

**वीसिज्जिय नासिहिती दिट्ठंतो तत्थ घंटलोहेण। तम्हा पवित्तिणीए सारणजयणाए कायव्वा ॥१८॥**

चोदकः प्राह—नन्वेवं विसर्जितास्ता नंक्ष्यन्ति तस्मान्मा क्रियतामीदृशो गुरुको दण्डः। आचार्यः प्राह—दृष्टान्तस्तत्र घण्टालोहेन। किमुक्तं भवति? यस्मिन्नेव दिने यत्र लोहे घण्टा कृता तल्लोहं तस्मिन्नेव दिने विनष्टं। एवं यत्र दिवसे ताः स्वच्छन्दतो वस्त्राणि गृहीतवत्यः प्रव्रज्यां वा दत्तवत्य स्तस्मिन्नेव दिने ता विनष्टा यत एते दोषास्तस्मात् प्रवर्तिन्या सारणा यतनया कर्तव्या। तामेवाह—

**धम्मं जइ काउ समुट्ठियासि अप्पोवदुग्गं तुकुमं सएहिं।**

सक्कारिया य आया हिंडंति तहिं विरूवरूवेहिं । वत्थेहिं पाउयाते दिट्ठा य तहिं तु वसभेहिं ॥ ७ ॥

सत्कारिताश्च महत्तराः प्रवृत्तकार्या यत्र गुरवस्तिष्ठन्ति तत्रायातास्तत्र च विरूपरूपैर्नानाप्रकारैर्महार्हैर्वस्त्रैः प्रावृत्ता हिण्डन्ति । ताश्च तत्र हिण्डमाना वृषभैर्दृष्टाः ॥

भिक्खाउ सरणंमि व अपुव्ववत्था उ ताउ दट्ठूणं । गुरुकहण तासि पुच्छा अम्हे अदिन्ना नवा दिठा॥

भिक्षायां समवसरणे वा अपूर्ववस्त्रास्ता दृष्ट्वा वृषभा गुरुकथनं कृतवन्तो वृषभैर्गुरो र्निवेदितं । तत आचार्येण वृषभा भणिताः । पृच्छत ता आर्याः कुतो युष्माकं तानि वस्त्राणि ततो वृषभैस्तासां समीपं गत्वा पृच्छा कर्तव्या । यथा—आर्ये नास्माभिरेतानि वस्त्राणि दत्तानि, नापि केनचिद्दीयमानानि अस्माभिर्दृष्टानि ॥ ८ ॥

निवेदियं च वसभे आयरिए दिट्ठ एत्थ किं जायं॥ तुम्हे अम्ह निवेयह किं तुब्भहियं नवरं दोसि ॥ ९॥

लहुगो लहुगा गुरुगा च्छम्मासा होंति लहुगुरुगा य। च्छेदो मूलं च तहा गणं च हाउं विगिंचेज्जा ॥१०॥

अत्र द्वयोर्गाथयोर्यथासंख्येन पदघटना । सा चैवम्—संयतीभिर्यत् किमपि वस्त्रादिकं लभ्यते तत्सर्वं गुरवे निवेदनीयं अनिवेदिते प्रायश्चित्तं लघुको मासः । वसभे इति वृषभे पृच्छके वृषभेण पृच्छायां कृतायां यदि न निवेदयन्ति तदा चत्वारो लघुकाः । आचार्येऽपि प्रच्छके यदि न कथयन्ति तदा चत्वारो गुरुकाः । यदि पुनराचार्यैरधिक्षिप्ता यथा किं युष्माभिर्न निवेदितानि तदा यद्व्यावृत्ता तदा चतुर्लघुकमथानावृत्ताः सत्यो न कथयन्ति तदा चतुर्गुरुकम् । अथ ता ब्रुवते यद् भणन्ति

तत् दृष्टं स्यात्तदा षण्मासा लघवः। अथाभिदधाति किमत्रजातं यदि न निवेदितं तदा षण्मासा गुरवः प्रायश्चित्तं। अथ भाषन्ते यूयं किमस्माकं निवेदयत। अत्र प्रायश्चित्तं च्छेदः। किं युष्माकमस्मदधिकं नवरमावां परस्पर द्वे भ्रातृभाण्डे एवं तासां ब्रुवतीनां प्रायश्चित्तं मूलं। तस्याश्च प्रवर्तिन्या गणो हृत्वा अन्यस्या दीयते। अथ सापि नेच्छति ततोऽन्यस्या दातव्यः। अथ सापि नेच्छति तर्ह्यन्यस्या दीयते। एतदेवाह—

**अण्णिस्सादेंति गणं अह नेच्छति ततो विगिंचते। तंपि पुणारविदिन्नस्सा एवं तु कमेण सव्वासिं॥११॥**

अन्यस्या गणमाचार्या ददति। तां पूर्वां प्रवर्तिनीं गणं हृत्वा विगिश्चयेत् परित्यजेत्। पुनरन्यस्या ददति। एवं क्रमेण सर्वासामपि पूर्वस्या अनिच्छायां गणो दातव्यः। सर्वासामनिच्छायां सर्वासां परित्यागः। अथ कस्मात् ता गणं दीयमानं नेच्छन्ति तत आह—

**पवत्तिणि ममत्तेणं गीयत्थातो गणं जई। धारईत्ता ण ईच्छंति सव्वासिंपि विगिंचणा॥ १२॥**

यदि गीतार्था अपि गणं धारयितुं प्रवर्तिनी ममत्वेन नेच्छन्ति तदा सर्वासां विगिश्चना परित्यागः।

**चोयग गुरुतो दंडो पक्खेवगचरियसिद्धपुत्तीहिं। विसयहरणाट्ठया तेणियं च एयं न नाहिंति॥१३॥**

चोदकः प्राह–प्रवर्तिन्यास्तुच्छेऽपराधे गुरुको दण्डो दत्तः। आचार्यः प्राह--अपराधोऽपि तासां गरीयान् यत् व्याहृताः (अभिहिताः) सत्यो निष्ठुरं भाषंते। अन्यच्च ता एव स शिष्यमाणा अनापृच्छ्योपधिं गृह्णत्यश्चरिकासिद्धपुत्रीभ्यां

प्रक्षेपकमुपचारविषयनिमित्तहरणार्थतया न ज्ञास्यन्ति । नापि कयाचित् सिद्धपुत्रिकया स्तैन्यकरणाय प्रव्रजितया एतत् उत्कृष्टवस्त्रादिकं स्तेनितं न ज्ञास्यंति तस्मादेतच्छिष्यापननिमित्तमेष गुरुको दण्डः। एतदेव सप्रपञ्चमाह—

**अवराहो वि गुरूतासिं सच्छंदेणोवहिं तुजाघेत्तुं । न कहंती भिन्ना वा जं निठ्ठरमुत्तरं बेंति ॥१४॥**

अपराधोऽपि तासां संयतीनां गुरुरेव यत् स्वच्छन्दसा उपधिं गृहीत्वा न कथयन्ति भिन्ना वा ज्ञाता वा सत्यो यन्निष्ठुरमुत्तरं ब्रुवते। अन्यच्च अनापृच्छया गृह्णत्यो विषयहरणार्थतया चरिकासिद्धपुत्रीभिः प्रक्षेपकं न ज्ञास्यन्ति। एतदेव भावयति—

**अचियत्ता निक्खंता निरोहलावन्नलंकियं दिस्सा। विरहालंभे चरिया आराहणा दिक्खलक्खेण॥१५॥**

कापि महेला कुटुम्बिनो अवियत्ता अप्रीतिमती अहमिति प्रव्रजिता। नवरं संयतीत्वे निरोधेन कुतोऽपि कर्मकरणादीनामर्थाय निर्गमनं ततः शरीरस्य लावण्यमद्भुतां लावण्यालंकृतां भिक्षामटतीं स भर्त्ता दृष्ट्वा लोभं गतः। सा चात्मतृतीया भिक्षामटती विरहो न विद्यते यत्र तामालापयति। ततः स चरिकां दानसन्मानाभ्यामाराधयति। ततश्चरिका ब्रूते—सन्दिश यन् मया कर्तव्यं। स प्राह—एतां संयतीं तथा कुरुत यथा प्रतिभज्यते। ततः सा दीक्षालक्षेण दीक्षाव्याजेनाहं प्रव्राजिष्यामीत्येवं रूपेण तां संयतीमुपागता॥

**अहवावि अण्णो कोई रूवगुणुम्माइतो सुविहियाए। चरियाए पक्खेवं करेज्ज च्छिद्दं अविंदंतो ॥१६॥**

इतरेषामसांभोगिकानां लिङ्गमात्रोपजीविनां वा संबन्धी यदि ज्ञातोभवति, तर्हि आचार्याणां तथैव निवेदनीयं, । तत्र यद्यन्य उपधिर्नास्ति ततः कारणे आचार्यो ब्रूते परिभुंक्ष्वामुपधिमिति । तेन च तथेति प्रतिपत्तव्यं । अथान्य उपधिः समस्ति तदा सूरिवचनात् गृहीत्वा एकान्ते परिष्ठापयेत् । अथ न ज्ञातो भवति किमयमुपधिः संविज्ञानामिति तदा अज्ञाते संविज्ञोपधौ विधिना घोषणां कुर्यात् ।

सूत्रम्—सागारिए उवस्सयं वक्कएणं पउंजेज्जा, सेयवक्कइयं वएज्जा इमम्हिय इमम्हिय ओवासे समणा निग्गन्था परिवसंति से सागारिए पारिहारिए, सेयनोवएज्जा वक्कइए वएज्जा, से सागारिए पारिहारिए दोवितेवएज्जा दोविसागारिया पारिहारिया, सू–१८ ॥ सागारिए उवस्सयविक्किणेज्जा, सेय कइयंवएज्जा इमम्हिय इमम्हिय ओवासे समणानिग्गन्था परिवसन्ति, से सागारिए, पारिहारिए, सेयनोवएज्जा कइए वएज्जा सेसागारिए पारिहारिए दोविते वएज्जा दोविसागारियापारिहारिया ॥१६॥

सागारिए उवस्सय इत्यादि सूत्रद्वयं । अस्य सम्बन्धमाह—

उग्गह एव अहिकितो इमे उ सुत्ताउ ऊग्गहो चेव । साहम्मिय सागारिय नाणत्तमिणं दुवेरहंपि ॥४७६॥

अवग्रहः पूर्वसूत्रेऽधिकृते इमे अपि चाधिकृते द्वे अपि सूत्रेऽवग्रहविषये ततोऽवग्रहप्रस्तावादस्य सूत्रद्वयस्यात्रोपन्यासो

नवरं पूर्वसूत्रे साधर्मिक उक्तोऽस्मिन्सागारिकः शय्यातर इति नानात्वं द्वयोरपि तदेवमुक्तः सम्बन्धोऽनेन सम्बन्धेनायातास्य व्याख्या सागारिक शय्यातर उपाश्रयमवक्रयेण कियत्कालं भाटकप्रदानेन प्रयुञ्जीत व्यापारयेत् स च सागारिकोऽवक्रियकं भाटकेन प्रतिग्राहिकं वदेत् । अस्मिन् अस्मिन् अवकाशे श्रमणा निर्ग्रन्थाः परिवसन्ति तस्मादेतत्परिहारेण त्वया भाटकेन गृहीतव्यमेवमुक्ते स सागारिकतया परिहार्यः परिहर्तव्यः । अथ तेन पूर्वस्वामिना सागारिकेण सर्वमपि भाटकेन प्रदत्तं ततो न किमपि वदेत् । केवलमवक्रियको वदेत् । अस्मिन्नस्मिन्नवकाशे श्रमणा निर्ग्रन्था परिवसन्तु तदा अवक्रियकः शय्यातर इति परिहार्यः परिहर्तव्यः । अथ द्वावपि वदेयातां यथा पूर्वस्वामिनोक्तमेतावत्येकदेशे श्रमणाः सन्तु तावत्यऽमातः साधून् दृष्ट्वा अवक्रियको ब्रूयादेतावति मदीयेऽपि प्रदेशे तिष्ठन्तु एवं विक्रिय सूत्रमपि भावनीयं । तदा द्वावपि तौ सागारिकौ शय्यातराविति परिहार्याविति सूत्रद्वयाक्षरार्थः । सम्प्रति भाष्यकारः—

**वक्कइयसालट्ठाणे चउरो मासा हवंति तणुग्घाया। दियरातो असिवा पुण भिक्खगते भुंजणगिलाणे ॥४७७॥**

वक्रयेण कियत्कालं भाटकप्रदानेन निवृत्ता वाक्रयिकी सा चासौ शाला च वाक्रयिकशाला तद्रूपे स्थाने शालाग्रहणमुपलक्षणं तेनापद्वारिकास्थाने वा गृहे वा इत्यपि द्रष्टव्यं यदि तिष्ठन्ति साधवस्तदा तेषां प्रायश्चित्त चत्वारो मासा अनुद्घाता गुरवो भवन्ति यतस्तत्र इमे दोषाः । सा शाला अपद्वारिका पूर्वं संयतानां दत्वा पश्चात्कोऽपि ग्रहणाय रूपकान् ददाति । ममेमां शालामपद्वारिकां गृहं वा कियत्कालं भाटकेन प्रयच्छ ततः सरूपकलोभेन संयतान् निष्काशयेत् । यदि वा रात्रौ वा उभयत्रापि निष्काशेन स्पर्धकपतेराचार्यस्य वा प्रत्येकं प्रायश्चित्तं चतुर्गुरुकं रात्रौ निष्काशनेश्वश्वापदद्विविधस्तेनतोऽशि-

वापनं विनाशप्राप्तिरित्यर्थः । अन्यां च वसतिं मार्गयतामप्यलभ्यमानानां जनगर्हायद्येतेषां शुभं कर्म ततः पूर्वोपाश्रयादपि न निष्काशयेरन् । अन्यां वा वसतिं लभेरन् । भिक्खगयत्ति संयता एकं वसतिपालं मुक्त्वा शेषा भिक्षार्थं गताः । पश्चात्स एकाकी वसतिपालो निष्काश्येत । भुंजणत्ति भोक्तुकामा वा निष्काश्येरन् । तत्र चोभयत्रापि जनगर्हा ग्लानो वा कोऽपि वर्तते सोऽकाण्डे निष्काशितः कथं क्रियते । तदेवं शालामधिकृत्योक्तमिदानीमुपलक्षणव्याख्यानसूचितान्यपद्वारिकां गृहं च वाक्रयिकमधिकृत्योक्तदोषयोजनां साक्षादाह—

**उवरिं च गिहं वा विक्कएण पउंजए । पउत्तेतत्थ वाघातो विणासगरिहा धुवा ॥ ४७८ ॥**

अपद्वारिकां गृहं वा यत् शय्यातरो वक्रयेण प्रयोजयति तत्र स्थाने तदेव पूर्वोक्तं प्रायश्चित्तं यतो वक्रयेण प्रयुक्ते तत्र गृहादौ बलादकाण्डनिष्काशने सूत्रार्थव्याघातो रात्रौ निष्काशने श्वश्वापदस्तेनैर्विनाशोऽन्यवसत्यलाभे भिक्षागतादिनिष्काशने वा ध्रुवा लोके गर्हा । एतच्च सर्वं प्रागेव भावितमिति न भूयो भाव्यते ।

**एगदेसंमि वा दिन्ने तन्निस्सहोज्ज तेणगा । रसालदव्वगिद्धा वा सेहमादीउजं करे ॥ ४७६ ॥**

शालाया अपद्वारिकाया गृहस्य वा एकदेशे दत्ते अन्तरा कटके प्रक्षिप्ते यदि तिष्ठन्ति तदा तन्निश्रयाः संयतानिश्रयाः स्तेनकाश्चौरा भवेयुः । संयतेषु कायिकभूमिं गतेषु स्तेनाः प्रविश्य गृहस्थानां भाण्डकमपहरेयुरथवा रसालं रसवत् यत्तत्र द्रव्यं तद्गृद्धाः शैक्षकादयो वा यत्कृत्यं तत्कुर्युः । ततो गृहस्थेन संयता वा शंक्यंते यथा नूनमेतैरस्मद्भाण्डमपहृतमथवा एतेषां

द्वारेण स्तेनैरपहृतं यदि वा एतैरेव संयतैः कस्यापि दुस्थितस्य सम्प्रदत्तमिति । एवं शङ्कायां स विनाशं वा कुर्यात् । यदि वा राजकुलेऽन्यत्र वा नीत्वा वा ग्रामबृहत्पुरुषपार्श्वे कर्षणं तत्र भूयसी जनगर्हेति—

**पेहाविया रजायादी जे य दोसा उदाहिया । अच्छंते ते भवे तत्थ वयए भिएणकप्पता ४८० ॥**

ये दोषाः पूर्वं कल्पाध्ययने मद्योदकधान्यशालादिषु सागारिके चोपाश्रये प्रेक्षायां विचारभूमौ स्वाध्यायादौ वाऽभिहितास्ते तत्र शालादीनामेकदेशे तिष्ठति भवेयुरथैतद्दोषभयादन्यत्र व्रजति तर्हि भिन्नकल्पता दोषो मासकल्पे वर्षाकालकल्पे वा अपरिपूर्ण एव सति निर्गमात् । सम्प्रति भिक्खंवगतेत्येवव्याख्यानार्थमाह—

**भिक्खं गतेसु वा तेसु वक्कती बेति णीहमे । णीणिएवा विपाले णं उवहिस्सासिवावणा ॥ ४८१ ॥**

भिक्षां गतेषु वा तेषु साधुषु वक्रयीभाटकेन गृहीतशालादिको ब्रूते । यथा निर्गच्छत यूयं मम गृहात्तदा भिक्षाटन व्याघातस्तत्कालमन्यवसत्यलाभेजनगर्हा सूत्रार्थव्याघातश्च । अथवा तेषु भिक्षांगतेषु पश्चादागत्य वसतिपालं निष्काशयन्ति तस्मिन् निष्काशने णमिति वाक्यालङ्कारे उपधिः स्यादाशिवापन स्तेनैरपहरणं विसरणतो वा नशनमिति ।

**अहवा भरियभाणाउ आगत जइ निच्छुभे । भत्तपाणविणासोउ भुञ्जएसागते इमे ॥ ४८२ ॥**

अथ भक्तभृतभाजनानागतान् यदि निष्काशयति तदा गृहीतभक्तपानं विनाशो गतं भिक्षाद्वारमधुना भोजनद्वारमाह—

अथ भुञ्जानेषु स वक्रयी समागतस्तदा इमे वक्ष्यमाणा दोषाः तानेवाह:—

**पगासिए य अन्नेसिं हीला होइ पवयणे ॥ ४८३ ॥**

**जिया अट्ठि सरक्खावि लोगो सव्वोविवोट्टितो ।**

साधून् साधुक्रियया भुञ्जानान् दृष्ट्वा स विपरिणतभावो ब्रूते जिता एतैरस्थिसरजस्का अपि कापालिकास्तेभ्योऽप्यमी हीनाचारा इति भावस्तथा लोकः सर्वोऽप्येतैः पाणकैरिवैकत्र भुञ्जानैर्वोटितो विट्टालितो न केवलं स एवं तत्र ब्रूते–किन्त्वन्ये-पामपि जनानां स प्रकाशयति, प्रकाशिते वान्येषां प्रवचनस्य हीला भवति तदेवं भुंजणत्ति व्याख्यातमधुना ग्लानद्वारमाह––

**अमंगलं भउक्खित्ते ठाणमन्नोवि नो दए ॥ ४८४ ॥**

**सीयवायाभितावेहिं गिलाणो जंतु पावई ।**

शीतेन वातेन अभितापेन च यत् ग्लानो आगाढादि परितापनं प्राप्नोति तन्निष्पन्नं स्पर्धकपतेराचार्यस्य वा प्रायश्चित्तं तथा तैर्निष्काशितैर्ग्लान उत्क्षिप्तस्तस्मिन् उत्क्षिप्ते वसतिमन्यां मार्गयतां मृतोऽयमित्यमङ्गलमितिकृत्वा मारिस्पृष्टोऽयमिति भयेन वाऽन्योऽपि कश्चित्स्थानं न ददाति ।

**वोसरियंमि उड्डाहो धरणे वायविराहणा ॥ ४८५ ॥**

**गहिते उत्थाणरोगेण अच्छंते नीणियंमि वा ।**

तथा ग्लाने उत्थाणरोगेणातीसाररोगेण गृहीते तिष्ठति निष्काशिते वाऽतीसारे दोषस्तथा चाह–व्युत्सृष्टे उड्डाहो धरणे चात्मविराधनामरणगाढतरग्लानस्य वा भावात् । उपसंहारमाह––

**तम्हा न ठायव्वं वक्कयसालाए समणेहिं ॥ ४८६ ॥**

**एए दोसा जम्हा तहियं होंति उठायमाणाणं ।**

यस्मात्तत्र वक्रयशालादौ तिष्ठतामेते अनन्तरोदिता दोषा भवन्ति तस्मात्तस्यां वक्रयशालायामुपलक्षणमेतत् वक्रयाप-

द्वारिकायां वक्रयगृहे वा श्रमणैर्नस्थातव्यं । अत्र परस्यावकाशमाह—

**एवं सुत्तं अफलं सुत्तनिवातो उ असती वसहीए । बहियावि असिवादी उ कारणे तो न वच्चंती ॥४८७॥**

यदि नाम वक्रयशालादौ न स्थातव्यं तर्हि सूत्रमधिकृतमफलं सूत्रे वक्रयेऽपि श्रमणानामवस्थानानुज्ञानात् सूरिराह—नेदं सूत्रमफलं । यतोऽन्यसूत्रस्य निपातोऽवकाशो वसतेरन्यस्या अभावे बहिरपि निर्गच्छतामशिवादिकं कारणं ततो न व्रजन्ति किन्तु तत्रैव वक्रयशालादौ तिष्ठन्ति । तत्र यतनामाह—

**एएहिं कारणेहिं ठायंताणं इमो विही तत्थ । च्छिंदंति तत्थकालं ऊउबद्धे वासवासे वा ॥ ४८८ ॥**

एतैरनन्तरोदितैरन्यत्र वसत्यलाभे बहिरशिवादिलक्षणैस्तत्रा वक्रयशालादौ तिष्ठतामयं वक्ष्यमाणो विधिस्तमेवाह—तत्र कालं च्छिन्दन्ति ऋतुबद्धे वर्षावासे वा इयमत्र भावनाऋतुबद्धे शय्यातरं प्रति भण्यते—यदि सम्पूर्ण मासं ददासि । वर्षाकाले भण्यते—यदि चतुरो मासान् ददासि तर्हि तिष्ठामोऽथ न ददासि तर्हि न तिष्ठामः । एतदेवाह—

**मासचउमासियं वा न विनिच्छोढव्वा उ अम्हे नियमेणं । एवं च्छिन्नठियाणं वक्कइतो आगतो हुज्जा ॥४८९॥**

ऋतुबद्धे काले मासं वर्षाकाले चातुर्मासं नियमेन वयं न निष्काशयितव्याः । एवं च्छिन्नकाले शय्यातरेण तथैव प्रतिपन्ने तिष्ठन्ति तेषां च तथा तिष्ठतां वक्रयिको वक्रयेण ग्राही आगतो भवति ।

**दिन्नावचुण्णएणं अहवा लोभा सयंपि देज्जाहि । अणुलोमिज्जइ ताहे अदेंते अणुलोमे वक्कइयं ॥ ४९० ॥**

स शय्यातरो वसतिं दत्वा प्रवासितः पश्चात्पुत्रस्य समीपे वक्रयी समागतः स ब्रूते—यत्र संयतास्तिष्ठन्ति तन्मे भाटकेन प्रयच्छ सा वसतिर्दत्ताभूत्। केन पुत्रेण अथवा स शय्यातरः प्रभूतभाटकलोभेन स्वयमपि वक्रयिणो दद्यात् दत्वा च निष्काशयेत्। तत्र यद्यन्या वसतिर्लभ्यते तर्हि न तत्र स्थातव्यं अन्यवसत्यलाभे स धर्मकथया अनुलोम्यतेऽनुकूलः क्रियते। अथ स धर्मकथयानुलोमो न भवति तर्हि यस्तस्यार्हतो गरीयान् पितामहमातामहप्रभृतिकस्तेनानुलोमी क्रियते। अथैवमपि स न ददाति स्थातुं तर्हि तस्मिन्नददति वक्रयिकमुक्तप्रकारेणानुलोमयेत्।

**तंमिवि अदेंते ताहे च्छिन्नमच्छिन्नेव नेंति उउबद्धे। वासासुं ववहारो उउबद्धे कारणज्जाते॥४९१॥**

तस्मिन्नप्यवक्रयिणि पूर्वप्रकारेणानुलोम्यमानेऽप्यददति ऋतुबद्धे काले च्छिन्ने अच्छिन्ने वा परिपूर्णेऽपूर्णे वा अवधौ निर्गच्छन्ति वर्षाकाले यद्यन्यः कोऽपि साधूनामनुकल्पको न विद्यते। यो वसतिं प्रयच्छति तर्हि गत्वाराजकुले व्यवहारः कर्तव्यः। न केवलं वर्षासु किन्तु ऋतुबद्धेऽपि काले कारणजाते सति कर्तव्यः, कारणजातमेव पृच्छति।

**किं पुण कारणजातं असिवोमादी उवाहि होज्जाहि। एएहिं कारणेहिं अणुलोमणुसट्ठि पुव्वं तु॥४९२॥**

किं पुनः कारणजातं यद्वशात् ऋतुबद्धेऽपि काले व्यवहार आश्रीयते। अशिवावमौदर्यादिकमादिशब्दात् म्लेच्छपरचक्रादि भयपरिग्रहो बहिः कारणजातं भवेत्? तत एतैः कारणैर्ऋतुबद्धेऽपि काले पूर्वमनुशिष्ट्यानुलोमनं क्रियते। कथं क्रियते इत्याह

**सगिं जंपंति रायाणो सगिं जंपंति धम्मिया। सगिं जंपंति देवावि तंपि ताव सगिं वदा॥४९३॥**

द्वारिकायां वक्रयगृहे वा श्रमणैर्नस्थातव्यं । अत्र परस्यावकाशमाह—

**एवं सुत्तं अफलं सुत्तनिवातो उ असती वसहीए । बहियावि असिवादी उ कारणे तो न वच्चंती ॥४८७॥**

यदि नाम वक्रयशालादौ न स्थातव्यं तर्हि सूत्रमधिकृतमफलं सूत्रे वक्रयेऽपि श्रमणानामवस्थानानुज्ञानात् सूरिराह-नेदं सूत्रमफलं । यतोऽन्यसूत्रस्य निपातोऽवकाशो वसतेरन्यस्या अभावे बहिरपि निर्गच्छतामशिवादिकं कारणं ततो न व्रजन्ति किन्तु तत्रैव वक्रयशालादौ तिष्ठन्ति । तत्र यतनामाह—

**एएहिं कारणेहिं ठायंताणं इमो विही तत्थ । च्छिदंति तत्थकालं ऊउबद्धे वासवासे वा ॥ ४८८ ॥**

एतैरनन्तरोदितैरन्यत्र वसत्यलाभे बहिरशिवादिलक्षणैस्तत्रा वक्रयशालादौ तिष्ठतामयं वक्ष्यमाणो विधिस्तमेवाह-तत्र कालं च्छिन्दन्ति ऋतुबद्धे वर्षावासे वा इयमत्र भावनाऋतुबद्धे शय्यातरं प्रति भण्यते-यदि सम्पूर्ण मासं ददासि । वर्षाकाले भण्यते-यदि चतुरो मासान् ददासि तर्हि तिष्ठामोऽथ न ददासि तर्हि न तिष्ठामः । एतदेवाह—

**मासचउमासियं वा न विनिच्छोढव्वा उ अम्हे नियमेणं । एवं च्छिन्नठियाणं वक्कइतो आगतो हुज्जा ॥४८९॥**

ऋतुबद्धे काले मासं वर्षाकाले चातुर्मासं नियमेन वयं न निष्काशयितव्याः । एवं च्छिन्नकाले शय्यातरेण तथैव प्रतिपन्ने तिष्ठन्ति तेषां च तथा तिष्ठतां वक्रयिको वक्रयेण ग्राही आगतो भवति ।

**दिन्नावचुण्णएणं अहवा लोभा सयंपि देज्जाहि । अणुलोमिज्जइ ताहे अदेंते अणुलोमे वक्कइयं ॥ ४९० ॥**

स शय्यातरो वसतिं दत्वा प्रवासितः पश्चात्पुत्रस्य समीपे वक्रयी समागतः स ब्रूते—यत्र संयतास्तिष्ठन्ति तन्मे भाटकेन प्रयच्छ सा वसतिर्दत्ताभूत् । केन पुत्रेण अथवा स शय्यातरः प्रभूतभाटकलोभेन स्वयमपि वक्रयिणो दद्यात् दत्वा च निष्काशयेत् । तत्र यद्यन्या वसतिर्लभ्यते तर्हि न तत्र स्थातव्यं अन्यवसत्यलाभे स धर्मकथया अनुलोम्यतेऽनुकूलः क्रियते । अथ स धर्मकथयानुलोमो न भवति तर्हि यस्तस्यार्हतो गरीयान् पितामहमातामहप्रभृतिकस्तेनानुलोमी क्रियते । अथैवमपि स न ददाति स्थातुं तर्हि तस्मिन्नददति वक्रयिकमुक्तप्रकारेणानुलोमयेत् ।

**तंमिवि अदेंते ताहे च्छिन्नमच्छिन्नेव नेंति उउबद्धे । वासासुं ववहारो उउबद्धे कारणज्जाते ।।४९१ ।।**

तस्मिन्नप्यवक्रयिणि पूर्वप्रकारेणानुलोम्यमानेऽप्यददति ऋतुबद्धे काले च्छिन्ने अच्छिन्ने वा परिपूर्णेऽपूर्णे वा अवधौ निर्गच्छन्ति वर्षाकाले यद्यन्यः कोऽपि साधूनामनुकल्पको न विद्यते । यो वसतिं प्रयच्छति तर्हि गत्वाराजकुले व्यवहारः कर्तव्यः । न केवलं वर्षासु किन्तु ऋतुबद्धेऽपि काले कारणजाते सति कर्तव्यः, कारणजातमेव पृच्छति ।

**किं पुण कारणजातं असिवोमादी उबाहि होज्जाहि । एएहिं कारणेहिं अणुलोमणुसट्ठि पुव्वं तु ।।४९२।।**

किं पुनः कारणजातं यद्वशात् ऋतुबद्धेऽपि काले व्यवहार आश्रीयते । अशिवावमौदर्यादिकमादिशब्दात् म्लेच्छपरचक्रादि भयपरिग्रहो बहिः कारणजातं भवेत् ? तत एतैः कारणैर्ऋतुबद्धेऽपि काले पूर्वमनुशिष्यानुलोमनं क्रियते। कथं क्रियते इत्याह

**सगिं जंपंति रायाणो सगिं जंपंति धम्मिया । सगिं जंपंति देवावि तंपि ताव सगिं वदा ।। ४९३ ।।**

वर्तते, अथवा ऋतुबद्धे काले बहिरशिवादि आगाढं कारणं तदा अन्यस्यां वसतौ गन्तव्यं न पुनः शय्यातरं प्रति किमपि वक्तव्यम् । अथान्या शुद्धा वसतिर्न प्राप्यते तदा विशोधिकोटिदूषितायां स्थातव्यं तस्या अप्यलाभे अविशोधिकोटि दूषिताया मपि स्थातव्यमिति । सम्प्रति सागारिक वक्रयकयोः शय्यातरत्वचिन्तां कुर्वन्नाह—

**सोचेवयतरो तेसिं ठाणं तु मोत्तु जइ दिन्ने । अह पुण सव्वं दिन्नं तो वक्कई उ तरो ॥ ५०० ॥**

शालगृहस्य वा अपद्वारिकाया वा अर्धत्रिभागो वावक्रयेण दत्तः शेषं संयतानां दत्तं यथा अत्र यूयं तिष्ठथ तत्र च साधवः सर्वेऽपिमान्ति, सएव स्वामी शय्यातरो भवति । अथ पुनस्तेन पूर्वस्वामिना सर्वमपि शालादि भाटकेन प्रदत्तं तदा निर्गच्छतः साधून् दृष्ट्वा यदि वक्रयी ब्रूते मा निर्गच्छत यूयमहं युष्माकमवकाशं दास्यामि । तर्हि सोऽवकाशं ददानो वक्रयीतरः शय्यातरः

**अह पुण एगपदेसे भणेज्ज अत्थह तहिं न मायंति । वक्कतिओ बेति इत्थं । अत्थहनो खित्ते भंडेणं ५०१**

अथ स पूर्वस्वामी भणेत् यथा यूयमस्मिन्नकेप्रदेशे तिष्ठथ तत्र च साधवो न मान्ति । ततोऽमातः साधून् दृष्ट्वा वक्रयिकोनुकम्पया ब्रूते । अत्र तिष्ठत यूयं न किं नोऽस्माकं भाण्डेन चिप्तेन प्रयोजनम् ।

**तहियं दोवितराऊ अहवा गेह्लेज्जणागइं कोइं । दुल्लह अच्चग्घतरं नाउतहिं संकमइ तस्स ॥ ५०२ ॥**

तत्रानन्तरोक्ते प्रकारे द्वावपि शय्यातरौ अथवा कोऽपि चिन्तयति यदा भाण्डं नेष्यति तदा बहवः क्रयिका भविष्यन्ति ततोऽत्यर्घतरा शाला भविष्यति यदि बहुकेनापि मूल्येन दुःखेन लप्स्यते तत् दुर्लभामत्यर्घतरां वा शालां ज्ञात्वा अनागतं

साधूनामनागमनकाले एव भाटकप्रदानेन गृह्णाति। एतच्च साधुभिरागतैर्ज्ञातं यथा शालाभाटकेनामुकस्यायत्ता जाता ततस्तं गत्वा याचन्ते सोऽपि ब्रूयात्।

**जाव नागच्छते भण्डं ताव अत्थह साहवो। एवं वइक्कतो साहू भणंतो होइ सारितो ॥ ५०३ ॥**

यावन्नागच्छति भाण्डं तावत्साधवो यूयं तिष्ठथ, । एवं वक्रयिकः शय्यातरो भवति।

**देसं दाऊण गतो गलभाणं जइछएज्ज वइक्कतो। अणोवणुकंपाए ताहे सागारितो सोसि ॥ ५०४ ॥**

पूर्वस्वामी शालादेर्देशमेकं दत्वा काप्यन्यत्र गतो वर्षाकाले च स देशो गलति ततस्तं गलन्तं प्रदेशं वक्रयिकोऽन्योवानुकम्पयाच्छादयति तदा स तेषां साधूनां सागारिकः शय्यातरः। एतदेव सविस्तरं भावयति।

**मुत्तूणं साधूणं गहितो पुण वक्कतो पउत्थंमि। हेठा उवरम्मि ठिते सीसंमि पडालि ववहारो ॥५०५॥**

साधूनामवकाशं मुक्त्वा तेन पूर्वस्वामिना शय्यातरेण वक्रयो भाटकं गृहीतः। गृहीत्वा च प्रोषितस्तस्मिन् प्रोषितेऽधस्तात् वक्रयिकस्य भाण्डमुपरि माले साधवः। अथवा अधस्तात् शालायां स्थिताः साधव उपरि माले वक्रयिकस्य दत्तं एतन्मिश्रमुच्यते। एवं मिश्रे रूपे मिश्रे स्थितानां यदा शालायां साधव उपरि माले वक्रयिकस्य भाण्डं तदा पडाली गलति भाण्डस्योपरीति न काचित्साधूनां क्षतिः। अथ वक्रयिकस्य भाण्डमधस्तात् शालायामुपरि माले तिष्ठन्ति साधवः। पडाली च गलति तदा वक्रयिकश्चिन्तयति। उपरि माले पडाली गलति तत्र साधूनां कष्टं मम तु भाण्डमधस्तात् शालायां ततो न

विनश्यतीति एवं चिन्तयित्वा पडाली न च्छादयति । तत्र यद्यन्योऽपि कश्चित् न च्छादयति तदा व्यवहारः कर्तव्यः व्यवहारेण छादयितव्य इति । एतदेवाह—

**हेट्ठाकयं वक्कइएण भंडं तस्सोवरिं वावि वसंति साहू। भंडं न मेउल्लइ मालवद्धे नोतं छयंतंमि भवेविवाओ॥**

अधस्तात् शालायां कृतं वक्रयिकेण भाण्डं तस्य भाण्डस्योपरि माले वसन्ति साधवस्ततो नाम भाण्डमस्मिन् माले बद्धे नार्द्रयते न तिम्पते । इति विचिन्त्य न तां पडालीं च्छादयति । भवेद्विवादो व्यवहारो जायते कथमित्याह— ॥ ५०६ ॥

**वक्कइय छएयव्वे ववहारकयंमि वक्कयं बेंति। अकयंमि य साहीणं वेतितरं दाइयं वावि॥ ५०७ ॥**

यदि पूर्वमवक्रयकाले एवं वागन्तिको व्यवहारः कृतो यः वक्रयिकेण छादयितव्यमिति तदा वक्रयिकं साधवोऽनुकूलेन प्रतिकूलेन वा वचसा ब्रूवते । यथा त्वया छादयितव्या पडालीति अथ न कृतस्तथारूपो वागन्तिक व्यवहारस्तत्राह—अकृते यथोक्तरूपे वागन्तिके व्यवहारे स्वाधीनं शय्यातरं ब्रुवते यथा च्छादयत पडालीमिति अथ स शय्यातरः क्कापि प्रोषितो भवेत् तदा तस्य शय्यातरस्य दायादं वा गोत्रिणं ब्रुवते—

**अच्छयंते च दाऊणं सयं संज्जायरे घरं । अणुसट्ठाईहणिच्छं तं ववहारेण छावए ॥ ५०८ ॥**

अथ शय्यातरः प्रमाद्यति न च्छादयति, तदान्यः कश्चिदभ्यर्थ्यते ततो येन सा पडाली च्छादिता सोऽपि शय्यातरो भवति । अथान्यः कश्चनापि च्छादयिता न विद्यते तदा शय्यातरे स्वयं गृहं दत्वा प्रमादेनानाच्छादयति अनुशिष्टिरनुशासनं

क्रियते । आदिशब्दात् धर्मकथा च तथापि च्छादयितुमनिच्छंतं व्यवहारेण येन गृहं दत्तं तेन च्छादनमपि कर्तव्यं । न च पूर्वमाच्छादनं विचारितं, न चास्माकमकिञ्चनानां किञ्चिदस्ति येन च्छादयाम इत्येवं राजकुलेऽपि गत्वा व्यवहारकरणेन च्छादयेत् । तदेवमवक्रयसूत्रं भावितमिदानीं क्रयिकसूत्रमति देशतो व्याख्यानयति—

**एसोवकमो नियमा कइयंमि वि होइ आणुपुव्वीए । नवरं पुण नाणत्तं उच्चत्ता गेण्हती सोऊ ।५०९।**

य एव क्रमोऽवक्रयिकेऽभिहितः स एव क्रमो नियमात् क्रयिके शय्यातरत्वचिन्ता कृता तथा तयैव रीत्या क्रयिकेऽपि कर्त्तव्येति नवरं पुनर्वक्रयकात् क्रयिकस्य नानात्वं इदं वक्रयिकः कियत्कालं मून्यप्रदानतो गृहीतः स तु क्रयिकः पुनरुच्चत्वेन गृह्णाति यावज्जीवं मून्यप्रदानत आत्मसत्ताकी करोति ।

**सूत्रम्—विहवधूया नायकूलधूयवासिणी सावियावि ओग्गहं अणुन्नवेयव्वा किमंगपुणपिया वा भाया वा पुत्तेवासेवि याविओगाहे ओगेण्हियव्वे ।** अस्य सूत्रस्य सम्बन्धमाह—

**सागारिय अहिगारे अणुवत्तं तंमि कोति सो होत्ति । संदिठो व पभूवा विहवा सुत्तस्स संबंधो ॥ ५१० ॥**

इह पूर्वसूत्रात्सागारिकाधिकारः शय्यातराधिकारोऽनुवर्तते। तस्मिन् अनुवर्तमाने अनेन सूत्रेण कोऽपि सागारिकः। कोऽपि प्रभुरिति प्रतिपाद्यमित्येष विधवासूत्रस्य सम्बन्धः । अस्य व्याख्या—न विद्यते धवो भर्ता यस्याः सा विधवा धूता दुहिता ज्ञातिकुलवासिनी पितृगृहवासिनी पितामहगृहवासिनी वा इत्यादि। अथवा समासकरणादिदं द्रष्टव्यं—या दुहिता विधवा या च ज्ञाति-

कुलवासिनी दुहिता नाम या गृहजामातुर्दत्ता साप्यवग्रहमनुज्ञापयितव्या किमङ्ग पुनः पिता वा भ्राता वा पुत्रो वा ससुतरामनुज्ञापयितव्यः । तथा चाह—सेयावतीत्यादि तौ द्वावप्यवग्रहमवग्रहीतव्याविति सूत्राक्षरार्थं । सम्प्रति भाष्यकारो व्याख्यानमाह—

**विगय धवा खलु विधवा रुवं तु भत्तारमाहु नेरुत्ता । धारयति धीयते दधाति वा तेण उ धवोत्ति ५११**

विगतधवा खलु विधवा विगतो धवोऽस्या इति व्युत्पत्तेः । धवं तु भर्तारमाहुर्नैरुक्ता निरुक्तशास्त्रविदः कया व्युत्पत्त्या इत्याह—धारयति तां स्त्रियं धीयते वा तेन पुंसा वा स्त्री दधाति सर्वात्मना पुष्णाति वा तेन कारणेन निरुक्तिवशात् धव इत्युच्यते—

**विधवा वणुस विज्जइ किं पुण पियमाइ मायपुत्तादी । सो पुण पभुवऽपभुवा अपभू पुण तत्थिमे होइ ५१२**

विधवाऽप्यनुज्ञाप्यते किं पुनः पिता माता भ्राता पुत्रादिर्वा स सुतरामनुज्ञाप्यः केवलं स पुनः पुत्रभ्रातृप्रभृतिको द्विधा प्रभुर्वा भवेत् अप्रभुर्वा तत्र पुनरप्रभव इमे वक्ष्यमाणा भवन्ति । तानेव निर्युक्तिकृदाह—

**आदेसदासभइए विरिक्कजामाइए उदिण्णाय । अस्सामि मासो लहुतो सेस पभूणुग्गहेणं वा ॥५१३॥**

आदेशः प्राघूर्णको दासोऽङ्कितो भृतकः कर्मकरो विरिक्तो गृहीतरिक्तादिभागः पुत्रो भ्राता अन्यो वा तथा कन्या अन्यत्र पृथग् गृहे जामातरि एतेऽस्वामिनोऽप्रभव एतान् यदि अनुज्ञापयति तदा प्रायश्चित्तं मासलघु । शेषाः प्रभवः स्वामिनस्तान् अनुज्ञापयेत् आणुग्गहेणं चेति अप्रभूणामपि येषां प्रभुणानुग्रहः कृतो यथा त्वया कृतं दत्तं वा तत्प्रमाणमिति तेन वा अनुग्रहेणाप्रभूनपि अनुज्ञापयेत् नान्यथा अप्रभूणामनुज्ञापने दोषानाह ।

दियरातो निच्छुहणा अप्पभूदोसा अदिन्नदाणं च । तम्हाउ अणुन्नवए पभुं च पभुणाव संदिठं ॥५१४॥

अप्रभूणामनुज्ञापने दोषाःदिवा रात्रौ वा निष्काशनं तत्र च जनगर्हा विनाशादयो दोषा न केवलं निष्काशनमदत्तादानं च यस्मादप्रभूणामनुज्ञापने एते दोषास्तस्मात्प्रभुं प्रभुसन्दिष्टं वानुज्ञापयेत् । तमेव दर्शयति—

गहपति गहवतिणि वा अविभत्तसुतो अदिन्नकन्ना वा । पभवति निसिट्ठविहवा आदिट्ठे वा सस यं दाउं ॥

गृहपतिर्गृहपत्नी वा अविभक्तसुतो वा अदत्तकन्या वा वाशब्दादविभक्त द्रव्यभ्रातृभ्रातृव्यादि र्वा प्रभवति, । अथवा या दुहिता विधवा निसृष्टागृहे प्रमाणीकृता सापि प्रभवति, यदि वा यः स्वयं दातुं प्रभुणा आदिष्टः सोऽपि प्रभवति । एताननुज्ञापयेत् ॥ सूत्रं पहेवि उग्गहो अणुन्नवेयत्तो । अस्य सम्बन्धमाह—

उग्गह पहुंमि दिठे कहियं पुण सो अणुण्णवेयव्वो । अद्धाणादीएसुवि संभावणसुत्तसंबंधो ॥ ५१६ ॥

अवग्रहस्य प्रभोर्दृष्टे क्व पुनः सोऽवग्रहमनुज्ञापयितव्य, इति चिन्तायामधिकृतसूत्रेणोच्यते पथ्यप्यवग्रहमनुज्ञापयितव्यः । अपिशब्दः ग्रामे नगरे वा किंतु संभावनाया अध्वन्यपि । तथा चाह—अध्वादिकेष्वप्यनुज्ञापयितव्यः । एष संभावना सूत्रसम्बन्धः । सम्प्रति भाष्यविस्तरः

अद्धाण पुव्वभणियं सागारियमग्गणा इहं सुत्ते । एगेण परिग्गहिए सागारियसेसए भयणा ॥५१७॥

अध्वनि यद्वक्तव्यं सत्सर्वं पूर्वं कल्पाध्ययने भणितमितीह—पुनः सूत्रेऽध्वानं व्रजतां सागारिकमार्गणा शय्यातरमार्गणा

क्रियते । तथा एकेन परिगृहीते वृक्षादौ सति शेषे सागारिके भजना यदि संस्तरन्ति तर्हि यावद्भिस्तत् गृहीतं वृक्षादि तावतः शय्यातरान् करोति । असंस्तरणे एकमपि शय्यातरमिति भावार्थः । सम्प्रति पूर्वार्धव्याख्यानमाह—

**दिणे दिणे जस्स उवल्लियंती भंडी वहंते व पडालियं वा। सागारिए होति स एगएव रीढागएसुं तु जहिं वसंति**

दिने दिने यस्य भण्डीं गन्त्रीं वहन्तीमुपलीयन्ते आश्रयन्ति साधवो यदि वा पडालिकां पडालिका नाम यत्र मध्याह्ने सार्थिकास्तिष्ठन्ति यत्र वा वसन्ति तत्र वस्त्रादिमयं कुवलयनं कुर्वन्ति तां वा यस्य दिने दिने उपलीयन्ते तदा स एवैकः सागारिकः शय्यातरो भवति । रिङ्कागतेषु तु अवज्ञया यत्र तत्र गतेषु तु साधुषु यत्र रात्रौ वसन्ति तद्दिवसं शय्यातरः । इयमत्र भावना । यस्य न नियमेन भण्डीं वा पडालिकां वा प्रतिदिनमुपलीयन्ते किन्तु यदृच्छयाकस्मिन् दिने कस्यापि तदा यां यां रात्रिं यस्य भण्ड्यादिकमुपलीयते तस्मिन् तस्मिन् दिने स शय्यातरः ।

**वीसमंतात्ति छायाए जे तहिं पढमं ठिया । चिट्ठंति पुच्छियंतेवि पंथिए किमु जहिं वसे ॥ ५१९ ॥**

विश्राम्यन्तोऽपि च्छायायां ये तत्र पथिकाः प्रथमं स्थितास्तिष्ठन्ति तानपि पृष्ट्वा तत्र तिष्ठेत् नान्यथा । किं पुनर्यत्र वसेयुस्तत्र सुतरां ते अनुज्ञातव्यास्ततो भवन्ति ते शय्यातराः । सम्प्रति एगेण परिग्गहिए सागारियसेसए भयणा इति व्याख्यानयन्नाह

**वसतिवाजहिं रत्तिं एगाणेगपरिग्गहे तत्तिए उत्तरे कुज्जा वावंतेगमसंथरे ॥ ५२० ॥**

यत्र वृक्षस्याधस्तादन्यत्र वा एकस्य वा परिग्रहे अनेकस्य वा पथिकसंघातस्य परिग्रहे अनेकस्य वा पथि संघातस्य परि-

ग्रहे साधवो रात्रौ वसन्ति तर्हि सर्वानपि तान् शय्यातरान् कुर्युरथ न संस्तरन्ति तदा तन्मध्ये एकं शय्यातरं स्थापयति शेषान् निर्विशन्ते एषा शेष सागारिके भजना ।

सूत्रम्—सेरज्जपरियट्टेसु संथडेसुअव्वोगडेसु अवोच्छिन्नेसु अपरपरिग्गहिएसु सच्चेवओग्गहस्स पुव्वाणुन्नवणा चिट्ठइ अहालदमवि ओग्गहे ॥ २२॥ सेरज्जपरियट्टेसु असंथडेसु वोगडेसु वोच्छिन्नेसु परपरिग्गहिएसु भिक्खुभावस्स अट्ठाए दोच्चंपि ओग्गहे अणुन्नवेयव्वेसिया ॥ २३ ॥

से रज्जपरियट्टेसु इत्यादि सूत्रद्वयस्य सम्बन्धप्रतिपादनार्थमाह—

सागारियसाहम्मिय उग्गहगहणेण उत्तमाणंमि । सत्तम अंतिमसुत्तं ठवंति राउग्गहे थेरा ॥ ५२१ ॥

पूर्वसूत्रेभ्यः सागारिकावग्रहणमनुवर्तते ततोऽपि परतरेभ्यः साधर्मिकावग्रहग्रहणं तस्मिन् अनुवर्तमाने अवग्रहग्रहणप्रस्तावात् सप्तमोद्देशकस्यान्तिमं सूत्रद्वयं–राजावग्रहेस्थविराः सूत्रकर्तारः स्थापयन्ति । एषोऽधिकृतसूत्रद्वयसम्बन्धोऽनेन सम्बन्धेनायातस्यास्य व्याख्या–से तस्य भिक्षो राजपरावर्तेषु राजपरावर्तो नामाग्रेतनो राजा कालगतो नवोऽभिषिक्तस्तेषु पुनः कथंभूतेषु इत्याह–संस्तृतेषु न कोऽपितत्राज्यं विलुम्पतीति भावः । तथा अव्याकृतेषु येषां दायादानां सामान्यं तद्राज्यं तैरविभक्तेषु अव्यवच्छिन्नेषु तस्मिन् वंशे अनुवर्तमानेषु अत एवापरगृहीतेषु सैवावग्रहस्य पूर्वानुज्ञापना तिष्ठति । या तस्य वंशस्यादावनुज्ञापना कृता कियन्तं कालं पुनः सैव पूर्वानुज्ञा तिष्ठति तत आह–यथा लन्दमप्यवग्रहः किमुक्तं भवति यावन्तं

कालं स वंशोऽनुवर्तते तावन्तमपि कालमवग्रहे राजावग्रहे सैव पूर्वानुज्ञापना वर्तते। न पुनरस्मिन् राज्ञि उपविष्टे स भूयोऽवग्रह मनुज्ञापयितव्यः। एष प्रथमसूत्रस्यार्थः,। सम्प्रति द्वितीयस्योच्यते–से तस्य भिक्खो राज्यपरावर्तेषु अन्येषु राज्यं प्रतिपन्नेषु असंस्थितेषु तुटितपूर्वराज्य संस्थितिषु व्याकृतेषु अन्यवंशीयैर्दायादैर्वा स विभज्य समीकृतेषु व्यवच्छिन्नेषुव्यवच्छिन्नपूर्ववंशेषु अत एव परपरिगृहितेषु भिक्षुभावस्यार्थाय भिक्षुभावो नाम ज्ञानदर्शनचारित्राणि तेषामेव भिक्षुशब्दप्रवृत्तिनिमित्तत्वादेतच्च प्रथमोद्देशके सप्रपञ्चं भावितम्। तस्यार्थाय स भिक्षुभावः परिपूर्णो भूयादित्येवमर्थमित्यर्थः। अन्यथा सचित्तादीनामननुज्ञापने अदत्तादानं स्यात् द्वितीयमपि वारमवग्रहोऽनुज्ञापयितव्यः। एष द्वितीयस्यापि सूत्रस्यार्थः साम्प्रतमेनामेव व्याख्यां भाष्यकृदप्याह—

**संथड मो अविलुत्तं पडिवक्खो वा न विज्जती जस्स। अणाहिठियन्नेण व अव्वोगडदाइ सामन्नं॥५२२॥**

संस्तृतं नाम राज्यं यदविलुप्तं मो इति पादपूरणे। यस्य वा प्रतिपक्षो न विद्यते नाप्यन्येन केनाप्यधिष्ठितं अव्याकृतं नाम दायिनां सामान्यं न पुनस्तैर्विभक्तं।

**अव्वोगडं अविगडं संदिठं वावि जं हवेज्जाहि। अव्वोच्छिन्न परंपरमागय तस्सेव वंसस्स॥५२३॥**

अव्याकृतं नाम यदविकृतं केनापि विकारमनापादितं यदि वा यद्भवेत् पूर्वराजेन सन्दिष्टं यथा एतस्मै राज्यं देयमिति तदव्याकृतम्। अव्यवच्छिन्नं नाम यत्तस्यैव वंशस्य परम्परया समागतमिति।

पुव्वाणुन्ना जा पुव्वएहिं राईहिं इह अणुन्नाया। लंदं तु होइ कालो चिठइ जा वुग्गहो तेसिं ॥५२४॥

पूर्वानुज्ञाता मया पूर्वकं राजभिरनुज्ञाता जहालन्दमवीत्यत्र लन्दो नाम भवतिकालस्ततोऽयमर्थो यावन्तं कालं तेषामवग्रहस्तावन्तमपि कालं सैवावग्रहे पूर्वानुज्ञा तदेवं प्रथमसूत्रव्याख्या कृता । सम्प्रति द्वितीयसूत्रव्याख्यानार्थमाह—

जं पुण असंथडं वा सगडंव तहवोगडं व वोच्छिन्नं। नंदमुरियाणव जहा वोच्छिन्नो जत्थ वंसोउ ॥५२५॥

यत्पुनरसंस्तृतं शकटमिव विशरारूतया संतरीतुमशक्नुवन् यथा व्याकृतं दायादैरन्यवंशजैर्वा विभज्यभङ्गीकृतं व्यवच्छिन्नं यत्र नन्दमौर्याणामिव वंशो व्यवच्छिन्नः

तत्थ उ अणुन्नविज्जइ भिक्खूभावठमोग्गहो निययं। दिक्खादि भिक्खुभावो अहवा तइयव्वयादीउ ॥५२६॥

तत्र नियतमवश्यंभावेन भिक्षुभावार्थं यथावस्थितभिक्षुभावसम्पादनायानुज्ञाप्यते । अथ कोऽसौ भिक्षुभाव इत्याह—दीक्षादिरादि शब्दात्सम्यक् ज्ञानादि परिग्रहो भिक्षुभावोऽथवा तृतीयव्रतादिकं भिक्षुभावः । तत्रैव भिक्षाशब्दस्य परमार्थत्वात्रूढत्वात्तदेवं कृता सूत्र व्याख्या । सम्प्रति निर्युक्तिविस्तरः ।

रगणाकालगयंमी अथिरगुरुगा अणुण्णवि तंमि। आणादिणोयदोसा विराहणा इमेसु ठाणेसु ॥५२७॥

राज्ञि कालगते ये द्वौ वा त्रयो वा दायिनस्तेषां मध्येयः स्थिरः सोऽनुज्ञापयितव्यः । यदि पुनरस्थिर मनुज्ञापयन्ति

तदा तेषां प्रायश्चित्तं चत्वारो गुरुकाः आज्ञादयश्च दोषास्तथा विराधना आत्मविराधना संयमविराधना वा एषु वक्ष्यमाणेषु स्थानेषु तान्येवाह—

**धुवमणो तस्स मज्झेव एक्केव मुक्कसंनाहो। ददेणोगयरपदोसो अणणुगणवणे थिरे गुरुगा ॥५२८॥**

धुवमन्यास्मिन् अन्यवंशजे अस्थिरे तस्य वा पूर्वराजस्य सम्बन्धिनां दायिनामेकास्मिन् अस्थिरे संयतैरनुज्ञापिते स चिन्तयति । एते भट्टारका जानन्ति यो राजा भविष्यति ततोऽहमनुज्ञापितो यदि पुनरितरस्यापि राज्यमभविष्यत् । ततो नाहमनुज्ञापयिष्ये इति स तथा विचिन्त्य नास्ति तथा भावस्यान्यथा भाव इति स एको मुक्त सन्नाहो वर्त्तते । तं च विश्वस्तं ज्ञात्वाऽन्यादासोऽन्येन दायादादिना मारितो राज्यमाविष्ठितं ततः स राजा चिन्तयति । संयतैर्ममामित्रः परिगृहीतो येन कारणेनसोऽवग्रहमनुज्ञापितस्ततः स प्रद्विष्टो द्वयोरेकतरस्य प्रद्वेषं कुर्यात् । किमुक्तं भवति ? निर्विषयत्वादि कुर्यात् जीवचारित्रयोर्वा भेदं कुर्यात् तस्मात् यः स्थिरः सोऽनुज्ञापयितव्योऽननुज्ञापने प्रायश्चित्तं चत्वारो गुरुकाः ।

**अणणुसुविह दोसा पच्छावा अप्पितो अवणणा वा। पत्ते पुव्वममंगलनिच्छुभण पदोसपत्थारो ॥५२९॥**

यदि स्थिरो नानुज्ञाप्यते तदा एतस्मिन्ननुज्ञापिते दोषाः सर्वे सामान्ये पाषण्डाः समीपमागता निर्ग्रन्थाः पुनरवज्ञां कृत्वा स्थितास्तः प्रद्वेषतो निष्काशनादि कुर्यात् । तस्माद्व्यवच्छिन्ने वंशे सोऽवश्यमवग्रहमनुज्ञापयितव्यः । किं पूर्वं पश्चान्मध्ये वा तत्र यदि सर्वैरन्यैः पाषण्डैरनुज्ञापिते स पश्चादनुज्ञाप्यते ततः स चिन्तयति–अहमेतेषामप्रियोऽवज्ञा या ममैतैः क्रियते तेन

पश्चादागताः। अथ प्राप्ते राज्ये पूर्वमनुज्ञाप्यते। तदा कदाचिदमङ्गलंमन्येत ततो निच्छुभणं निष्काशनं कुर्यात्प्रद्वेषतः प्रस्तारो जीविताद्व्यपरोपणं क्रियते। तस्मान्मध्येऽनुज्ञापयितव्यो यदि पुनर्भद्रक इति ज्ञातो भवति पूर्वं चानुज्ञाप्यमानो मङ्गलमिति मन्यते तदा पूर्वमप्यनुज्ञापनीयः। अथ कथं स स्थिरो ज्ञातव्यः कथं वा भद्रकः कथं वा पूर्वमनुज्ञाप्यमानो मङ्गलं मन्यते इति तत आह—

**उहादी आभोगण निमित्तविसएण वावि नाऊणं। भद्दगपुव्वा मणुण्णा वयंतमणाएय मज्झंमि ॥५३०॥**

अवध्यादिनाऽतिशयेनादिशब्दान्मनः पर्यवज्ञान श्रुतातिशयविशेषपरिग्रहोऽथवा निमित्तविशेषेणाथात्मनोऽवध्याद्यतिशयो निमित्तविशेषो वा न विद्यते तदा अन्यानवध्याद्यतिशयिनो निमित्तविशेषं ज्ञात्वा पृष्ट्वा भद्रकंपूर्वमनुज्ञापयेत् प्रान्तमज्ञातं वा मध्ये—

**एएणं विहिणाउ सोणुण्णवितो जयावएज्जाहि। राया किं देमित्ति यं जं दिण्णं अण्णराईहिं ॥ ५३१ ॥**

एतेनानन्तरोदितेन विधिना सोऽनुज्ञापितो राजा यदा वदेत् किं ददामीति तदा वक्तव्यं यद्दत्तमन्यै राजभिस्तद्देहीति।

**जाणंतो अणुजाणइ अजाणतो भणति तेहिं किं दिन्नं। पायोग्गंतिय भणिए किं पाउग्गं इमं सुणसु ॥५३२॥**

एवमुक्ते जानानः सर्वमनुजानाति, अज्ञायको ब्रूते तैरन्यैराजादिभिः किं दत्तं तत्र प्रायोग्यमिति भणितव्यं तस्मिन् भणिते पुनर्ब्रूते—किं प्रायोग्यमिति। ततो वक्तव्यं शृणुत इदं प्रायोग्यं तदेवाह।

**आहार उवहि सेज्जा ठाणनिसीयण तुयट्टगमणादी। थीपुरिसाण य दिक्खा दिण्णा णोपुव्वराईहिं ॥५३३॥**

यो अस्माकं पूर्वराज्ञैराहारउपधिः शय्यास्थानमूर्ध्वस्थानं निषदनं त्वगवर्तो गमनमादिशब्दादागमनपरिग्रहस्तथा स्त्रीपुरुषाणां दीक्षाऽनुज्ञाद्वारेण दत्ता ।

**भद्दो सव्वं वियरइपंतो पुण दिक्खवज्जमियराणि । अणु सठाइम काउ निंतेगुरुगाय आणादी ॥ ५३४ ॥**

एवं कथिते सति यो भद्रकः स सर्वं वितरति प्रान्तः पुनर्दीक्षावर्जमितराणि सर्वाण्यप्याहारादीनि अनुजानाति प्रव्रज्यां पुनर्नानुजानाति । तत्र यदि तस्य राज्ञोऽनुशिष्टिमकृत्वा आदिशब्दात् विद्यादि वा प्रभुकरणं वा अकृत्वा यदि तद्विषयात् निर्गच्छन्ति तदा तेषां प्रायश्चित्तं चत्वारो गुरुकाः आज्ञादयश्च दोषाः ।

**चेइय सावगपव्वइउ कायअतरंत बालवुड्ढाय । चत्ता अजंगमावि य अभत्ति तित्थस्स परिहाणी ॥५३५॥**

अन्यच्च चैत्यानितेन परित्यक्तानि श्रावका ये च प्रव्रजितुकामास्तथा अतरन्तोग्लाना बाला वृद्धा अजङ्गमाश्च ते सर्वे परित्यक्ता अभक्तिस्तीर्थकराज्ञा खण्डनात् । तीर्थस्य च परिहानिरापादिता । तथा हि—ये तत्र विषये परिव्रजितुकामास्ते न प्रव्रजिष्यन्ति श्रावका अपि सम्यक्त्वमणुव्रतानि च गृह्णन्तो न ग्रहीष्यन्ति ततो भवति तीर्थस्य व्यवच्छेदः । यद्येवं तर्हि तत्रैव तिष्ठन्तु । तत्राप्याह—

**अत्थंताण वि गुरुगा अभत्तितित्थस्सहाणि जा वुत्ता । भणमाण भणाविंता अच्छंति अणिच्छि वच्चंति ५३६**

तत्र तिष्ठतामपि प्रायश्चित्तं चत्वारो गुरुका मासाः देशान्तरे भव्यपौण्डरीक प्रतिबोधनलाभतो भ्रष्टत्वात्तथा तीर्थकराणा-

मभक्ति स्तिष्ठद्भिः कृता तदाज्ञा खण्डनात् तीर्थस्य हानिरापादितया स्वयमेव तेन राज्ञोक्ता स्त्रीपुरुषा न दीक्षितव्या इति यद्येवं

तर्हि किं कर्तव्यमत आह—स्वयं भणन्तः प्रज्ञापयन्तेऽन्यैर्भणयंत स्तिष्ठन्ति तथापि चेव् स नेच्छेत् तर्हि ततो देशात् व्रजन्ति—

**तहियं अणुजाणंतो दोसुविरज्जेसु अप्पबहुं ॥५३७॥**

**अहपुण हवेज्ज दोन्नी रज्जाइं तस्स नरवरिंदस्स ।**

अथ पुनस्तस्य नरवरेन्द्रस्य स्वयमन्यैर्वा प्रज्ञाप्यमानस्य कदाचित् द्वे राज्ये भवतस्तत्र तयोर्द्वयो राज्ययोर्मध्ये एकत्र काप्यनुजानाति यथा मम द्वे राज्ये तत्र तयोर्द्वयोर्मध्ये यत्रैकत्र भवद्भ्यो रोचते तत्र प्रव्राजय द्वितीये नानुजानामि । एवमुक्तेऽल्प बहु परिभाव्य यत्र भूयात्तीर्थ प्रवृद्ध्यादिलाभस्तत्र स्थातव्यमेतदेव स्पष्टतरमाह—

**एक्कहिं वि दिन्नरज्जे एगत्थ होइ अविदिण्णं । एगत्थ इत्थियातो पुरिसज्जायायएगत्थ ॥ ५३८ ॥**

एकत्र एकस्मिन् राज्ये वितीर्णमनुज्ञातं भवति । एकस्मिन् राज्येऽवतीर्णे यत्रानुज्ञातं तत्र स्त्रियः पुरुषा वा अनुज्ञाता । अथवा एकत्र राज्ये स्त्रियो अनुजानीते एकत्र पुरुषजनान् ।

**थेरा तरुणा य तहा दुग्गया य अड्ढयाय कुलपत्ता । जाणवया नागरया अभंतरया कुमाराय ॥ ५३९ ॥**

अथवा एकत्र राज्ये स्थविराननुजानात्येकत्र तरुणान्, अथवा एकत्र दुर्गतकान् पात्र आढ्यान् यदि चैकत्र कुलपुत्रान् परत्राभीरान् एवमेकत्रजानपदानन्यत्र नागरकान् एकत्राभ्यन्तरकान् अभ्यन्तरका नाम ये राजानमति प्रत्यासन्नीभूयावलगन्ति कुमारा राज्ञो दायादाः । एवमनुज्ञाते किं कर्तव्यमित्याह—

**उहीमादीणाउं जे बहुतरयाउ पव्वयंति तहिं । ते वेत्ति समणुजाणसु असती पुरिसेव जे बहुगा ॥५४०॥**

अवध्यादिनादिशद्वात् श्रुतातिशयविशेषेण निमित्तविशेषेण वा ज्ञात्वा यत्र बहुतरकाः । अत्र अनुजानीहि, असति अवध्यादेर्निमित्तविशेषस्याभावे वा ये बहवः पुरुषास्तानेवानुज्ञापयति न शेषान् स्तोकानष्टप्रभृतीनिति ।

**एयाणि वियरति तहिं कम्मघणो पुणभणेज्ज तत्थइमं । दिट्ठाउ अमंगल्लामा वा दिक्खेज्ज अच्छत्ता ॥५४१॥**

एतानि अनन्तरोदितानि प्रान्तोऽपि मनाक् भद्रकः सन् तत्रात्मीये राज्ये वितरति । य पुनः कर्मघनो निबिडपापकर्मा स तत्रानुज्ञापनायां क्रियमाणायां इदं ब्रूयात् । दृष्टा अपि सन्तो यूयममङ्गलास्तस्मादप्रतिष्ठन्तो मा कञ्चन दीक्षयेयुरिति वा शब्दो वापेक्षया विकल्पते ।

**मावादच्छामि पुणो अभिक्खणं बेंति कुणति निव्विसए । पभवन्तो भणति ततो, भरहाहिवती नसि तुमंति**

यदि वा मा पुनर्भूयो द्रक्ष्याम्येतान् अभीक्ष्णं वा ब्रुवन्ति स्वयमन्यैर्वा पुनः पुनर्विज्ञपयन्तीति कृत्वा निर्विषयान् करोति । ततोयः प्रभवत् वक्ष्यमाणगुणोपेतो ब्रूते नासि त्वं सकलस्य भरतस्याधिपतिर्येन निर्विषयत्वाज्ञापनेऽस्माकंभयं स्यादत्र स्थातुं न दास्यसि ततोऽन्यत्र यास्यामः । तथा इदमपि ब्रूते—५४२

**केवइयं वा एयं गोपयमेत्तं इमं तुहं रज्जं । जं पेल्लिउ नासिय गमंति य मुहुत्तमित्तेण ॥ ५४३ ॥**

क्रियद्वा एतत् गोष्पद मात्रमिदं च राज्यं यत्प्रेयं मुहूर्तमात्रेण नष्ट्वा गम्यते । एवमुक्ते स राजा प्राह—

जं होऊ तं होउ पभवामि अहं तु अप्पणो रज्जे । सो भणइ नीहमिज्जं रज्जातो किं बहूणाओ ॥ ५४४॥

स राजा ब्रूते यत् यावन्मात्रंभवतु तावन्मात्रं वा भवतु आत्मनो राज्ये तावदहं प्रभवामि तस्मात् किमत्र बहुना मम राज्यात् यूयं निर्गच्छतेति एवमुक्ते यत्कर्तव्यं तदाह—

अणुसट्ठी धम्मकहा विज्जनिमित्तादिएहिं आउट्टे । अट्ठिएपभुस्स करणं जहा कयं विराहुणा पुव्विं ॥५४५॥

अनुशिष्या अनुशासनेन धर्मकथया विद्यया निमित्तेन आदिशब्दान्मन्त्रेण चूर्णयोगैर्वा तं राजानमावर्तयेत् । अनुकूलयेत् अत्रैवमपि न तिष्ठति तर्हि तस्मिन् अस्थिते प्रभोरन्यस्य करणं कर्तव्यं यथा कृतं विष्णुना विष्णुकुमारेण । अथ कीदृशस्तं राजानमन्यप्रभुकरणे प्रेरयतीत्यत आह—

वेउव्वियलद्धी वाई सत्थे विज्जतोरसवलीवा । तवलद्धिपुलाती वापेल्लेति तमेतरे गुरुगा ॥ ५४६ ॥

यो वैक्रियलब्धिमान् यो वादिषु शास्त्रे निर्मातोऽनेकैरपि पुरुषसहस्रैर्दुर्जयः अथवा विद्यावलवान् यदि वौरसबली साहसिकोऽथवा तपो लब्धि पुलाकः स तमन्यप्रभुकरणेन प्रेरयति । यस्तु सत्यामपि शक्तौ प्रभुमन्यं न करोति तस्मिन्नितरस्मिन् प्रायश्चित्तं चत्वारो गुरुकाः । अथ कथं प्रभुमन्यं करोतीत्यत आह—

तं घेत्तुं बंधिऊणं पुत्तं रज्जं ठवेति उ समत्थो । असती अणुवसमंते निग्गंतव्वं ततो ताहे ॥५४७॥

तं राजानं गृहीत्वा बन्धनेन च बध्वा समर्थस्तस्य पुत्रं राज्ये स्थापयति असति सामर्थ्ये अनुशिष्यादिभिरुपशमयति । स च तथोपशम्यमानोऽपि नोपशाम्यति तर्हि ततो देशान्निर्गन्तव्यं तत्राध्वनि यतनामाह—

**भत्तादिफासुएणं अलब्भमाणे य पणगहाणीए । अद्धाणे कायव्वा जयणा उ जा जहिं भणिया ॥५४८॥**

अध्वनि मार्गे प्रासुकेन भक्तादावलभ्यमाने पञ्चकहान्या यतना कर्तव्या । या यत्र ग्रामे नगरे अरण्येवा पूर्वं कल्पाध्ययने भणिता ॥ इति श्रीमलयगिरि विरचितायां व्यवहार टीकायां सप्तम उद्देशः समाप्तः

सप्तमोद्देशके ग्रंथा—३११६.



સુરત ગોપીપુરા ભૂતીયાવાસ

શ્રી સઘની જ્ઞાન વૃદ્ધિ માટે

શ્રીમન્ મોહનલાલજી

જૈન શ્વે૦ જ્ઞાનભંડાર

સસ્કૃત અને ધાર્મિક પાઠશાળા.

કાર્યવાહક:—

શ્રીમાન્ ચુનીલાલ ગુલાબચંદ દાળીયા.

પેન્શનર ફોરેસ્ટ ઓફીસર.



મકાન બંધાવી આપનાર તથા વ્યવસ્થા માટે

સારી રકમ આપનાર—

ઝવેરી નગીનચંદ કપુરચંદ

અને તેમના પુત્રો.

પુસ્તકો અર્પણ કરનાર શ્રી સંઘ અને

શ્રીમન્ મોહનલાલજી મહારાજનો

સાધુ સમુદાય.

સ્નેહ દૃષ્ટિએ દેખનારા

પ્રવર્ત્તક કાંતિમુનિજી

અને બીજા સાધુઓ.



**जैनधर्मोपदेशक श्रीमान् रूपमुनिजी महाराज**

जन्म स. १९१३ भा. स्थानकवासी दीक्षा सं. १९२६.

संवेग दीक्षा स. १९६२ स्वर्गवास स. १९७४ ना श्रावण शुक्ल १४





**मर्हूम शेठ तुलसीदास मोहनजी कराणी मांगरोलवाला**

जे एक जैनोमां सखावते पूरा हता.

जन्म. सं. १९३१ पोश वद ७ स्वर्गवास सं. १९७७ भादरवा सुदी ७

# વ્યવહાર સૂત્રમાં આઠમા ઉદ્દેશાનો સાર.

સાધુઓ ગુરૂ સાથે વિચરતાં શિયાળા ઉનાળાના આઠ માસમાં કારણ વિશેષે ઉતરવાના સ્થાનમાં ગુરૂને પ્રાર્થના કરે કે આ કારણે મને અહીં શય્યા સંથારો કરવા દો, ગુરૂને વ્યાજબી લાગે તો તેને આજ્ઞા આપે, જો ન આજ્ઞા આપે તો દીક્ષા પર્યાયને અનુક્રમે જગ્યા મળે ત્યાં સંથારો કરે, સૂ. ૧. ચોમાસામાં જમીન ઉપર શરદીને લીધે ન સુવાય માટે સંથારો પાટ ઉપર પાથરવા એક હાથે ઉંચકાય તેવો શોધે, ગામમાં ન મળે તો પરગામ એક એક દિવસ વિશ્રાંતિ કરીને દૂરથી લાવે. સૂ. ૨. ।। શિયાળે ઉનાળે વાપરવા જરૂર પડે તો પાટ હલકો શોધીને દૂરથી ત્રણ દિવસના આંતરેથી પણ શોધી લાવે, ।। ૩ ।। વૃદ્ધાવાસ માટે લાવવો પડે તો હલકો શોધીને પાંચ દિવસને આંતરેથી પણ લાવે, ।। ૪ ।। અત્યંત વૃદ્ધ થયેલા સાધુને દાંડો પાતરાં છત્ર માત્રક લાકડી વસ્ત્ર ચર્મ ચર્મપરિછેદક વિગેરે જે વસ્તુ પોતાની પાસે હોય, અને બીજો સોબતી ન હોય તો ઘરધણીને સોંપી જાય, ફરી આવે ત્યારે તે બધાં તેની પાસે યાચના કરી લેઇ ને વાપરે, ।। ૫ ।। સાધુએ બીજાની વસ્તુ પાછી આપવાની શરતે સંથારો પાટ લીધાં હોય તે બીજા મકાનમાં લઇ જવાં હોય તો બીજીવાર આજ્ઞા માગ્યા વિના ન વપરાય, ।।૬।। પણ બીજીવાર આજ્ઞા લેઇ તે બહાર લઇ જવાં કલ્પે ।। ૭ ।। ગૃહસ્થીનાં પાટ પાટલા તેને પાછાં સોંપ્યાં હોય તો તેની આજ્ઞા વિના ન વપરાય, પણ જરૂર પડે આજ્ઞાથી વપરાય, ।। ૮ ।। કોઇ મકાનમાં સાધુને ઉતરવું હોય તો તેના ધણીને પૂછ્યા વિના

# સમયજ્ઞ મેતા જસકરણ મયાચંદ.

આઠમો ઉદ્દેશો વ્યવહારનો વાંચતાં અમારા એક સવય: ધર્મપ્રેમી શ્રાવકનું ચિત્ર જોશે તે કોણ છે તેનું કિંચિત વર્ણન અહીં કરશું.

ધર્મ પરલોકમાં ફળ આપે છે એ લોકમાં કહેવાય છે, પણ આ પાલનપુરમાં તો પ્રત્યક્ષ ફળ ધર્મનાં ભોગવાતાં જોવાયાં છે, તેમાં મેતા મગનભાઈ પ્રથમ દરજો ધરાવે છે, લોંકાગચ્છના ઉપાશ્રયમાં પૂજ્ય પાનાચંદજી મહારાજ ભીતરથી શાંત અને ઉપરથી એક યતિ વેષે છતાં કોઇપણું ધર્મ ઉપર સાધુભાવનાએ સમાન ભાવનાથી જોઇ ઉપદેશ આપતાં તેનું મન સ્થિર કરતા હતા, તેમના સહવાસમાં રાત દિવસ રહી ગૃહસ્થના દેશવિરતિ ધર્મનું પાલન કરતા, છતાં તપશ્ચર્યા એટલે હદ સુધી કરવા માંડી કે લાભાંતરાય કર્મનો નાશ થયો, અને સામાન્ય સ્થિતિમાંથી ઉચ્ચ સ્થિતિ જોવા વખત આવ્યો. અને પોતાના ઉપરોક્ત લઘુ બંધુને દેશાટન કરવાની સલાહ આપી, આ દેશાટન કરનાર તે જસકરણભાઈ અંગ્રેજી કેળવણીને લઇ ઝવેરાતના બજારમાં દલાલ તરીકે-પ્રસિદ્ધ થયા, અને તેમની નિપુણતાથી સુરતના ઝવેરી નગીનદાસ કુલચંદ ઉસ્તાદ એ પ્રસન્ન થઇ પશ્ચિમના ધનાઢ્ય દેશ ફ્રાન્સમાં અમરાપુરી જેવા પારીસ નગરમાં ભાગીદાર તરીકે ઝવેરાતના વ્યાપાર્થે મોકલ્યા, પરદેશ ગમનમાં એ વાતની મુશ્કેલીઓ છે એક તો દૂર દેશાવરમાં જૈનેતર સાથે સહવાસ કરતાં ધર્મભ્રષ્ટતા અને વ્યાપારમાં પૈસો વિશેષ થતાં સદાચારનું અપરિપાલન એટલે મરણ કરતાં પણ અધિક નુકશાન ઉંચ વર્ણના જૈન કે હિંદુને ભોગવવું પડે છે, છતાં તે સાચવીને પણ પારીસમાં ઇંદ્રિયોને વશ કરી નિપુણતા મેળવી વિદેશમાં રહ્યા, પાછળથી વિચાર થયો કે ધનપ્રાપ્તિ ભલે વિશેષ વિદેશમાં થાય છતાં પણ



સંપ વૃદ્ધિ ચાહક,

પાલણપુર નિવાસી

**મહેતા જસકરણ મયાચંદ.**

ધર્મપ્રેમી ગુજરાત દેશમાં રહી ધન કરતાં ધર્મને વિશેષ થાય તેમ ગણી મુંબાઇમાંજ પાછળથી દલાલી કરી સદવર્ત્તનમાં જીવન ગુજાર્યું.

વિદેશમાંથી કંઇપણ સારી વસ્તુ કે સદગુણો લાવવા એ દેશાટનનું ફળ માની પારીસની તથા બીજી મુસાફરીમાં સ્ત્રીઓને પ્રસવ વખતે જે જે અડચણો હિંદુમાં અને જૈનમાં દેખાય, 'તે' દૂર કરવા મરણ જેવા ભયંકર મામલામાંથી બચાવવા સારી ઇસ્પિતાલો તથા સુવાવડ ખાતા ઉપર વિશેષ લક્ષ આપ્યું. અને તે પ્રત્યક્ષ બનાવવા ખોટા વ્હેમને દૂર કરવા પોતાની પત્નીને મુંબઈના સુવાવડખાતામાં રાખી દાખલો બેસાડ્યો, અને પાલનપુરમાં કારભારી સદાચારી ગુપ્તદાનેશ્વરી વિદ્યાપ્રેમી ગરીબોના કલ્પવૃક્ષ સમાન મહેતા પીતાંબર હાથીભાઈના પોતાના ઉપર પણ ઉપકારો થએલાનો બદલો આપવા ઇસ્પિતાલ અને સુવાવડ ખાતાનો લાભ પાલનપુર વાસીઓને આપવા પ્રાર્થના કરી, અને તે પુણ્યવાન પુરૂષના અત્યંત ઉત્સાહથી નામદાર નામદાર નવાબ સાહેબ તાલેમહમદખાન બહાદુરે જનરલ લાઇબ્રેરીના જોડે સડક ઉપર રેલવેના રસ્તે મોખરાની શહેરના નાક જેવી અમૂલ્ય જમીન આપી અને શ્રીમંતોની તથા તમામ બંધુઓની મીઠી નજરથી તે મકાન તૈયાર થયું સને ૧૯૮૪ ના ચૈત્ર સુદ ૫ ના શુભ દિવસે ઉપરોકત નવાબ સાહેબના હાથે ખુલ્લું મુકાયું, અને ભેદ ભાવ વિના સર્વેને આ અમૂલ્ય લાભ મળી શકે છે, તેમાં ત્રણ હજાર રૂપિયા તેમણે પણ આપેલા છે.

આ કલિકાળમાં ક્રોધાદિ કષાયથી પરિણુત જીવ સમૂહમાં શાંતિ અને સુલેહ ચાહનારા વિરલા હોવાથી મોહના નચાવેલા પરવશ જીવો નાચીને મોક્ષતત્વને બાજુએ મુકી કલહપ્રિયતામાં રાજી થઇ જ્યાં જુઓ ત્યાં દાવાનળના દાહને સળગાવી મુકનારા ઘણા છે, તેવા સમયમાં શાંતિ વાંછનારા સુલેહ કરાવનારા નરરત્નો પણ બહુરત્ના વસુંધરામાં હોય છે, તેમાંના આ એક છે, અને તે થોડા સમય પહેલાં જૈનોને અનુભવાયું છે, જો કે જોઇએ તેવી શાંતિ પથરાઇ નથી છતાં પણ સુજ્ઞ માણસોના

હૃદયમાં એમ તો ચોક્કસ થયું છે કે શાંતિના ચાહનારાઓમાં આ પણ એક વ્યક્તિ છે,

પિતા સુખ જોવા રહ્યા નથી, માતા અર્ધ સુખને જોઇને સ્વર્ગવાસ પામેલી છે, પરંતુ બંધુના પુત્રોને પોતાના બચ્ચાં માફક પાળી દરેકને સુવ્યવસ્થિત રીતે રાખી ઘરમાં સર્વેનું માન સાચવી અહીં પણ સંપથી સ્વર્ગનું સુખ જોવાય છે, એ પ્રત્યક્ષ બતાવવા રૂપ આ આદર્શ કુંટુંબ છે, તે નજરે જોઇ શકાય છે.

બાળપણામાં કેવી સ્થિતિ મધ્યવયમાં કેવી સ્થિતિ અને અંતકાળમાં કેવી સ્થિતિ અહીં જોવાય છે ભણેલી સ્ત્રીઓ સારાં પુસ્તકો વાંચીને પતિ સેવામાં પ્રવીણ રહે એ તો દરેક સમજી શકે, પણ ન ભણેલી નાના શહેરમાં જન્મેલી પણ સરળ હૃદયથી મોટા શહેરમાં રહીને પણ ન છકે તથા પારિસની સુંદર લેડીઓને જોવાથી પણ ઉડાઉ ન બને, કોઇપણ જાતના દુર્ગુણને ન સંગ્રહે ફક્ત ગુણને ધારણ કરી જગત્માં બંને કુટુંબ સાસરીયા પીયરની ઇજત કેમ વધે એજ જેનું ધ્યેય છે, એવી પત્ની મળે તે પણ મહાપુણ્યોદય છે. અને આ જસકરણભાઇને તથા તેમના ત્રણે વડીલબંધુઓને સુશીલ સદાચારિણી પત્નીઓ મળવાથી અને તેવાં જ સુશીલ બાળક બાળિકા કુદરતે અર્પણ કરવાથી મયાચંદમેતાનું આખું કુટુંબ અત્યારે પણ વિભક્ત છતાં એકત્ર દેખાય છે તે દરેક ગૃહસ્થને આદર્શરૂપ છે.

વ્યવહાર સૂત્રનું સંશોધન કરતાં પણ તેને પ્રસિદ્ધ કરતાં વિશેષ મુશ્કેલી પ્રસિદ્ધકર્ત્તાને કઢંગા સમયની છે, અને આઠમો ઉદ્દેશો પ્રસિદ્ધ કરવામાં સમય વિચારી આ કાર્યને તેમણે સહાય આપી છે, જો તેના વાંચનારાને કંઇ લાભ થાય તો તીર્થંકરો ગણધરો ઉત્તમ સાધુઓ અને આવા ધર્માત્મા શ્રાવકોનો ઉપકાર માનવાનો છે.

# ॥ सभाष्ये व्यवहारसूत्रे अष्टमोद्देशकः ॥



व्याख्यातः सप्तमोद्देशकोऽधुनाष्टम आरभ्यते । तत्र चेदमादिसूत्रं गाहाउपज्जोसविए ताहे गाहाए ताहे पएसाए ताहे उवासान्तराए जमिणं सेज्जा संथारगं लभेज्जा तमिणं तमिणं ममेवसिया थेरायसे अणुजाणेज्जा तस्सेवसिया, थेरायसेनो अणुजाणेज्जा, एवंसेकप्पइ आहा राइणियाए सेज्जासंथारगंपडिग्गाहेत्तए ॥ सूत्र ॥ १—अस्य सम्बन्धप्रतिपादनार्थमाह—

**तह चेव उग्गहम्मी अणुयत्तं तंमि रायमादीणं । साहम्मि उग्गहम्मी सुत्तमिणं अठमे पढमं ॥ १ ॥**

तथैव पूर्वोक्तेनैव प्रकारेण राजादीनामवग्रहे तु वर्तमाने अवग्रहप्रस्तावादष्टमे उद्देशके प्रथममिदं सूत्रं । साधर्मिकावग्रहे पठति एष सूत्र सम्बन्धः । अनेन सम्बन्धेनायातस्यास्य व्याख्या—गाहा गेहं तत्र ऋतौ ऋतुबद्धे काले वर्षाकाले वा पर्युषितस्तस्मिन् गाहे सूत्रे स्त्रीत्वं प्राकृतत्वात्तदेवमुत्तरत्रापि तस्मिन् प्रदेशेऽन्तर्बहिरादिलक्षणे तस्मिन्नवकाशान्तरे द्वयोर्मध्यभागलक्षणे यत् यत् शय्यासंस्तारकं शय्यासंस्तारकभूमि लाभस्तत् ममैव स्यादिति ब्रूते । तत्र यदि स्थविरास्तस्या शठभावमवगम्यानुजानन्ति, तदातस्यैवस्यादथ से तस्य शठभावं मवबुध्य स्थविरा नानुजानते । एवं तर्हि से तस्य कल्पते यथा रात्निकतया यथा रत्नाधिकतया शय्यासंस्तारकं शय्यासंस्तारकभूमिं परिग्रहीतुमिति सूत्रसंक्षेपार्थः । सम्प्रति भाष्यकृद्विषमपदव्याख्यां करोति

**गाहाघरे गिहेया एगठा होंति उग्गहे तिविहो। उउबद्धे वासासु य वुड्ढावासे य णाणत्तं ॥ २ ॥**

गाहा इति घरमिति गिहमिति वा एते त्रयोऽप्येकार्थास्तच्च गृहं त्रिविधे अवग्रहे भवति। तद्यथा—ऋतुबद्धसाधर्मिकावग्रहे वर्षावाससाधर्मिकावग्रहे तत्रऋतुरिति ऋतुबद्धावग्रहो गृहीतः। पज्जोसविते इत्यनेन वर्षावग्रहः। एतयोर्द्वयोरप्यवग्रहयोरंतः प्रविष्ट इति कृत्वा सामर्थ्यतस्तृतीयोऽपि वृद्धावासावग्रहो गृहीतस्तथा चाह—वृद्धावासे च तत्र त्रिष्वप्यवग्रहेषु यन्नानात्वं तत्प्रत्येकसूत्रेषु वक्ष्यामीति वाक्यशेषः।

**चाउस्सालादि गिहं तत्थ पदेसो उ अंतो बाहिं वा। उवासंतरमो पुण अमुगाणं दोण्ह मज्झंमि ॥३॥**

चतुःशालादिगृहमादि शब्दादेकशालद्विशालत्रिशाल परिग्रहः। तस्य प्रदेशा अन्तर बहिरासन्नदूरादि लक्षणा अवकाशान्तरं नाम अमुकयोर्द्वयोर्मध्यमिति। तदेवं कृता भाष्यकारेण विषमपदव्याख्या। सम्प्रति निर्युक्तिविस्तरः।

**खेत्तस्सउ संकमणे कारण अन्नत्थ पट्ठविज्जंतो। पुव्वुद्दिठे तं मि उउवासे सुत्तनिद्देसो ॥ ४ ॥**

आचार्य ऋतुबद्धकालनिमित्तं वर्षाकालनिमित्तं वा अन्यत् क्षेत्रं संक्रमितुमना अजायत। तत क्षेत्रस्य संक्रमणे कर्तव्येऽन्यस्मिन् वा आत्मनः कारणे समुत्पन्ने कंचित्साधुमन्यत्र प्रस्थापयेत्। स च प्रस्थाप्यमानः पूर्वोद्दिष्टे तस्मिन्नवकाशे आचार्यान् विज्ञपयति। अस्मिन् प्रस्तावेऽधिकृतसूत्रस्य निर्देशो भणनं। इयमत्र भावना योऽसौ प्रस्थाप्यते तेन तत् गृहं दृष्टं यदि वा योऽन्यः पूर्वं क्षेत्रप्रत्युपेक्षणाय गतस्तेम तस्य सम्यक्कथितं यथाऽमुकः प्रदेशो निवातोऽमुकः प्रवातोऽमुकः साधारणोऽमुकः

आचार्यं विज्ञपयति । यथा मम श्लेष्मा
सुखावहोऽमुको दुःखावहोऽमुकः सालोकोऽमुको निरालोकस्ततः स प्रस्थाप्यमान
प्रस्पन्दतेऽथवा प्रवाते स्वपतोऽजीर्णमुपजायते यदि वा धर्ममध्यासितुं न शक्नोमि । अथवा अमुकं अमुकं च साधुमहं सदैव
प्रतिपृच्छामि तत एतयोर्मध्ये मम शय्यासंस्तारकभूमिमनुजानीत यदि वा प्रस्थापित स्तत्र गत्वा तत् गृहमालोक्यात्मनः संसाधकं
प्रदेशमाचार्यस्य श्लेष्मप्रस्पन्दनादिकारणप्रकाशनपुरस्सरं सन्देशयति यथामुकामुकां मे संस्तारकभूमिमनुजानीतेति तथा चाह—

**दीवेउं तं कज्जं गुरुं व अन्नं व सोउ अप्पाहे। ते विय तं भूयत्थं नाउं असढस्स वियरंति ॥ ५ ॥**

तत् श्लेष्मप्रस्पन्दनादिकार्यं दीपयित्वा प्रकाश्य गुरुमाचार्यमन्यं वा स्पर्धकपतिमुपाध्यायादिकं अप्पाहेति सन्देशयति। तेऽपि
च गुरवोऽन्ये वा यत्सन्दिष्टं साक्षात्कथितं वा तत् भूतार्थं यथावस्थितं ज्ञात्वा तस्या शठस्य तां शय्यासंस्तारकभूमिं वितरान्ति।

**अह पुण कन्दप्पातीहिमग्गते तो उ तस्स न दलंति। एयं तु पिंडसुत्ते पत्तेय इहं तु वुच्छामि ॥६॥**

अथ कन्दर्पादिभिर्मार्गयति। कन्दर्पनिमित्तमन्यद्वा किञ्चित् शठत्वमवलम्ब्य विज्ञपयति तदा तस्य न ददाति नानुजा-
नन्ति। अथवा जमिणं सेज्जासंथारयं लभिज्जा इत्यादि सूत्रस्यायमर्थः—शय्या एव संस्तारकः शय्या संस्तारकः। स च द्विधा—
फलक संस्तारकः कांचि(थि)संस्तारको वा। तस्य योग्रेतनः संस्तारकः खरकस्तत्र स्वपतः पार्श्वाणि दुःखायन्ते। ततस्तेन पूर्वं
मृदुकुले गत्वा मृदुः संस्तारकोऽनुज्ञापितः तत्र आचार्यसमीपमागत्य विज्ञपयति यं यं शय्या संस्तारकं लभेत स ममैव स्यात्।
तत्र यदि स्थविरा स्तस्याशठत्वमालोक्यानुजानन्ति तदा स तव (तस्य) स्यात् अथ शठ इति कृत्वा तस्य नानुजानन्ति तर्हि

से तस्य कल्पते यथा रात्निकतया शय्यासंस्तारकं परिगृहीतुं नान्यथेति एतत् पिण्डसूत्रं व्याख्यातमधुना पुनः प्रत्येकसूत्राणि व्याख्यास्यामि।

सेय अहा लहुस्सगं सेज्जा संथारगं गवेसेज्जा। जं चक्किया एगेण हत्थेणं ओगिज्ज जाव एगाहं, अद्धाणं परिवहित्तए एस मे वासावासुं भविस्सइ सू० ॥ २ ॥

इत्यादि सोधिकृतो भिक्षुर्यथा लघुस्वकमनेकान्त लघुकं वीणाग्रहणग्राह्यं। शय्या सर्वाङ्गिका संस्तारकोर्धतृतीयहस्तदीर्घ-हस्तचत्वार्यङ्गुलानि विस्तीर्णः। अथवा तत्पुरुषः समासः शय्या एवं संस्तारकः शय्यासंस्तारकः तृणमयं पट्टमयं वा गवेषयेत्। तत्र यत् शक्नुयात् एकेन हस्तेनावग्रह्य यावदेकाहं वा द्व्यहं वा त्र्यहं वा अध्वानं गच्छन् परिवोढुं तत् गृह्णीयात्। एष मे वर्षावासे भविष्यति एष वर्षा सूत्रस्यार्थः।

से अहा लहुसगं सेज्जा संथारगं गवेसेज्जा जं चक्किया एगेणं हत्थेणं ओगिज्ज जावएगाहं वादुयाहं वा तियाहं वा परिवहित्तए एसमे हेमन्तगिम्हासु भविस्सइ ॥ ३ ॥

से अहा लहुसगं सेज्जा संथारगं जाएज्जा जं चक्किया एगेणं हत्थेणं ओगिज्ज जावएगाहं वा दुयाहं वा तियाहं वा चउयाहं वा पंचगाहं वा अद्धाणं परिवहित्तए एस मे वुड्ढावासासु भविस्सइ ॥४॥

एवं हेमन्तग्रीष्मसूत्रार्थो वृद्धावाससूत्रार्थश्च भावनीयः नवरं वृद्धावाससूत्रे चतुरहं वा पञ्चाहं वेत्यधिकं वक्तव्यमधुना
निर्युक्तिविस्तरः ।

**सोपुण उउम्मि घेप्पइ संथारो वुड्ढावासे वा । ठाण फलगादी वा उउम्मि वासासुय दुवे वि ॥७॥**

स पुनः संस्तारकः स्थानं स्थानरूप ऋतुबद्धे वर्षाकाले वृद्धावासे च यथानुरूपे गृह्यते । तद्यथा–ऋतुबद्धे कालेऽवकाशे
गृह्यते, वर्षावासे च वृद्धावासे च निवातस्थानेऽपि, तथा ऋतुबद्धे काले ऊर्णादिमयः संस्तारकः परिगृह्यः पुरुषविशेषं
ग्लानादिकमपेक्ष्य फलकादिर्वा वर्षावासे द्विकावपि द्वावपि संस्तारकौ वक्ष्यमाणलक्षणौ गृह्णीयात् ।

**उउबद्धे दुविहगहणा, लहुगो लहुगाय दोस आणादी । झामियहियवक्खेवे संघट्टणमादिप लिमंथो ॥८॥**

द्विविधः संस्तारकः परिशाटिरूपोऽपरिशाटिरूपश्च । तत्र पारिशाटिरूपो द्विविधो झुषिरोऽझुषिरश्च तत्र शाल्यादि पला-
लतृणमयो झुषिरः कुशवल्ककादिरूपोऽझुषिरः, । अपरिशाटिरूपो द्विविधः–एकाङ्गिकोऽनेकाङ्गिकश्च । एकाङ्गिकोपि द्विविधः
सङ्घातितोऽसंघातितश्च । तत्रासङ्घातित एकफलकात्मकः संघातितोद्व्यादिफलक संघातात्मकः अनेकाङ्गिकः कंथिका प्रस्ता-
रात्मकस्तत्र यदि ऋतुबद्धेऽझुषिरं परिशाटिं संस्तारकं गृह्णाति तदा तस्य प्रायश्चित्तं लघुको मासः । झुषिरंगृह्णतश्चत्वारो
लघुका अपरिशाटिमपिगृह्णतश्चत्वारो लघुका न केवलं प्रायश्चित्तं किन्त्वाज्ञादयश्च दोषाः । तथा यद्यग्निना स ध्याम्यते तदापि
प्रायश्चित्तं चत्वारो लघुकाः व्याक्षेपणे वा स्तेनैरपहृते चतुर्लघुकं अपरिशाटौ ध्यामिते हृते वा मासलघुस्ततोऽन्यं संस्तारकं
मृगयमाणानां सूत्रार्थपलिमन्थः तथा तस्मिन् संस्तारके ये प्राणजातय आगन्तुकास्तदुद्भूता वा तान् संघट्टयति अपद्रावयति

च ततस्तन्निष्पन्नं तस्य प्रायश्चित्तमित्येष गाथार्थः । साम्प्रतमेनामेव भाष्यकृत् विवृणोति—

परिसाडिय अपरिसाडी दुविहो संथारतो समासेण। परिसाडि भुसिरेयर एत्तो वुच्छं अपरिसाडिं ॥९॥

द्विविधः समासेन संक्षेपेण संस्तारकः तद्यथा परिशाटिरपरिशाटिश्च । तत्र परिशाटिर्द्विधा—झुषिरः इतरश्च । इतरो नाम अझुषिरः । अत ऊर्ध्वमपरिशाटिं वक्ष्ये प्रतिज्ञातमेव करोति—

एगंगी अणेगंगी संघातिम एयरोय एगंगी । अझुसिरगहणे लहुतो चउरो लहुकाय सेसेसु ॥१०॥

अपरिशाटिर्द्विधा—एकाङ्गिकोऽनेकाङ्गिकश्च । तत्रैकाङ्गिको द्विधा—संघातिम इतरश्च । अमीषां व्याख्यानं प्रागेव कृतम् । तत्राझुषिरस्य संस्तारस्य ग्रहणे प्रायश्चित्तं लघुको मासः शेषेषु झुषिरसंघातिमेतरैकाङ्गिकानेकाङ्गेषु प्रत्येकं चत्वारो लघुकाः ।

अपरिसाडिंमिय लहूगो आणादि विराहणा चेव लघुकाय झामियंमि य हरिएवियहोंति अपरिसाडिम्मि ।

अपरिशाटौ तस्मिन्नपहृते प्रत्येकं प्रायश्चित्तं चत्वारो लघुका भवन्ति परिशाटौध्यामिते हृते वा अग्निना ध्यामितेऽपरिशाटो स्तेनैर्वा तस्मिन्नपहृते प्रत्येकं प्रायश्चित्तं चत्वारो लघुका भवन्ति ॥११॥ तामेवाभिधित्सुराह—

प्रत्येकं लघुको मासः आज्ञादयश्च दोषास्तथा विराधना च संयमस्य ॥११॥ तामेवाभिधित्सुराह—

विक्खेवो सुत्तादिसु आगंतु तदुब्भवाण घट्टादी । पलिमंथो पुव्वुत्तो मंथिज्जत्ति संजमोजेण ॥ १२ ॥

अन्य संस्तारकमार्गणे सूत्रादिष्वर्थेषु च विक्षेपो व्याघातः पलिमन्थ इत्यर्थः । तथा यत्तत्रागन्तुकाः प्राणाः कीटिकादयो ये च तदुद्भवा मत्कुणादयस्तेषां यत् घट्टनादि तन्निमित्तमपि प्रायश्चित्तं । इदानीं पलिमन्थो व्याख्येयः । स च पूर्वमेव

विक्खेवो सुत्तादिषु इत्यादिना ग्रन्थेनोक्तः। अथ कस्मात् व्याक्षेपो घटनादि वा परिमन्थ इत्युच्यते । तत आह–येन प्रकारेण
तेन संयम उपलक्षणमेतत् सूत्रमर्थश्च मथ्यते तेन पारिमन्थ इति ।

**तम्हाउ न घेत्तव्वो उउंमि दुविहो विं एस संथारो। एवं सुत्तं अफलं सुत्तनिवाओउकारणितो ॥१३॥**

यस्मादेते दोषास्तस्मात् ऋतौ ऋतुबद्धे काले द्विविधोऽप्येष परिशाट्य परिशाटिरूपः संस्तारो न गृहीतव्यः। अत्र पर आह–एवं सति सूत्रमफलं सूत्रे तृणमयस्य शय्यासंस्तारकस्यानुज्ञानादाचार्य आह–सूत्रनिपातः कारणिकः । कारणवशात्प्रवृत्तः। तदेव कारणमुपदर्शयति—

**सुत्तनिवातो तणेसुं देसि गिलाणे य उत्तमट्ठेय। चिक्खल्लपाणहरिए फलगाणि वि कारणज्जाते ॥१४॥**

सूत्रस्य निपातो निपतनमवकाश इति भावः। देशे देशविशेषे तथाग्लाने उत्तमार्थे च तथा चिक्खल्ले कर्दमे प्राणे प्राणजाते भूमौ संसक्ते तथा हरिते हरितकाये एवं रूपे कारणजाते सति फलकान्यपि गृह्यन्ते । फलकरूपोऽप्यपरिशाटिः संस्तारको गृह्यते इति गाथा संक्षेपार्थः। साम्प्रतमेनामेव विवरीषुः प्रथमतस्तृणेषु देशे इत्यस्य व्याख्यानमाह—

**असिवादिकारणगता उवही कुत्थण अजीरगभया वा। अझुसिरमसंधिअबीए एक्कमुहे भंगसोलसगं ॥१५॥**

अशिवादिभिः कारणैस्तत्र प्रदेशेगता यो वर्षारात्रे पानीयेन प्लाव्यते, यथा सिन्धुविषयो अथवा तत्र देशे स्वभावतः प्रखराभूमिस्ततो रात्रौ शीतलवातसम्पर्कतोवश्याय–पततो वा जलप्लावितेव सा भूमिरुपजायते। अथवा आसन्नीभूतेन

पानीयेन तमवकाशमप्राप्नुवतापि भूमिः स्विद्यति । तत्रोपधेःकोथनंमाभूत् । मात्राऽजीर्णेन ग्लान्यमित्युपधिकोथनभयादजीर्ण-भयाद्वा तृणानि गृह्णन्ति । साधवस्तानि च अभुषिराणि असन्धीनि अवीजानि च एतान्येकमुखानि क्रियन्ते यत्र च अभुषिर असन्धे वा अवीज एकमुखरूपेषु चतुर्षु पदेषु भङ्ग षोडशं षोडश भङ्गाः—

<table>
<tr><td>||||</td><td>|S||</td><td>S|||</td><td>|S||</td></tr>
<tr><td>|||S</td><td>|S|S</td><td>S||S</td><td>S||S</td></tr>
<tr><td>|S|</td><td>|SS|</td><td>S|S|</td><td>SSS|</td></tr>
<tr><td>SS||</td><td>|SSS</td><td>||SS</td><td>SSSS</td></tr>
</table>

तत्र असंतमपितदपि अ-भुषिरादिपद व्याख्या-नार्थमाह—

**कुसमादि अभुसिराई असंधबीयाइं एक्कतोमुहाइं । देसी पोरपमाणा, पडिलेहातिन्निवेहासं ॥ १६ ॥**

कुशादीनि कुशवचक्रप्रभृतीनि तृणानि अभूषिराणि असन्धीनि अवीजानि च भवन्ति तानि एकमुखानि कर्तव्यानि । तत्र भङ्गषोडशमध्ये यत्र भङ्गेषु झुषिराणि तत्र प्रायश्चित्तं चत्वारो लघुकाः । बीजेषु प्रत्येकेषु पञ्चरात्रिं दिवानि लघुकानि अनन्तकायिकेषु गुरुकाणि । शेषेषु भङ्गेषु मासलघु, प्रथमे भङ्गेगृह्णंतः शुद्धा पौरेत्यादि देशीत्यङ्गुष्ठोऽभिधीयते । तस्य यत्पर्व तत्प्रमाणानि जिनकल्पिकानां स्थविरकल्पिकानां च तृणानि भवन्ति, । इयमत्र भावना—अङ्गुष्टस्य यत्पर्वं तत्राङ्गुलाग्राणि स्थापयित्वा यावद्भिस्तृणैर्मुष्टिरापूर्यते तावन्ति मुष्टिप्रमाणानि जिनकल्पिकानां स्थविरकल्पिकानां च तृणानि भवन्ति । तेषां च तृणानां प्रत्युपेक्षास्तिस्रस्तद्यथाप्रभाते मध्याह्ने अपराह्ने च । यदा च भिक्षादौ गच्छन्ति तदा विहायसि कुर्वन्ति । साम्प्रत-मेतदेव किञ्चिद्व्याचिख्यासुराह—

**अंगुठपुव्वमेत्ता जिणाण थेराण होंति संडासो । भूमिए विरल्लेउं अवणेत्तु पमज्जए भूमिं ॥ १७ ॥**

आदेशो यथोक्तरूपो दास आजन्मावधि किंकरो भृतकः कियत्कालं मूल्येन धृत आदेशश्च दासश्च भृतकश्च आदेशदासभृतकं तत्र च पिण्डस्याष्टभिः सूत्रैर्मार्गणा कृता। यत्र सागारिकदोषैः प्रसङ्गदोषैश्च भद्रकप्रान्तककृतैरग्राह्यो भवति। साम्प्रतमष्टानामपि सूत्राणां विभागमाह–

व्य. सू. १–८ ॥२॥

तत्थादिमाइं चउरो आवेसे सुत्तमाहिया। दो चेव पाडिहारी अपाडिहारी भवे दोण्णि ॥४॥

तत्र तेषामष्टानां सूत्राणां मध्ये आदिमानि चत्वारि सूत्राणि आदेशे प्रागुक्तस्वरूपे आख्यातानि, तत्रापि द्वे सूत्रे प्रातिहारिणि द्रष्टव्ये द्वे च सूत्रे अप्रातिहारिणि, प्रथम तृतीये प्रातिहारिणि, द्वितीये चतुर्थेऽप्रातिहारिणीत्यर्थः।

अंतो बहिं वा वि निवेसणस्स आवसएणं व ठिए सगारे। भत्तं न एयस्स विसेसजुत्तं, तंमी दलंते खलु सुत्तबंधो ॥५॥

निवेशनं गृहस्यान्तर्बहिर्वा स्थिते सागारिके शय्यातरे यदि आदेश एव आदेशः प्राघूर्णकस्तेन वा सह स्थिते यद्भक्तं विशेषयुक्तं विशेषतो निष्ठां नीतं तन्न एतस्य प्राघूर्णकस्य सम्बन्धि किन्तु सागारिकस्य ततस्तस्मिन् ददति सूत्रसम्बन्धः सूत्रोपनिपातः। प्रातिहारिकभोजितया तस्मिन् ददाति प्रथमे तृतीये च सूत्रे न कल्पते सागारिकपिण्डत्वात्। द्वितीये चतुर्थे वा प्रातिहारिकभोजितया कल्पते। तदायत्वात्केवलं भद्रकप्रान्तदोषप्रसङ्गतो न गृह्यते। एतदेवाह–

सागारियस्स दोसा दोसु दोसु पसंगतो दोसा। भद्दगपन्तादीया होइ इमे मुणेयव्वा, (दोसु पि कमेण णेयव्वा) ॥६॥

द्वयोः प्रथमतृतीययोः सूत्रयोः सागारिकस्य दोषान् शय्यातरपिण्डत्वान्न कल्पते इति भावः। द्वयोर्द्वितीयचतुर्थयोः प्रसङ्गतो दोषा भद्रकप्रान्तादिकाः आदिशब्दादतिभद्रकातिप्रान्तादिपरिग्रहस्ते च इमे वक्ष्यमाणा भवन्ति ज्ञातव्याः।६। तानेवाह–

एएण उवाएणं गिण्हंती भद्दे उग्गमेगतरं । पन्तो दुदिठधम्मा विणास गरिहा दिय निसिं वा ॥७॥
उ. ९ भा. भद्रकश्चिन्तयति साधव एतेनोपायेन मदीयं पिण्डं गृह्णन्ति, तत एवं चिन्तयित्वा उद्गमदोषाणामेकतरं दोषं कुर्यात्, यस्तु प्रान्तः
४-१० स पापीयान् दुर्दृष्टधर्मा तद्ग्रहं पिण्डग्रहणतो दिवा निशि वा कोपावेशतो विनाशं कुर्यात् गर्हां वा दिवानिशमिति ।
॥२॥
१८ सुत्तंमि कप्पइ निय वुत्ते किं अत्थतो निसेहेह । एगयरदेसे कालियसुत्तनिवातो इमेहिं तु ॥८॥
सूत्रे कल्पते इत्युक्ते किं यूयमर्थतो निषेधयथ । सूरिराह—एकतरदोषात् भद्रकदोषप्रसङ्गात् प्रान्तदोषप्रसङ्गाद्वा इत्यर्थः । यद्येवं सूत्रे कस्मात्कल्पते इत्युक्तमत आह—अधिकृतस्य कालिकसूत्रस्य निपातः प्रवर्तमानमेभिर्वक्ष्यमाणैः कारणैः एतच्च ज्ञायते व्याख्यानात् कालिकश्रुतं च व्याख्यानप्रधानं तथा चाह—
२२ जं जह सुत्ते भणियं तहेव तं जइ वियालणा नत्थि । किं कालियाणुयोगो दिठो दिट्ठिप्पहाणेहिं ॥९॥
यत् यथा सूत्रे कालिके भणितं तद्यदि तथैव प्रतिपत्तव्यं । न पुनर्विचारणा काचिदस्ति, तर्हि दृष्टिप्रधानैर्युगप्रधानैरित्यर्थः । किं कस्मात्कालिकानुयोगो दृष्टः तस्मादतिविचारणा सा चात्र प्रागुक्तस्वरूपेति । तत्र यदुक्तमेभिः कारणैः कालिकसूत्रनिपात इति तानि कारणान्याह—
२६ अदिट्ठस्स उ गहणं अहवा सागारियं तु वज्जेत्ता । अन्नो पेच्छउ मा वा पेच्छन्ति वा वि वच्चता ॥१०॥
यदि केनापि सागारिकसत्केन तत् दीयमानं न दृश्यते तदस्यादृश्यस्य ग्रहणं भवति । अथवा सागारिकं शय्यातरं वर्जयित्वा अन्यो दीयमानं प्रेक्षतां वा मा वा । अथवा सागारिकेऽपि प्रेक्षमाणे व्रजन्तो न तिष्ठन्ति केवलं दानवेलायां तद्दृष्टिः परिह्रियते । तत उक्तं

सूत्रे कल्पते इति, तदेवमादेशविषयं सूत्रचतुष्टयं भावयति।

**दास-भयगाण दिज्जइ उक्खित्तं जत्थ भत्तयं नियमं। तंमि वि सो चेव गमो अंतो बाहिं व देतंमि ॥११॥**

दासभृतकादिसूत्रचतुष्टयेऽपि प्रथमसूत्रे तृतीयसूत्रे च प्रातिहारिकभोजनात्तस्मिन् ददति सागारिकपिण्ड इति कृत्वा न कल्पते। यत्र पुनर्द्वितीयचतुर्थे च सूत्रे दासभृतकानामुत्क्षिप्तं हस्तोत्पाटितं नियतं भक्तकं दीयते दत्तं च तैः स्वगृहे नीयते तस्मिन्नपि दासभृतकादौ निवेशनस्यान्तर्वहिर्वा ददति तत्र सूत्रे स एव गमः प्रकारः कल्पते वस्तु, ततः परं भद्रकप्रान्तादिदोषप्रसङ्गतो न गृह्यते। यदा तु केनापि सागारिकः सत्केन दृश्यते यदि वा सागारिकं मुक्त्वा अन्यः प्रेक्षतां वा तदागृह्यते। यद्येवं तर्हि सागारियस्स आदेसे वा दासे वा भयगे वा इत्यनेन प्रकारेण चत्वार्यैव सूत्राणि कस्मान्न कृतानि, उच्यते।

**निययानियय विसेसो आएसो होइ दासभयगाणं। अच्चियमणच्चिए वा विसेसकरणं पयत्तो वा ॥१२॥**

आदेशो दासभृतकानां भवति नियतानां नियतकृतो विशेषः तथाह्यादेशः कोऽपि कदाचिदागच्छति ततस्तस्यानियतं दीयते दासभृतकानां नियतं तथा आदेशस्यार्चितं सत्कारपुरस्कृतं दीयते दासभृतकानां सत्काराकरणतोऽनर्चितं तथा आदेशस्य भोजनविधिसम्पादनाय महान् प्रयत्नः संभ्रमगर्भो विधीयते। दासभृतकानां तु न तादृशः प्रयत्न इति दासभृतकसूत्रचतुष्टयाद्विश्लेषकरणं पृथक्करणं—

**सूत्रम्—(९) सागारियस्स नायए सिया सारियस्स एगवगडाए अन्तो एगपयाए सारियं चोपजीवइ तम्हा दावए नो से कप्पइ पडिगाहेत्तए** इत्यादि सूत्राष्टकं अस्य सम्बन्धप्रतिपादनार्थमाह—

नीसट्ट अपडिहारी समणुण्णा उ त्ति मा अइपसंगा। एगपए परपिंडं गेण्हे परसुत्त–संबंधो ॥१३॥

उ. ९. भा. ११–१३ ॥३॥ निसृष्टो दत्तोऽप्रतिहारी पिण्डः समनुज्ञात इति विचिन्त्य मा अतिप्रसङ्गत एकपदे एकस्यां तुल्यां शय्यातराद्व्यतिरिक्तस्य पिण्डं गृह्णीयादिति परसूत्रस्य परविषयसूत्राष्टकस्य सम्बन्धः। अनेन सम्बन्धेनायातस्यास्य व्याख्या सागारिकज्ञातकः सागारिकस्वजनः स्यात् सागारिकस्य एकवगडाए एकस्मिन् गृहे सागारिकस्यान्तरे तस्यां प्रजायां चुल्यां। सागारिकं चोपजीवति तस्माद्दापयेत् । न से तस्य साधोः कल्पते प्रतिग्राहयितुं सागारिकासक्तचुल्लीदारुलवणाद्युपजीवनस्तस्य शय्यातरपिण्डस्य शय्यातरसत्कत्वात्, एवं शेषाण्यपि सप्त-सूत्राणि भावनीयानि पाठःपुनस्तेषामेवं–

(१०) सागारियस्स नायए सिया सागारियस्स एगवडाए अंतो सागारियस्स अभिनिपयाए सागारियं चोपजीवति, तम्हा दावए, नो से कप्पइ पडिग्गाहित्तए, ११ सागारियस्स नायए सिया सागारियस्स एगवडाए बाहिं सागारियस्स एगपयाए सागारियं च उपजीवति, जम्हा दावए, नो से कप्पइ पडिगाहेत्तए (१२) सागा-रियस्स नायए सिया सागारियस्स एगवडाए बाहिं सागारियस्स अभिनिपयाए सागारियं च उवजीवति, तम्हा दावए, नो से कप्पति पडिगाहित्तए (१३) सागारियस्स नायए सिया सागारियस्स अभिनिव्वगडाए एगदुवाराए एगनिक्खमणपवेसाए अंतो सागारियस्स एगपयाए सागारियं च उवजीवति, तम्हा दावए, नो से कप्पइ पडि-गाहेत्तए (१४) सागारियस्स नायए सिया सागारियस्स अभिनिव्वगडाए एगदुवाराए एगनिक्खमणपवेसाए

व्य. सू. ९-१६ ॥४॥

अंतो सागारियस्स अभिनिपयाए सागारियं च उवजीवति, तम्हा दावए, नो से कप्पइ पडिगाहेत्तए (१५) सागारियस्स नायए सिया सागारियस्स अभिनिव्वगडाए एगदुवाराए एगनिक्खमणपवेसाए बाहिं सागारियस्स एगपयाए सागारियं च उवजीवइ, तम्हा दावए, नो से कप्पइ पडिगाहेत्तए (१६) सागारियस्स नायए सिया सागारियस्स अभिनिव्वगडाए एगदुवाराए एगनिक्खमणपवेसाए बाहिं सागारियस्स अभिनिपयाए सागारियं च उवजीवइ, तम्हा दावए, नो से कप्पइ पडिगाहेत्तए।

अत्र अभिनिव्वगडाए पृथग्गृहे एकद्वारे एकनिष्क्रमणप्रवेशे एकनिवेशनान्तर्वर्तित्वात्तथा अभिनिपयाए इति अभि प्रत्येकं नियता विविक्ता प्रजा चुल्ली अभिनिप्रजा तस्यां, शेषं सुगमं संप्रति भाष्यविस्तरः—

पुरपच्छसंथुतो वावि नायतो उभयसंथुतो वावि। एगवगडा घरं तु पया उ चुल्ली समक्खया ॥१४॥

ज्ञातको नाम पूर्वसंस्तुतो यदि वा पश्चात्संस्तुतोऽथवा उभयसंस्तुतः स्वजनः, पूर्वसंस्तुतो नाम मातापितृपक्षवर्ती, पश्चात्संस्तुतो भार्यापक्षगत, उभयसंस्तुतस्तथाविधनात्रा सम्बन्धविशेषभावत उभयपक्षवर्ती, एकवगडा नाम एकं गृहं, प्रजा तु चुल्ली समाख्याता, प्रकर्षेण जायते पाकनिष्पत्तिरस्यामिति प्रजेति व्युत्पत्तेः।

एगपए अभिनिपए अट्ठहिं सुत्तेहिं मग्गणा जत्थ। सागारियदोसेहिं पसंगदोसेहिं य अगज्झं ॥१५॥

एकस्यां प्रजायामभिनिप्रजायां प्रत्येकं विविक्तायां प्रजायामष्टभिः सूत्रैःपिण्डस्य मार्गणा यत्र येषु सूत्रेषु प्रथमतृतीयेषु पञ्चमसप्तमरूपेषु

उ. ९. भा. सागारिकदोषैर्द्वितीयचतुर्थषष्ठाष्टमेष्वथ प्रसङ्गदोषैर्भक्तपानमग्राह्यम् ।
१४-१९ आइल्ला चउरो सुत्ता चउक्कसालदवेक्खतो । पिहघरेसु चत्तारि सुत्ता एक्कनिवेसणे ॥१६॥
॥४॥ आदिमानि चत्वारि सूत्राणि एकग्रहविषयाणि चतुःशाल्याद्यपेक्षातश्चतुःशालादावेव द्वयोः कुडम्बयोरवस्थानघटनात् अन्तिमानि चत्वारि सूत्राणि पृथग्गृहेषु तान्यप्येकस्मिन्निवेशने परिक्षेपे ॥

सागारियस्स दोसा चउसु पसंगदोसा य । भद्दगपंतादीया चउसु पि कम्मेण नायव्वा ॥१७॥

१८ चतुर्थप्रथमतृतीयपंचमसप्तमरूपेषु सूत्रेषु सागारिकस्य दोषाः शय्यातरपिण्डग्रहणे ते दोषास्तत्र ज्ञातव्या इत्यर्थः । चतुर्षु द्वितीय-चतुर्थषष्ठाष्टमादिरूपेषु सूत्रेषु प्रसङ्गदोषाश्चतुर्ष्वपि सूत्रेषु यथोक्तक्रमेण ज्ञातव्या, भद्रकप्रान्तादिकृता आदिशब्दात् तरतमविशेषपरिग्राहकः । अथ कथं प्रथमतृतीयादिषु चतुर्षु सूत्रेषु शय्यातरदोषाः कथं चान्यत्रप्रसंगदोषास्तत्राह—

दारुगलोणे गोरससूवोदग अंबिले य सागफले । उवजीवइ सागारियं एगपए वावि अभिनिपए ॥१८॥

दारु काष्ठं लवणं गोरसं च प्रतीतं सूपो मुद्गादि उदकमाम्लं शाकफलानि च प्रतीतानि यस्मात्सागारियमिति षष्ठ्यर्थे द्वितीया
२२ प्राकृतत्वात्सागारिकस्य सत्कानेकस्यां प्रजायां प्रत्येकं विविक्तायां वा प्रजायामुपजीवति तेन कारणेन सागारिकदोषाश्च प्रसजन्ति । एतेन सागारियं च उवजीवति इति व्याख्यातं । कस्मादेकां चुल्लीं प्रतिपद्यन्ते तत आह—

भीयाइं करभयस्स य अंतो वाहिं व होज्ज एकपया । अभिनिपए वि न कप्पइ पक्खेवगमादिणो दोसा ॥१९॥

२६ भीतानि चुल्लीकरभयात्, गाथायां षष्ठी पञ्चम्यर्थे सम्बन्धविवक्षायां वा षष्ठी, यस्माच्चुल्लीकरभयात्तानि भीतानि तेन कारणे-

नान्तर्वहिर्वा तेषामेका प्रजा चुल्ली भवति। अभिनिप्रजायां तु सत्यां यद्यपि सागारिकसत्कमुपजीव्यते तथापि निर्भिन्नचुल्लीकतया यत् गृह्यते तत्तेषामेव भवतीति सागारिकदोषा न भवन्ति। तथापि प्रसङ्गदोषतो न कल्पते तथा चाह—अभिनिप्रजायामपि न कल्पते यतो भद्रकप्रान्तकृताः प्रक्षेपादयो दोषाः, भद्रकः प्रक्षेपादीन् दोषान् कारयेत्। प्रान्तो विनाशप्रभृतीन् तानेवाह—

जं देसी तं देमो एए घेत्तुं न इच्छते अम्हं। अहवा वि अकुलजोत्ति य गेण्हंति अदिट्ठमादीयं ॥२०॥

भद्रका ब्रुवते त्वं साधुभ्यः प्रभूतं देहि यद्ददासि तद्द्वयं तव दास्यामः। यत एतेऽस्माकं गृहे नेच्छंति ग्रहीतुं गाथायामेकवचनं प्राकृतत्वात्, एवं भद्रककृताः प्रक्षेपादयो दोषाः अथवा प्रान्तो ब्रूते अकुलजा एते इति कृत्वा अदृष्टादिकं गृह्णन्ति। एवं गर्हां करोत्यतिप्रान्तो विनाशमपि, अत्रैवापवादमुपदर्शयति।

बिइयपदे अदिट्ठगहणं असती तव्वाज्जिएण दिट्ठस्स। दिट्ठेवि पत्थियाण गहणं अन्तो व बाहिं वा ॥२१॥

द्वितीयपदेनापवादपदेन यदि न केनापि दीयमानं दृष्टं तदा तस्यादृष्टस्य ग्रहणं, अथ सर्वथा केनाप्यदृष्टं न प्राप्यते तदा तद्भावे तद्वर्जितेन दृष्टस्य ग्रहणं तथा प्रस्थितानां गन्तुं चलितानां सागारिकेण दृष्टेऽपि दर्शनेऽपि अन्तर्बहिर्वा ग्रहणं भवति।

**सूत्रम् १७—सागारियस्स चक्कियासाला साहारणवक्कयपउत्ता, तम्हा दावए, नो से कप्पइ पडिगाहेत्तए। १८—सागारियस्स वक्कयासाला निस्साहारणवक्कयपउत्ता, तम्हा दावए, एवं से कप्पति पडिगाहित्तए। १९—सारियस्स गोलियसाला॰ बोधियसाला॰ दोसियसाला॰ सोत्तियसाला॰ गंधियसाला॰ बोदियसाला॰ जहा एवं से कप्पइ पडिगाहेत्तए ॥ १९—३०** अस्य सूत्रकदम्बकस्य सम्बन्धमाह—

**साधारणमेगपयत्ति किच्च तहियं निवारियं गहणं । इदमवि सामण्णं वि य साहारणसालसु यजोगो ॥२२॥**

अनन्तरसूत्रेष्वेकस्यां प्रजायां साधारणमिति कृत्वा तत्र ग्रहणं निवारितं, इदमपि च वक्ष्यमाणं साधारणसालासु सामान्यं साधारणमतो निषिध्यते । अनेन सम्बन्धेनायातस्यास्य व्याख्या सागारिकस्य शय्यातरस्य चक्रिकाशाला तैलविक्रयशाला इत्यर्थः । सागारिकेणात्मना सह साधारणावक्रयर्मयुक्ता यत्तस्यां शालायां प्रक्षिप्यते । यश्च तस्य लाभः सागारिकेण साधारण इत्यर्थः । तस्मात् शालाया मध्यात् यत्साधूचितं तैलादिकमन्यो दापयति तत्से तस्य साधोर्न कल्पते इति प्रथमसूत्रार्थः । तथा सागारिकस्य चक्रिकाशाला तैलविक्रयशाला सा निस्साधारणा वक्रययुक्ता न किमपि सागारिकसाधारणं तत्र भाण्डं प्रक्षिप्तमस्तीति भावः तस्मात् निस्साधारणावक्रयशालामध्यात् दापयति एवं से तस्य साधोः कल्पते प्रतिगृहीतुं एष द्वितीय सूत्रार्थः । एवं कोलिकशालाबोधिकशालादौषिकशालासोत्तिकशालागन्धिकशालाबोदियशालासूत्राण्यपि भावनीयानि । सूत्रपाठस्त्वेवं द्रष्टव्यः । सागारियस्स गोलियसाला दावए एवं से कप्पइ पडिसाहारणा वक्कयपउत्ता तम्हा दावए नो से कप्पइ पडिगाहेत्तए, सागरियस्स गोलियसाला निस्साहारणा वक्कयपउत्ता तम्हा गाहित्तए । एवं वोधिकशालादिसूत्रपाठोऽपि द्रष्टव्यः । सम्प्रति चक्रिकादिशब्दव्याख्यानार्थमाह–

**तेल्लियगोलियगोणियदोसियसुत्तियबोहिकप्पासो । गंधिय सौंडियसाला जा अण्णा एवमादी उ ॥२३॥**

चक्रिका नाम तैलिकास्तैलिकचक्रकारिणः । एवं गोलिका लावणिका दौषिकाः सौत्रिकाः वोधिकाः कार्पासा गन्धिकाशाला शौण्डिकशाला अपि अन्या च या एवमादिका गन्धप्रधाना सा गन्धिकशालेत्युच्यते ।

**ववहारे उद्देसंमि नवमए जत्तिया भवे साला । तासिं परिपिंडियाणं साहारणवज्जिए गहणं ॥२४॥**

व्यवहारे नवमे उद्देशके यावत्यः शालाः शालासूत्राणि भवन्ति विद्यन्ते तासां सर्वासां परिपिण्डितानामयं तात्पर्यार्थः। यत्र साधारण-

व्य. सू. २७-३० ॥६॥ मविभक्तं क्रमाणकं तत्र प्रतिषेधः साधारणवर्जिते तु ग्रहणं। सम्प्रति साधारणशब्द-शालाशब्दव्याख्यानार्थमाह-

**साहारण सामन्नं अविभत्तमच्छिन्नसंथडेगट्ठं। सालत्ति आवणत्ति य पणिअ गिहं चेव एगट्ठं ॥२५॥**

साधारणं सामान्यमविभक्तमच्छिन्नं संस्तृतमिति एकार्थं, एते सर्वेऽपि शब्दा एकार्थिका इत्यर्थः। शाला इति वा आपण इति वा

४ पणितमिति वा गृहमिति वा एकार्थः।

**साहारणा उ साला दव्वे मीसंमि आवणे भंडे। साहारणवक्कपउत्ते छिन्नं वोच्छं अच्छिन्नं वा ॥२६॥**

साधारणा तु शाला भण्यते मिश्रे द्रव्ये सति किमुक्तं भवति। अन्यस्यापि अन्यस्यापि तिला एकत्र मिश्रयित्वा पीलयन्ते पीलयित्वा

८ च एकत्र विक्रीणन्ति। अथवा साधारणेनावक्रयेण युक्ते आपणे भाण्डे वा क्रयाणके साधारणा शाला भवति। तथा छिन्नमच्छिन्नं वा

वक्ष्ये एप गाथासंक्षेपार्थः। साम्प्रतमेनामेव विवरीषुः प्रथमतो द्रव्ये मिश्रे इति व्याख्यानयति।

**पीलंति एक्कतो वा विक्कंति य एक्कतो करिय तेल्लं। अहवावि चक्कएणं साहारणवक्कयं जाणें ॥२७॥**

अन्यस्यान्यस्य तिलानेकत्र संमीलयित्वा पीलयन्ति ततो विक्रीणन्ति अथवा पृथक् पृथक् तिलान् पीलयित्वा तैलं कृत्वा एकत्र

विक्रीणन्ति। तदेवं द्रव्ये मिश्रे साधारणावक्रयप्रयुक्ता शाला व्याख्याता। अथवान्यथा साधारणावक्रयप्रयुक्तेति व्याख्यानयति। अथवा

१२ वक्रयेण भाटकेन या साधारणाशाला प्रयुक्ता व्यापारिता तत्र यल्लभ्यते भाण्डकं तत् शय्यातरस्यान्येषां वा शय्यातराणां साधारणमिति

साधारणावक्रयप्रयुक्तं जानीहि। अत्र यथा कल्पते यथा वा न कल्पते तथा प्रतिपादयति।

पीलिय विरेडियंमी पुव्वगमेणं तु गहणमदिट्टे । एगत्थ विक्कयंमी अमेलियादिट्ठ अन्नत्थ ॥२८॥

अन्यस्यान्यस्य तिलानेकत्र मीलयित्वा पीलयित्वा च तैले विरेचिते विभक्तीकृते पूर्वगमेन पूर्वप्रकारेण शय्यातरेणादृष्टे ग्रहणं भवति, दृष्टे तु न कल्पते, मा प्रक्षेपकं कुर्यादिति हेतोरन्यत्र नीतं तु कल्पत एव, तथा पृथक् एव तिलान् पीलयित्वा च एकत्र विक्रीणन्ति । तत एकत्र विक्रये यावन्मूल्यं मिलितमविभक्तमित्यर्थः तावन्न कल्पते इत्यर्थः । अमीलिते मूल्यकरणेन विभक्तीकृते सागारिकेणादृष्टं स तु कल्पते, दृष्टे प्रक्षेपदोषसंभवात् । अन्यत्र पुनः स्वयोगेन नीतं निःशङ्कं कल्पते । सांप्रतमापणं साधारणावक्रयप्रयुक्तं व्याख्यानयति–

जो उ लाभगभावेण पउत्तो होति आवणो । सा उ साहारणा होइ तत्थ घेत्तुं न कप्पइ ॥२९॥

यस्तु सागारिकेन लाभभागेन त्रिभागादिना आपणः प्रयुक्तो भवति स साधारणो भवत्यापणस्ततस्तत्र गृहीतुं न कल्पते । साम्प्रतं भाण्डं साधारणावक्रयप्रयुक्तं व्याख्यानयति–

छेदे वा लाभे वा सागारितो जत्थ होइ आभागी । तं तु साधारणं जाणे सेसमसाहारणं होइ ॥३०॥

यत्र भाण्डे च्छेदे लाभे वा सागारिकार्द्धेन त्रिभागादिना वा आभागी भवति तत् भाण्डं साधारणं साधारणावक्रयप्रयुक्तं जानीयात् । एतद् व्यतिरिक्तं शेषं भाण्डमसाधारणं भवति । साधारणे च भाण्डं यावत् तं न विभज्यते, तावत्सागारिकपिण्डो, विभक्ते तु कल्पते तत्रापि प्रक्षेपदोषप्रसङ्गतो दृष्टे न कल्पते, अदृष्टे तु कल्पते । यदा तु सा शाला भाटकप्रदानेन गृहीता कालेन मया तवैतावत् दातव्यं । न च भाण्डं शय्यातरेण सह च्छेदे लाभे वा त्रिभागादिना साधारणं तत्राप्यसाधारणे अदृष्टे कल्पते दृष्टे तु प्रक्षेपदोषप्रसङ्गतो नेति । सम्प्रति च्छिन्नं वोच्छं अच्छिन्नं वा रद्द इति व्याख्यानार्थमाह–

व्य. सू. १७-३० ॥७॥

सचित्तअचित्तमीसेण य जा प्पउंजए साला । तद्दव्वमन्नदव्वेण होइ साहारणं तं तु ॥३१॥

सचित्तेन अचित्तेन गाथायां सप्तमी तृतीयार्थे वा कृतत्वेन मिश्रेण च प्रयुज्यते । शाला किं विशिष्टेन सचित्तादिनेत्यत आह-द्रव्येण वा तद्द्रव्यं नाम यत् शालायां प्रक्षिप्तमस्ति अन्यद् द्रव्यं तद्व्यतिरिक्तं द्रव्यमियमत्र भावना । यत् शालायां प्रक्षिप्तं सचित्तमचित्तं मिश्रं वा कार्पासादि तस्य त्रिभागादि दातव्यम् । यदि वा यन्निष्पद्यते कर्पासादिभ्यो वस्त्रादिकमन्यत् तस्य त्रिभागादि दातव्यमिति तत् भवति साधारणमच्छिन्नं द्रव्यं तन्न कल्पते । सम्प्रति च्छिन्नमाह-

तद्दव्वमन्नदव्वेण वावि च्छिन्ने वि गहणमदिट्ठे । मा खलु पसंगदोसा संछोभ भातिं व मुंचेज्जा ॥३२॥

तत् द्रव्यं यत् शालायां प्रक्षिप्तं अन्यद्द्रव्यं तद्व्यतिरिक्तं एतावता कालेन द्रव्यं वा मयैतावद्दातव्यमित्येवं तत् द्रव्येण अन्यद्द्रव्येण च्छिन्नेऽपि विभक्तीकृतेऽपि ग्रहणमदृष्टे शय्यातरेण कल्पते न दृष्टे; कुत इत्याह-मा खलु प्रसङ्गदोषाः स्युरिति कृत्वा एतदेव संच्छोभो नाम प्रक्षेपस्तं कुर्यात् भृतिं वा मूल्यं मुञ्चेत् यावदुपकुरुते साधूनां तावद्ददस्व द्रव्यं, भृतिमध्यात् पातनीयमिति ।

जंपि य न एइ गहणं फलकप्पासो सुरादि वा लोणं । फासंमि उ सामन्नं न कप्पए जं तहिं पडियं ॥३३॥

यद्यपि च प्रासुकतया ग्रहणं नागच्छति तद्यथा फलमाम्रादि कर्पासः सुरादिरादिशब्दात् सरकादिग्रहणं लवणं । एतान्यप्राशुकान्यपि कदाचित्कारणे गृह्यन्ते तत एवमुक्तं, प्रासुकमपि तु वस्त्रादि यत्तत्र शालायां शय्यातरेण सह साधारणं तु न कल्पते, तदेव दोषिकशाला-मधिकृत्य दर्शयति ।

अंडजबोंडजवालज वागज तह कीडजाणवत्थाणं । नाणादिसागयाणं साधारणवज्जिते गहणं ॥३४॥

अण्डजानां वसरिसूत्रमयानां वोण्डजानां कर्पासिकसूत्रमयानां बालजानां कम्बलानां वल्कलजानां शणत्वग्मयानां कीटजानां वस्त्राणां नानादेशागतानां प्रयोजने समापतिते साधारणवर्जिते सागारिकेण सह साधारणरहिते आपणे ग्रहणं भवति दोषाभावात् । दृष्टादृष्टविभाषा प्राग्वत् ॥

१८ सागारिय सोहिय साला ॥ सू. ३१–३२ ( टीका प्राग्वत् )

सागारियस्स ओसहीओ संथडाओ तम्हा दावए नो से कप्पइ पडिगाहेत्तए ॥ ३३ ॥ सारियस्स ओसहीओ असंथडाओ तम्हा दावए, एवं से कप्पइ पडिगाहेत्तए ॥३४॥ सारियस्स अम्बफला (जहा २७–२८) एवं से कप्पइ पडिगाहेत्तए ॥ सू. ३५–३६ ॥—अस्य सूत्रचतुष्टयस्स संबंधप्रतिपादनार्थमाह—

सागारियंमि पगते साहारणभोय समणुवत्तंते । उसहिफलसुत्ताणं वंजणनाणत्तओ जोगो ॥३५॥

२२ सागारिके पूर्वसूत्रेभ्यः प्रकृते साधारणे समनुवर्तमाने तत्प्रस्तावमुपजीव्य औषधिफलसूत्राणामुपनिपातः कृतः। यद्येवमयमर्थः पूर्वं सूत्रेभ्य एव गते इति किमर्थममून्युपात्तानीत्यत आह व्यञ्जननानात्वात्किमुक्तं भवति पूर्वं शालामधिकृत्य कल्पाकल्पविधिरुक्त इदानीं तु तान्येव व्यञ्जनान्यधिकृत्य सोच्यते । ततो व्यंजनैर्नानात्वभेदाददोषः, एप योगः सम्बन्धः। अस्य व्याख्या सागारिकस्य शय्यातरस्य
२६ औषधयो गोरसवत्यां संवृताः साधारणास्तस्मात् तन्मध्याद्दापयति सूपकारो न कल्पते से तस्य साधोः प्रतिग्रहीतुं तथा सागारिकस्यौषधयोऽसंस्कृता असाधारणास्तस्माद्दापयति एवं से तस्य कल्पते प्रतिग्रहीतुमेवमाम्रफलसूत्रद्वयमपि भावनीयम्। सम्प्रति भाष्यप्रपञ्चः तत्रौपधिप्रतिपादनार्थमाह—

व्य. सू. ३१-३६ ॥८॥

गोरस गुल तिल्ल घतादि उसहीतो व होंति जा अण्णा। सूअस्स कठलेणं तु ता संथडसंथडा हुंति ॥३६॥

गोरस गुल तिल्ल घतादि उसहीतो व होंति जा अण्णा। सूअस्स कठलेणं तु ता संथडसंथडा हुंति ॥३६॥ गोरसगुडतैलघृताद्या औषधयोऽन्या वा या भवन्ति ता द्विविधाः सागारिकेण सह सूतस्य (सूपकारस्य) काष्ठलयने इन्धनगृहे या

सूतस्य (सूपकारस्य) काष्ठलयने इन्धनगृहे या गोरसगुडतैलघृताद्या औषधयोऽन्या वा या भवन्ति ता द्विविधाः सागारिकेण सह संस्कृताः साधारणा भवन्ति असंस्कृता वा असाधारणा वा। कथं पुनः साधारणास्तत आह–

संस्कृताः साधारणा भवन्ति असंस्कृता वा असाधारणा वा। कथं पुनः साधारणास्तत आह–

धुव आवाह विवाहे जण्णे सद्धे य करडुय छण्णे य। विविहातो ओसहीउ वाणीता भत्तसूत्तस्स ॥३७॥

जं दठ विदठं वा जो वा तह भत्तसेस उवारो। लभइ जइ सूवकारो अविरिक्कं पि हु न लब्भा ॥३८॥

ध्रुवं सर्वकालमुपस्करोति सूपकारो भोजिकानामावाहो दारकपक्षिणां, वीवाहो वधूपक्षिणां, यज्ञो नागयज्ञादि श्राद्धं धिग्जाति-जनप्रतीतं, करडुकं मृतकभक्तं, क्षण इन्द्रमहादिरेतेषु सूपकार आनीयते तस्य भक्तभूतस्य सूपकारकस्य विविधा औषधयः पूर्वभणिता उपनीता ढौकितास्तत्र यत् दग्धमीषत् विदग्धं वा प्रभूतं दग्धं यो वा तत्र भक्तशेषस्योद्धारो भक्तशेषं यत्रोद्धरितमित्यर्थः। तद्यदि लभते सूपकारस्ततस्तत्कल्पते, अविरिक्तं अविभक्तीकृतं तदापि दग्धविदग्धादि हु निश्चितं ग्रहीतुं दातुं वा न लभते, ततस्तं न कल्पते। एतदेवाह–

जनप्रतीतं, करडुकं मृतकभक्तं, क्षण इन्द्रमहादिरेतेषु सूपकार आनीयते तस्य भक्तभूतस्य सूपकारकस्य विविधा औषधयः पूर्वभणिता उपनीता ढौकितास्तत्र यत् दग्धमीषत् विदग्धं वा प्रभूतं दग्धं यो वा तत्र भक्तशेषस्योद्धारो भक्तशेषं यत्रोद्धरितमित्यर्थः। तद्यदि लभते

उपनीता ढौकितास्तत्र यत् दग्धमीषत् विदग्धं वा प्रभूतं दग्धं यो वा तत्र भक्तशेषस्योद्धारो भक्तशेषं यत्रोद्धरितमित्यर्थः। तद्यदि लभते सूपकारस्ततस्तत्कल्पते, अविरिक्तं अविभक्तीकृतं तदापि दग्धविदग्धादि हु निश्चितं ग्रहीतुं दातुं वा न लभते, ततस्तं न कल्पते। एतदेवाह–

अविरिक्को खलु पिंडो सो च्चेव विरेइतो अपिंडो उ। भद्दगपंतादीया धुवा उ दोसा विरेकेवि ॥३९॥

अविरिक्तोऽविभक्तीकृतः खलु भवति पिण्डः सागारिकपिंडः स एव विरेचितः पृथक्कृतो भवत्यपिंडः सागारिकपिण्डो न भवतीति भावः। यद्येवं तर्हि स ग्राह्यस्तत आह–विरिक्तेऽपि ध्रुवाभद्रकप्रान्तादिका दोषास्तस्मात्तत्रापि–

भावः। यद्येवं तर्हि स ग्राह्यस्तत आह–विरिक्तेऽपि ध्रुवाभद्रकप्रान्तादिका दोषास्तस्मात्तत्रापि–

जा उ संथडियाओ सागारिय व संतिया ण खलु कप्पे, जाओ असंथडियाओ सूतस्स य ताओ कप्पंति ॥४०॥

जा उ संथडियाओ सागारिय व संतिया ण खलु कप्पे, जाओ असंथडियाओ सूतस्स य ताओ कप्पंति ॥४०॥ सागारिकसत्का असागारिकेण सह संस्तृतास्ताः खलु न कल्पन्ते यास्त्वसंस्तृताः सूतस्य सूपकारस्य सम्बन्धितया जातास्ताः

सागारिकसत्का असागारिकेण सह संस्तृतास्ताः खलु न कल्पन्ते यास्त्वसंस्तृताः सूतस्य सूपकारस्य सम्बन्धितया जातास्ताः

उ. ९, भा. ३६-४४ ॥८॥ कल्पन्ते। तदेवमौषधिसूत्रद्वयं भावितमधुनाम्रफलसूत्रद्वयं भावयति–

वल्ली वा रुक्खो वा सागारियसंति उ भएज्ज परं। तेसि परिभोगकाले समणाण तहिं कहं भणियं ॥४१॥

वल्ली बा सागारिकसत्को वृक्षो वा सागारिकसम्बन्धिपरम्परस्यावग्रहं भजेत्। तत्र तेषां वल्लीवृक्षाणां फलपरिभोगकाले श्रमणानां
१८ कथं भणितं किं कल्पते किं वा न कल्पते इति एष गाथासंक्षेपार्थः। साम्प्रतमेनामेव व्याचिख्यासुः प्रथमतो वृक्षवल्लीव्याख्यानमाह–

फणसं व चिंच तलनालिकेरमादी हवंति फलरुक्खा। लोमसिय तउसि मुदिय तंबोलादी य वल्लीतो ॥४२॥

पनस आम्रश्चिञ्चा चिञ्चनिका आम्बिली इत्यर्थः। तलस्तालो नालिकेरी इत्येवमादयो भवन्ति फलवृक्षाः, लोमसिका त्रपुषिका ताम्बूलीका इत्येवमादिका वल्ल्यः तदेवं वृक्षा वल्ल्यश्चोक्ताः। सम्प्रति भएज्जपरिमित्यस्य व्याख्यानमाह–

२२ परोग्गहं तु सालेणं अक्कमेज्ज महीरुहो। छिंदामित्ति य तेणुत्ते ववहारो तहिं भवे ॥४३॥

महीरुहो वृक्ष आम्रादिः सागारिकसक्तः। शालया शाखया गाथायां पुंस्त्वं प्राकृतत्वात् विवर्धमानः परावग्रहमाक्रमेत्। अत्र परो ब्रूते इयं शाखामदीयमवग्रहमाक्रामति। ततश्छिनद्मि एवं तेनोक्ते व्यवहारस्तत्र भवेत्कथमित्याह–

सागारियस्स तहियं केवतिओ उग्गहो मुणेयव्वो। ववहार तिहा च्छिन्नो पासाय गडे बिती तिरिए ॥४४॥

२६ सागारिकस्य शय्यातरस्य कियान् अवग्रहो ज्ञातव्य इति व्यवहारकारिभिश्चिन्तितं ततः शास्त्रं परिभाव्य व्यवहारस्त्रिधा ऊर्ध्वाधस्तिर्यग्भेदतश्छिन्नः। तत्र ऊर्ध्वतोऽवग्रहस्य परिमाणे प्रासादो यावत्प्रमाणमूर्ध्वं प्रासादस्योक्तं तावदूर्ध्वमवग्रह इत्यर्थः। अधोऽवग्रह प्रमाणं पानीयं प्रमाणमित्यर्थः। तिर्यग्वृत्तिः एतदेवाह–

व्य. सू. ३१-३६ ॥९॥

उड्ढं अहे य तिरियं परिमाणं तु वत्थुणं। खायमुसियमीसं वा, तं वुच्छंति हो दियं ॥४५॥

ऊर्ध्वमधस्तिर्यक्त्वपरिमाणं वास्तूनां भवति तच्च वास्तु त्रिधोदितं तद्यथा—खातमुच्छ्रितं मिश्रं च खातोच्छ्रितं तत्र ऊर्ध्वतः परिमाणमाह—

अट्ठसयं चक्कीणं चोयट्ठी चेव वासुदेवाणं। बत्तीसं मंडलीए सोलसहत्था उ पागतिए ॥४६॥

अष्टाधिकं शतं हस्तानामूर्ध्वतश्चक्रवर्तिनां प्रासादो भवति। चतुःषष्टिर्वासुदेवानां द्वात्रिंशत् माण्डलिकस्य षोडशहस्ताः प्राकृतिके प्राकृतजनसम्बन्धिनि प्रासादे।

भवणुज्जाणादीणं एसुस्सेहो उ वत्थुविज्जाए। भणितो सिप्पिनिहिम्मि उ चक्कीमादीणि सव्वेंसि ॥४७॥

शिल्पिनिधौ वास्तुविद्यायां सर्वेषामपि चक्रवर्त्यादीनां भवनोद्यानादीनामेष उत्सेधो भणितस्ततः षोडशहस्ता ऊर्ध्वतोऽवग्रहस्य परिमाणमधो यावत् पानीयं तिर्यग्वृत्तिरिति।

एवं च्छिन्ने उ ववहारे परो भणइ सारियं। कप्पेमि हंते सालाई ततो भणइ (आह) सारितो ॥४८॥

एवमुक्तेन प्रकारेण व्यवहारे च्छिन्ने परः सागारिकं भणति कल्पयामि च्छिनद्मि अहं तवाम्रादिवृक्षसत्कं शाखादि, आदिशब्दात् प्रशाखापल्लवादिपरिग्रहस्तत आह सागारिकः।

मा मे कप्पेहि सालादि दाहंते फलनिक्कयं। तत्थ च्छिन्ने अच्छिन्ने वा सुत्तसाफल्लमाहियं ॥४९॥

मा मम वृक्षस्य शाखादि कल्पय यतस्ते फलानि निष्क्रयं दास्यामि। तत्र एतावन्ति फलानि दातव्यानीति च्छिन्नं, सामान्यतः फलानि दातव्यानीत्यच्छिन्नं तत्र च्छिन्ने अच्छिन्ने वा यथायोगं सूत्रद्वयस्य साफल्यमाख्यातम्। अत्र पर आह—

साहूणं व न कप्पइ सुत्तमाहु निरत्थयं। गेलन्नाण उमेसु गहणं तेसि देसियं ॥५०॥

उ. ९. भा. ४५-५४ ॥९॥ आचार्य आह-तेषामाम्रफलानां ग्लानत्वे अध्वनि

केचिदाहुः सूत्रद्वयमिदं निरर्थकं यतः साधूनामाम्राणि सचितत्वान्न कल्पन्ते।

शेषभिक्षाया अलाभे अवमौदर्ये च ग्रहणं देशितं कथितं महर्षिभिः। अतो न निरर्थकमिति-

अविरिक्कसारिपिंडो विरिक्काविय सारि दिट्ठ न विकप्पे। अदिठ सारिएणं कप्पंति ताहि घेत्तुं जे ॥५१॥

१८ अविरिक्तान्यविभक्तानि फलानि सागारिकपिंडस्ततो न कल्पंते, विभक्तान्यपि च सागारिकेण दृष्टानि न वै कल्पन्ते ततो अदृष्टानि

सागारिकेण ग्रहीतुं कल्पन्ते। जे इति पादपूरणे। उपसंहारमाह-

एवं अत्तट्ठाए सयं परूढाण वावि भाणियमिणं। इणमन्नो आरंभो समणट्ठा वाविए तम्मि ॥५२॥

एवमुक्तप्रकारेणात्मार्थमारोपितानां स्वयं वा प्ररूढानामिदमनन्तरोक्तं भणितम्। साम्प्रतमस्मिन् वृक्षे श्रमणार्थं वापिते अयं

२२ वक्ष्यमाणोऽन्य आरंभस्तमेव दर्शयति-

वल्ली वा रुक्खो वा कोई रोएज्ज संजयठाए। तेसि परिभोगकाले समणाण ताहिं कहं भाणियं ॥५३॥

वल्लीर्वा वृक्षान्वा कश्चित्संयतानामर्थाय रोपयेत्। तत्र तेषां फलानां परिभोगकाले श्रमणानां कथं भणितं किं कल्पते किंवा न

कल्पते इत्यर्थः। अत्र सूरिराह-

२६ तस्स कड निट्ठियादी चउरो भंगे विभावइत्ताण विसमेसु। जाण विसमं नियमा उ समो समग्गहणे ॥५४॥

तस्य कृतं तत्तस्य निष्ठितमिति प्रथमः, तस्य कृतमन्यस्य निष्ठितमिति द्वितीयः, अन्यस्य कृतं तस्य निष्ठितमिति तृतीयः, अन्यस्य

व्य. सू. ३१-३६ ॥१०॥

निष्ठितं निष्ठां नीतम-
कृतमन्यस्य निष्ठितमिति चतुर्थः। तत्र तस्य संयतस्य निमित्तं कृतमारोपितं वृक्षादि तथा तस्यैव संयतस्य निमित्तं निष्ठितं निष्ठां नीतम-
चित्तीकृतमित्यर्थः एष प्रथमभङ्गार्थः। एवं शेषाणामपि भङ्गानामर्थः परिभावनीयः, तत्र तस्य कृतं तस्य निष्ठितमित्यादीन् चतुरो भङ्गान्
विभाव्य विषमयोर्भङ्गयोर्गृह्णतोर्विषममसंयमं जानीयात्तन्निमित्तं निष्ठानयनात् समयोर्द्वितीयचतुर्थयोर्भङ्गयोर्ग्रहणे समं संयमं जानीयात्
अन्यनिमित्तं निष्ठितत्वात्। पर आह—ननु श्रमणार्थं स आरोपितस्ततः कथं द्वितीये भङ्गे कल्पते ? सूरिराह—

**कामं सो समणट्ठा वुत्तो तहावि य न होइ सो कम्मं। जं कम्मलक्खणं खलु इह इं वुत्तं न पस्सामि ॥८५॥**

काममनुमन्यामहे स वृक्षः श्रमणार्थमारोपितः तथाप्यसौ कर्म न भवति यतो यत्कर्मलक्षणं खलु तीर्थंकरगणधरैर्भक्तं, तदिह इ पाठ
पूरणे, न पश्यामि किं तत्कर्म लक्षणमत आह—

**सचित्तभावविकलीकयंमि दव्वंमि मग्गणा होइ। कामग्गहणा उ दव्वे सचेयणे फासुभोईणं ॥८६॥**

यत्सचित्तभावविकलीकृतमचित्तीकृतं द्रव्यं तत्र प्रासुकभोजिनां मार्गणा भवति। तत आधाकर्मिकचिन्तापि तत्रैव युक्ता नान्यत्र
सचेतने तु द्रव्ये का मार्गणा नैव काचित् सचित्ततया तस्य ग्रहणासंभवात्ततो न तदपेक्षया आधाकर्मिकत्वमिति, तदेवमारोपितरूपकृतनि-
ष्ठितविषये कल्प्याकल्प्यविधिरुक्तः। सम्प्रति छिन्नरूपकृतनिष्ठितविषये तमाह—

**संजयहेउं छिन्नं अत्तट्ठोवक्खडं तु तं कप्पे। अत्तट्ठाछिन्नं पि हु समणा निट्ठियमकप्पं ॥८७॥**

अत्रापि भङ्गचतुष्टयं तस्य कृतं तस्य निष्ठितं १ तस्य कृतमन्यस्य निष्ठितं २ अन्यस्य कृतं तस्य निष्ठितं ३ अन्यस्यकृतमन्यस्य
निष्ठितं ४। अत्र कृतं छिन्नं पाकादिकरणतो निष्ठां नीतम्। तत्र प्रथमभङ्गे सर्वथा न कल्पते। चतुर्थस्तु भङ्ग एकान्तशुद्धो द्वितीयभङ्ग-

मधिकृत्य पूर्वार्धमाह–संयतहेतोः संयतनिमित्तं च्छिन्नमात्मार्थमुपस्कृतं निष्ठां नीतं तत्कल्पते तृतीयभङ्गमधिकृत्याह–आत्मार्थं च्छिन्नमपि श्रमणार्थनिष्ठितमकल्प्यं। सम्प्रति बीजान्युदकं चाधिकृत्याह–

**बीयाणि च वावेज्जा अगडं व खणेज्ज संजयट्ठाए। तेसि परिभोगकाले समणाणं तहिं कहं भणियं ॥५८॥**

बीजानि शाल्यादि सत्कानि वपेत् अवटं च खानयेत् संयतार्थं, तेषां परिभोगकाले तत्र श्रमणानां कथं भणितं कल्प्यमकल्प्यं वा। सूरिराह–

**दुच्छडाणियं च उदयं जइ हेउं निट्ठियं च अत्तट्ठा। तं कप्पइ अत्तट्ठा कयं तु जइ निट्ठियमकप्पं ॥५९॥**

अत्रापि प्रागिव भङ्गचतुष्टयं। तत्राद्यो भङ्ग एकान्तेनाशुद्धश्चरमस्त्वेकान्तशुद्धः द्वितीयभङ्गमधिकृत्याह–यतिहेतोस्तण्डुला द्विच्छडीकृता उदकं वा संयतहेतोरवटादानीतं उभयमपि च निष्ठितमचित्तीकृतमात्मार्थं तत् कल्पते। तृतीयभङ्गमधिकृत्याह–कृतं द्विच्छटीकृतास्तण्डुला अवटादानीतं पानीयं निष्ठितं तु यतिनिमित्तं तदकल्प्यमिति पुनरपि पर आह–

**समणाण संजतीण व दाहामि जो किणेज्ज अट्ठाए। गावीमहिसीमादी समणाण तहिं कहं भणियं ॥६०॥**

श्रमणानां संयतीनां दुग्धादि दास्यामीति बुद्ध्या तेषामर्थाय गोमहिष्यादिकं यः क्रीणीयात्तत्र श्रमणानां कथं कल्प्यमकल्प्यं वा भणितं सूरिराह–

**संजयहेउं दूढा न कप्पए य सयमट्ठा। पामिच्चिय कीया वा जइ वि समणट्ठया धेणू ॥६१॥**

यद्यपि व धेनुर्गोरूपा महिषीरूपा वा श्रमणार्थमयमित्यात्मीयां धेनुं दत्वा परकीया याचिता क्रीता वा यदि संयतहेतोर्दुग्धा ततो

न कल्पते । अथ स्वयमात्मनोऽर्थाय दुग्धा तर्हि कल्पते, पुनरन्यथा परः प्रश्नयति ।

व्य. सू. ३१-३६ ॥११॥

**चेइयदव्वं विभया करेज्ज केई नरो सयट्ठाए । समणं वा सोवहियं विक्केज्जा संजयट्ठाए ॥६२॥**

चैत्यद्रव्यं चौराः समुदायेनापहृत्य तन्मध्ये कश्चिन्नर आत्मीयेन भागेन स्वयमात्मनोऽर्थाय मोदकादि कुर्यात् । कृत्वा च संयतानां दद्यात् । यो वा संयतार्थाय श्रमणं सोपधिकं विक्रीय च तत्प्रासुकं वस्त्रादि संयतेभ्यो दद्यात् ।

**एयारिसंमि दव्वे समणाणं किंतु कप्पई घेत्तुं । चेइयदव्वेण कयं मुल्लेण वज्जं सुविहियाणं ॥६३॥**

**तेण पडिच्छा लोए विगरहिया उत्तरे किमंग पुण । चेइय जइ पडिणीए जो गेण्हइ सावि हु तहेव ॥६४॥**

एतादृशेन द्रव्येण, गाथायां सप्तमी तृतीयार्थे, यत् आत्मार्थं कृतं तत् श्रमणानां किं नु ग्रहीतुं कल्पते । सूरिराह—यच्चैत्यद्रव्येण यच्च वा सुविहितानां मूल्येनात्मार्थं कृतं तद्दीयमानं न कल्पते किं कारणमिति चेदुच्यते स्तेनानीतस्य प्रतीच्छा प्रतिग्रहणं लोकेऽपि गर्हिता किमङ्ग पुनरुत्तरे तत्र सुतरां गर्हिता यतश्चैत्ययतिप्रत्ययनीके चैत्ययतिप्रत्यनीकस्य हस्तात् यो गृह्णाति सोऽपि हु निश्चितं तथैव चैत्य-यतिप्रत्यनीक एव । कस्मादित्याह—

**हरिया हडिया सा खलु ससत्तितो उग्गये हरा गुरुगा । एवं तु कया भत्ती न वि हाणी जा विणा तेण ॥६५॥**

स खलु स्तेनानीतप्रतीच्छा हृताहृतिका भण्यते स्तेनैर्हृतस्य स्तेनहरणं हृताहृतिका यत एवं तस्मात्स्वशक्तितश्चैत्यद्रव्यं सोपधिकं वा श्रमणमुद्गमयेत् उत्पादयेत् । इतरथा प्रायश्चितं चत्वारो गुरुकाः । एवं च सति कृता भक्तिर्भवति । प्रवचनस्य या च तेन विना हानिः, सापि न भवति, पुनः पृच्छति—

जा तित्थयराणं कया वंदण आविरसणादि पाहुडिया । भत्तीहिं सुरवरेहिं समणाण तहिं कहं भाणियं ॥६६॥

या तीर्थकराणां सुरवरैर्भक्त्या वन्दना वर्षणादिका आदिशब्दात् पुष्पवृष्टिप्रकारत्रयादिकरणपरिग्रहः प्राभृतिका कृता तत्र श्रमणानां कथं भणितं । किं तत्र स्थातुं कल्पते न वा अत्र सूरिराह–

जइ समणाण न कप्पइ एयं एगाणि या जिणवरिंदा । गणहरमादी समणा अकप्पए न विं य चिट्ठंति ॥६७॥

तस्यां प्राभृतिकायां श्रमणानामवस्थातुं कल्पते भगवतः प्रवचनातीतत्वात् । अन्यच्च यदि श्रमणानां न कल्पते तत एकाकिनो जिनवरेन्द्रा भवेयुर्यतो गणधरादयः श्रमणा अकल्पिके नैव तिष्ठन्ति ।

तम्हा कप्पइ ठाउं जह सिद्धायणंमि होइ अविरुद्धं । जम्हा उ न साहम्मी सत्था अम्हं ततो कप्पे ॥६८॥

तस्मात्कल्पते स्थातुं यथा सिद्धायतने भवत्यवस्थानमविरुद्धं, तथात्रापीति भावः । यस्मात् शास्ता तीर्थंकरोऽस्माकं न साधर्मिकः प्रवचनातीतत्वात्ततः कल्पते एतदेवाह–

साहम्मियाण अट्ठो चउव्विहो लिंगओ जह कुडुंबी । मंगल सासयभत्तीए जं कयं तत्थ आदेसो ॥६९॥

साधर्मिकाणामर्थाय कृतं न कल्पते, स च चतुर्विधस्तत्र लिङ्गतोऽसाधर्मिकस्तीर्थंकरो यथा कुटुम्बी, ततस्तस्मिन्निमित्तं कृतं कल्पते, अन्यच्च भगवतां मङ्गलनिमित्तं शाश्वतो मोक्षस्तन्निमित्तं वा भक्त्या यत्क्रियते समवसरणमायतनं तत्रादेशोऽनुज्ञावस्थानस्येति भावः । सम्प्रत्यतिप्रसङ्गनिवारणार्थमाह–

जइ वि य नाहाकम्मं भत्तिकयं तह विवज्जियं तेहिं । भत्ती खलु होति कया जिणाण लोगेवि दिठं तु ॥७०॥

यद्यपि भक्तिकृतमायतनादि भवति तन्नाधारकर्म तथापि तद्वर्जयद्भिः खलु भक्तिर्जिनानां कृता भवति । इदं तु लोकेऽपि दृष्टं । तदेव दर्शयति ।

बंधित्ता कासवतो वयणं अट्ठपुडसुद्ध पोत्तीए । पत्थिवमुवासते खलु वित्तिनिमित्तं भया चेव ॥७१॥

काश्यपः कौटुम्बिको वृत्तिनिमित्तं भयाद्वा पार्थिवमुपास्ते खल्वष्टपुटया शुद्धया पोतिकया वदनं मुखं बध्वा एवमत्रापि पार्थिवस्थानीयायास्तीर्थंकरप्रतिमाया भक्तिनिमित्तं नायतनं प्रविशन्ति को दोष इत्यत आह–

दुब्भिगंध परिस्सावी तणुरप्पे सण्हाणिया । दुहा वायु वहो चेव तेण ठंति न चेतिए ॥७२॥

तिण्णि वा कड्ढए जाव थुतितो तिसिलोइय । तावत्थ अणुन्नायं कारणंमि परेण वि ॥७३॥

एषा तनुः स्नापितापि दुरभिगन्धप्रस्वेदपरिश्राविणी तथा द्विधा वायवोऽधोवायुनिर्गमः (१) उच्छ्वासनिःश्वासनिर्गमश्च (२) । तेन कारणेन चैत्ये चैत्यायतने साधवो न तिष्ठन्ति । अथवा श्रुतस्तवानन्तरं तिस्रः श्रुतीः त्रिश्लोकिकाः श्लोकत्रयप्रमाणा यावत्कर्षते तावत्तत्र चैत्यायतने स्थानमनुज्ञातं, कारणेन कारणवशात्परेणाप्यवस्थानमनुज्ञातमिति–

सूत्रम्–सत्तसत्तमिया णं भिक्खूपडिमा एगूणपन्नए राइंदिएहिं एगेण छन्नउएणं भिक्खासएणं अहासुत्तं अहाकप्पं अहामग्गं अहातच्चं अहासम्मं फासया पालिया तीरिया किट्टिया आणाए अणुपालिया भवइ ॥३७॥

अस्य संबंध प्रतिपादनार्थमाह–

सागारिय अग्गहणे अन्नाउंछं फुडं समक्खायं । सो होउ भिग्गहो खलु पडिमा य अभिग्गहो चेव ॥७४॥

उ. ९. भा० ७१-७५ ॥१२॥

अन्नाउंछं विसुद्धं घेत्तव्वं तस्स परीमाणं किं। कालंमि य भिक्खासु य इति पडिमासुत्तसंबंधो ॥७५॥

पूर्वसूत्रेषु सागारिकपिण्डो न ग्राह्य इत्युक्तं सागारिकपिंडाग्रहणे स्फुटमज्ञातोञ्छग्रहः खलु भवत्यभिग्रहः प्रतिमाप्यभिग्रहं अभिग्रह-प्रस्तावात्सागारिकसूत्रानन्तरं प्रतिमासूत्रस्योपनिपातः। अथवान्यथा सम्बन्धः सागारिकपिण्डप्रतिषेधतोऽज्ञातोञ्छविशुद्धं ग्रहीतव्यमित्या-ख्यातं, तस्य भिक्षाकालेषु किं परिमाणमिति प्रश्नावकाशमाशङ्क्य प्रतिमासूत्रमुपन्यस्तवान्। एष प्रतिमासूत्रसम्बन्धः। अनेन सम्बन्धे-नायातस्यास्य व्याख्या—सप्तसप्तका दिनानां यस्याः सा सप्तसप्तकिकाः सप्तकशब्दककारस्य मकारः प्राकृतत्वात्। णमिति वाक्यालङ्कारे भिक्षुप्रतिमा एकोनपञ्चाशता रात्रिंदिवैरेकेन षण्णवतेन भिक्षाशतेन यथासूत्रं सूत्रानतिक्रमेण यावत्करणात्—'अहाकप्पं अहामग्गं अहातच्चं अहासम्मं फासिया पालिता तीरिया किट्टिया अणुपालिया भवति' इति परिग्रहस्तत्र यथाकल्पं यथाविधि सूत्रोक्तविध्यनति-क्रमेणेत्यर्थः। यथामार्गं ज्ञानदर्शनचारित्राणामविराधनेन। अहातच्चंति यथातथ्यमेकान्ततः सूत्रानुसारेणापादितसत्यं। अहासम्मं यथा सम्यक् त्रिविधेनापि योगेनापरिताम्यता सम्यक्करणं। स्पर्शिता सेविता। विराधना रक्षणतः। अत एव शोधिता अतीचारलेशेनाप्यकलङ्क-नात्। तीरिता तीरं नीता पर्यन्तनीता इत्यर्थः। कीर्तिता आचार्याणां कथिता यथा प्रतिमा मया समाप्ता। आज्ञया तीर्थंकरोपदेशेन अत्र पालिता भवति। एवमष्टाष्टकिका नवनवकिका दशदशकिका सूत्राण्यपि भावनीयानि—

सूत्र—अट्ठअट्ठमियाणं भिक्खुपडिमा चउसट्ठिए राइंदिएहिं दोहिय अट्ठासिएहिं भिक्खासएहिं अहासुत्तं (जहा ३७) अणुपालिया भवइ ॥३८॥ नवनवमियाणं भिक्खुपडिमा एगासीए राइंदिएहिं चउ

व्य. सू. ३८–४० ॥१३॥

हियपंचुत्तरेहिं भिक्खासएहिं अहासुत्तं ( जहा ३७ ) अणुपालिया भवइ ॥३९॥ दस दसमियाणं भिक्खु पडिमा एगेणं राइंदियसएणं अद्धछट्ठेहिय भिक्खासएहिं अहा सुत्तं (जहा ३७) अणुपालिया भवइ ॥४०॥

विशेषस्तु पाठसिद्धः । एष सूत्रचतुष्टयसंक्षेपार्थः ।

अह सुत्तसुत्तदेसा कप्पो उ विधिए मग्गनाणादी । तच्च तु भवे तत्थं सम्मं जं अपरितंतेण ॥७६॥

फासियजोगतिएणं पालियमविराहि सोहिते चेव । तीरियमंतपाविय किट्टिय गुरु कहणा जिणमाणा ॥७७॥

यथा सूत्रमिति सूत्रादेशात् यथाकल्पमित्यत्र कल्पोविधिर्यथामार्गमित्यत्र मार्गो ज्ञानादि । यथा तथ्यमित्यत्र तच्चं नाम तथ्यं, यथा सम्ममिति सम्यग् नाम यदपरिताम्यताकरणं, स्पर्शिता योगत्रिकेण सेविता पालिता अविराधिता शोधिताप्येवमेव अविराधनेनै वेत्यर्थः । तीरिता अंतं प्रापिता, कीर्तिता गुरूणां कथनतः आज्ञा जिनस्य तीर्थकृतः द्वितीया षष्ठ्यर्थः प्राकृतत्वात् ।

पडिमा उ पुव्वभाणिया पडिवज्जइ को तिसंघयणमादी । नवरं पुण नाणत्तं कालच्छेए य भिक्खासु ॥७८॥

प्रतिमा भिक्षोः प्रतिमाः पूर्वमाचारदशासु भणिताः ताः कः प्रतिपद्यते ततः आह–तिसंघयणत्ति आद्येषु त्रिषु संहननेषु अन्यतर संहननोपेतः प्रतिपद्यते, चतुर्थादिषु तु संहननेषु वर्तमानो न प्रतिपद्यते । आदिशब्दात्सोऽपि सूत्रार्थतदुभयोपेतो गच्छे कृतपरिकर्मा सातिशयो न निरतिशयो निरतिशय इति परिग्रहः । तृतीयं च संहननं यावदार्यरक्षितस्तावदनुवृत्तं । ततः आरतो व्यवच्छिन्नं नवरं पुनर्नानात्वमत्र कालच्छेदे भिक्षासु च तत्र कालच्छेदमाह–

एगूणपन्नचउसाट्टि गासती सयं च बोधव्वं । सव्वासिं पडिमाणं कालो एसात्ति तो होइ ॥७९॥

३

उ. ९. भा. ७६–८२ ॥१३॥ सप्तसप्तिकायाः काल एकोनपञ्चाशत् रात्रिं दिवानि अष्टा अष्टकिकायाः चतुःषष्टिर्नवनवकिकाया एकाशीतिर्दशदशकिकायाः शतं रात्रिंदिवानां बोद्धव्यं। सर्वप्रतिमानामधिकृतसूत्रचतुष्टयोपेतानामेष एतावान् भवति कालः। कथं पुनः सप्तसप्तकिका भवतीत्यत आह–

१८ पढमाए सत्तगा सत्तपढमे तत्थ सत्तए। एक्केक्कं गेण्हई भिक्खं बिइए दोण्णि दोण्णओ ॥८०॥

एवमेक्कोक्कियं भिक्खं छुब्भिज्जेक्केक्कसत्तगे। गेण्हती अंतिम जाव सत्तसत्त दिणेदिणे ॥८१॥

प्रथमायां प्रतिमायां सप्तसप्तकिका भवन्ति। तत्र प्रथमे सप्तके प्रतिदिवसमेकैकां भिक्षां गृह्णाति। द्वितीये सप्तके प्रतिदिवसं द्वे द्वे भिक्षे। एवं तृतीयादिषु सप्तकेष्वेकैकेषु एकैकां भिक्षामधिकां प्रक्षिपेत यावदन्तिमे सप्तके दिने दिने सप्त सप्तभिक्षा गृह्णाति। इयमत्र
२२ भावना–तृतीये सप्तके प्रतिदिवसं। तिस्रस्तिस्रो भिक्षा गृह्णाति। चतुर्थे चतस्रश्चतस्रः पञ्चमे पञ्च पञ्च, षष्ठे षट् षट्, सप्तमे सप्त सप्तेति। अत्रैव प्रकारान्तरमाह–

अहवा एक्किक्कियं दत्तिजा सत्तक्केक्कसत्तए। आदेसो आत्थि एसोवि सीहविक्कमसन्निभो॥ ८२॥

अथवा एष द्वितीयोऽप्यादेशो यथा एकैकस्मिन् सप्तके प्रत्येकं प्रथमदिनादारभ्य प्रतिदिवसमेकैकां वर्धयेत् यावत् सप्तमे दिवसे।
२६ इयमत्र भावना–प्रथमे सप्तके प्रथमे दिवसे एकांभिक्षां गृह्णाति, द्वितीये द्वे, तृतीये तिस्रः, चतुर्थे चतस्रः, पञ्चमे पञ्च, षष्ठे षट् सप्तमे सप्त एवं द्वितीये तृतीये चतुर्थे पञ्चमे षष्ठे सप्तमे च सप्तके द्रष्टव्यं एव आदेशः सिंहविक्रमसंनिभः यथा सिंहो गत्वा गत्वा पृष्ठतः प्रलोकयते, एवमेषोऽपि सप्तके सप्तके पुनर्मूलतः परावर्तते। गतः कालच्छेदः। संप्रति भिक्षापरिमाणमाह–

छन्नउयभिक्खसयं अट्ठासीया य दोसया हुंति । पंचुत्तरा य चउरो अद्धछट्ठासया चेव ॥ ८३ ॥

व्य. सू. ३८–४० ॥१४॥ सप्त सप्तकिकायां भिक्षापरिमाणं षण्णवतं (१९६),शतमष्टाष्टकिकामामष्टशोते द्वेशते (२८८) भिक्षाणां, नवनवकिकायां पञ्चोत्तराणि चत्वारि शतानि (४०५), दशदशकिकायामर्धषष्ठानिशतानि (५५०) भिक्षाणामिति । सम्प्रत्यस्यैव भिक्षापरिमाणस्यानयनाय करणमाह–

उद्दिट्ठवग्गदिवसा मूलगुणसंजुया दुहा छिन्ना । मूलेणं संगुणिया माणं दत्तीण पडिमासु ॥८४ ॥

पदगयसु वेयसु त्तरसमाहयं दलियमादिणा; सहियं गच्छगुणं, पडिमाणं भिक्खमाणं मुणेयव्वं ॥ ८५ ॥

उद्दिष्टा ये च वर्गाः सप्त सप्तकिकादयः ते दिवसा मूलदिनसंयुताः सप्तादिदिनसन्मिश्राः क्रियन्ते । तदनन्तरं द्विधा छिन्ना अर्धी क्रियन्ते इति भावः । ततो मूलेन सप्तादिलक्षणेन संगुण्यन्ते संगुणिताः प्रतिमासु दत्तीनां परिमाणं भवन्ति तद्यथा–सप्तसप्तकवर्गदिवसा एकोनपञ्चाशत् (४९) ते मूलदिनैः सप्तभिर्युताः क्रियन्ते जाताः षट्पञ्चाशत् ५६, ते अर्धीक्रियन्ते जाता अष्टाविंशतिः २८, सा मूलेन सप्तकेन गुण्यते आगतं षण्णवतं शतं १९६ । तथा अष्टाष्टकवर्ग दिवसा श्चतुःषष्टिः ६४ ते मूलदिनैः अष्टभिः संमिश्र्यन्ते जाताः द्वासप्रतिः ७२ स्तस्या अर्धं क्रीयते जाता षट् त्रिशत् ३६ सा मूलेन अष्टकेन गृण्णते आगते द्वेशते अष्टाशीते । एवं नवनवकिकायां दशदशकिकायां च यथोक्तं भिक्षापरिमाणमानेतव्यम् । अत्रैव करणान्तरमाह–

गच्छुत्तर संविग्गे उत्तरहीणं पक्खिवे आदि । अंतिमधणमादिजुयं गच्छद्धगुणं तु सव्वधणं ॥ ८६ ॥

गच्छ उत्तरेण संवर्गं संवर्ग्यंतेस्म, । संवर्गो गुणित इत्यर्थः । तस्मिन् उत्तरेण हीणे कृते आदिं प्रक्षिपेत् तत अन्तिमधनमागच्छति

उ. ९, भा. ८३–८६ ॥१४॥

तदन्तिमधनमादियुतं क्रियते तदनन्तरं गच्छार्धगुणं ततः सर्वधनमागच्छति । तत्र सप्तसप्तकिकायां सप्त आदिः सप्त उत्तरं सप्त गच्छः । ततः सप्तलक्षणो गच्छ उत्तरेण सप्तकलक्षणेन गुण्यते जाताः एकोनपञ्चाशत् ४९ । सा उत्तरेण सप्तकेन हीना क्रियते कृत्वा च पुनरादिना सप्तकेनैव युताकर्तव्या । इदं कारणमन्यत्रापि व्यापकं तत एवमुक्तमन्यथाचोत्तरं हानावादिप्रक्षेपे च न कश्चि-द्विशेषः तस्या एव एकोनपञ्चाशतो भावात् । तदन्तिमधनं सप्तमे सप्तके भिक्षापरिमाणमित्यर्थः। एतत् आदिना सप्तकेन युतं क्रियते जाता षट् पञ्चाशत्। सा गच्छार्धेन गुण्यते । अत्र गच्छः सप्तकः । स विषमत्वादर्धं न प्रयच्छति ततो गुण्यो राशिः षट्पञ्चाशल्लक्षणोर्धी क्रियते । जाता अष्टाविंशति । सा परिपूर्णेन सप्तकलक्षणेन गच्छेन गुण्यते, जातं षण्णवतं शतं । अष्टाष्टकिकायामष्टक आदिरष्टक उत्तर-मष्टको गच्छः तत्राष्टकलक्षणो गच्छ उत्तरेणाष्टकेन युतं क्रियते जाता चतुः षष्टिः सा उत्तर हीना आदियुता क्रियते । तथापि सैव । चतुः षष्टिरेतत् अष्टमेऽष्टके भिक्षापरिमाणं एतदादिना अष्टकेन युतं क्रियते जाता द्वासप्ततिः ७२ । सागच्छार्धेन चतुष्केन गुण्यते जाते द्वेशतेऽष्टाशीत्यधिके २८८ एवं नवनवकिकायां दशदशकिकायां च भावनीयं नवरं नवनवकिकायां नवक आदिर्नवक उत्तरं नवको गच्छो दशदशकिकायां दशक आदि र्दशक उत्तरं दशको गच्छः

दोपडिमाओ पन्नताओ, तंजहा खुड्डिया वा मोयपडिमा महल्लिया वा मोयपडिमा, खुड्डियण्णं मोयपडिमं पडिवन्नस्स अणगारस्स कप्पइ, से पढमनिदाहकालसमयंसि वा चरमनिदाहकालसमयंसि वा बहियागामस्स वा बृ. १ उ. सू.६ रायहाणीए वा वणंसि वा वणदुग्गंसि वा पव्वयंसि वा पव्वयदुग्गंसि वा भोच्चा आरुभइ चोदसमेण पारेइ, अभोच्चा आरुभइ, सोलसमेणं पारेइ, जाएजाए मोए आईयव्वे दिया आगच्छेइ,सू. ४१ महल्लियणं मोय-

व्य. सू. ४१-४२ ॥१९॥ **पडिमं जाव पव्वयदुग्गंसिवा, भोच्चा आरुभइ सोलसमेणं पारेइ, अभोच्चा आरुभइ अट्ठारसमेणं पारेइ जाए जाए मोए आइयव्वे दिया आगच्छइ** सू. ४२—सूत्रद्वयं, अस्यसंबंधमाह—

**पडिमाहिगारपगते हवंति मोयपडिमा इमा दोण्णि । ता पुण गणम्मि वुत्ता इमा उ बाहिं पुरादीणं ॥८७॥**

प्रतिमाधिकारः प्रकृतस्ततः इमेऽपि द्वे मोकप्रतिमे इह भवतः प्रतिमाप्रस्तावादिमे अपि प्रतिमे अत्रोपन्यस्ते इति भावः । केवलमयं विशेषः । ता अनन्तरोदिताः प्रतिमा गणे स्थितस्योक्ता इमे पुनः पुरादीनां बहिः स्थितस्येति सम्बन्धः । अनेन सम्बन्धेनायातस्यास्य व्याख्या—द्वे प्रतिमे प्रज्ञप्ते तद्यथा क्षुल्लिका च मोकप्रतिमा महती च मोकप्रतिमा मोकं कायिकी । तदप्युत्सर्गप्रधानाप्रतिमा मोकप्रतिमा । तत्र क्षुल्लिकाणामिति प्राग्वत् । मोकप्रतिमां प्रपन्नस्यानगारस्य कल्पते से तस्य प्रथम निदाघकालसमये वा चरमनिदाघकालसमये वा बहिर्ग्रामस्य वा यावत्करणान्नगरादिपरिग्रहो राजधान्यां वा बने वा एकजातीयद्रुमसङ्घातो वनं, विदुर्गं वा नानाजातीयद्रुमसंघाते, पर्वते प्रतीते, पर्वतविदुर्गे अनेकपर्वतसंघातरूपे भुकूत्वा यदि प्रतिमामारोहति प्रतिपद्यते, तदा चतुर्दशेन भक्तेन पारयति समापयति अथा भुक्त्वा आरोहति तदा षोडशकेन भक्तेन पारयति, तेन च जातं मोकं कायिकी पातव्यं आगमने च दिवा आगच्छति । एवं महत्या अपि प्रतिमायाः सूत्रं वाच्यं । विशेषोऽपि पाठसिद्ध एव । सम्प्रति भाष्यप्रपञ्चः । तत्र मोकप्रतिमाशब्दार्थमाह—

**सव्वातो पडिमातो साधुं मोयंति पावकम्मेहिं । एएण मोयपडिमा आहिगारो इहं तु मोएण ॥८८॥**

मोचयति पापकर्मभ्यः साधुमिति मोकाउद्रादित्वादन्यदपि कुर्वन्ति सा चासौ प्रतिमा च मोकप्रतिमा । एतेनान्वर्थेन सर्वा अपि प्रतिमाः साधुं पापकर्मभ्यो मोचयन्तीति कृत्वा मोकप्रतिमाः प्राप्नुवन्ति । ततो विशेषप्रतिपादनार्थमिहाधिकारः । प्रयोजनं मोकेन मोका

उ. ९ भा. परित्यागप्रधाना प्रतिमा मोकप्रतिमेति । सम्प्रति विषमपदव्याख्यानमाह–
८७–९२
॥१५॥ एगदुमो होइ वणं एगजातीयजे जहिं रुक्खा । विवरीयं तु विदुग्गं एसे व य पव्वए विगमो ॥८९॥

एकद्रुम एकजातीया ये वृक्षास्ते यत्र विद्यन्ते तत् भवति वनं । नानाजातीयद्रुमरूपं विदुर्गं । एष एव गमः पर्वतेऽपि द्रष्टव्यः । नाना-
१८ रूपपर्वतः पर्वतविदुर्गं । सम्प्रति येन विधिना बहिर्निर्गच्छति तं विधिमाह–

निसज्जं च चोलपट्टं कप्पं घेत्तूणमत्तगं चेव । एगंते पडिवज्जति काऊण दिसाणं वालोयं ॥९०॥

निषद्यां सोत्तरां चोलपट्टकल्पं मात्रकं च कायिकीमात्रकं गृहीत्वा ग्रामादेर्बहि र्विनिर्गच्छति । विनिर्गत्यैकान्ते प्रतिमां प्रतिपद्यते ।
तत्र कायिकीसमागमे तां मात्रके व्युत्सृज्यानापाते असंलोके दिशं वा लोकं कृत्वा आपिबति । यद्यपि स ज्ञानातिशयाऽतिशयज्ञानेनैव
२२ जानाति सागारिकोऽस्ति न वेति तथापि सामाचारी पालिता भवत्विति कृत्वा दिशमालोकं कृत्वा व्युत्सृजत्यापिबति च, सम्प्रति
कल्पादिग्रहणे प्रयोजनमाह–

पाउणइ तं पवाए तत्थ निरोहेण जिज्जए दोसा । सिण्हाए परित्ताणं व कुणाति अच्चुण्हवाते वा ॥९१॥

तं कल्पं प्रतिवाते प्रवृत्ते प्रावृणोति तत्र च प्रावरणे कृते वातनिरोधेन यः प्रवाते वातसंपर्केणापादितो दोषः जीर्यते । यदि वा स
२६ कल्पः सिण्हादि परित्ताणं श्लक्ष्णादि सचित्तरजः परित्राणं करोति, । अथवा अत्युष्णे वाते वाति स प्रावृयते, मोकमापिबेदित्युक्तं
तत्र मोकस्वरूपमाह–

साभावियं च मोयं जाणइ जं वावि होइ विवरीयं । पाणबीयससणिद्धं ससक्खाधिराय न पिएज्जा ॥९२॥

व्य. सू. ४१–४२ ॥१६॥

स प्रतिमाप्रतिपन्नो यन्मोकं स्वाभाविकं यच्च भवति विपरीतं तत्सर्वं जानाति । तत्र स्वाभाविकमापिवति । इतरत् विपरीतं प्राणसंसक्तं बीजसन्मिश्रसस्निग्धं सरजस्काधिराजकलितं न पिवति । तत्र प्राणसंसक्तं कथयति ।

किमिकुट्ठे सिया पाणा ते य उण्हाभिताविया । मोएण सह मेज्जण्हु निसिरेते उ छाहिए ॥९३॥

कृमिसंकुलं कोष्ठमुदरं कृमिकोष्टे स्युः प्राणाः कृमिरूपास्ते चोष्णेनाभितापिताः सन्तो मोकेन कायिक्या सार्धमागच्छेयुस्ततस्तान् छायायां निसृजेत् । बीजादिप्रतिपादनार्थमाह–

बीयं तु पोग्गला सुक्का ससणिद्धा उ चिक्कणा । पडंतिं सिथिले देहे खमणुण्हाभिताविया ॥९४॥

बीजं नाम शौक्राः पुद्गलास्ते च द्विधा चिक्कणा अचिक्कणाश्च । तत्राचिक्कणा बीजग्रहणेन गृहीताश्चिक्कणाः सस्निग्धा उच्यन्ते । ते उभयेऽपि शिथिले देहे क्षपणेनोष्णेन तापिताः सन्तः पतन्ति ।

पमेहकणिया तो य सरक्खं पाहु सूरयो । सो उ दोसकरो वुत्तो तं च कज्जं न साहए ॥ ९५ ॥

प्रमेधकणिकाः सरजस्कं पदैकदेशे पदसमुदायोपचारात् सरजस्काधिराजं प्राहुः सूरयः, स च सरजस्काधिराज आपीयमानो दोषकर उक्तः । तच्च कार्यं रोगविमुक्तिलक्षणं न साधयति । ततः सोऽपि न पीयते ।

बहुगा होइ मत्ता ऊ आइल्लेसे दिणेसु उ । कमेण हायमाणी उ अंतिमे होइ वा न वा ॥ ९६ ॥

आदिमेषु कायिकी मात्रातो वह्वी भवति ततः क्रमेण हीयमाना अन्तिमे दिने भवति वा न वा ।

पडिणी अणुकंपा वा मोयं वद्धांति गुज्झगा केई । बीजादिजुयं जं वा विवरीयं उज्झए सव्वं ॥ ९७ ॥

उ. ९ भा. ९३-१०२ ॥१६॥

प्रत्यनीकोऽनुकम्पत इत्यनुकम्पता केचित् गुह्यका मोकं कायिकी वर्धयन्ति, यद्वा बीजादियुतं कुर्वन्ति, । सर्वमेतत् स्वाभाविकं न भवति । किन्तु विपरीतमतस्त्यजति सम्प्रति द्रव्यादितो मार्गणामाह-

दव्वे खेत्ते काले भावंमि य होइ सा चउविगप्पा । दव्वे उ होइ मोयं खेत्ते गामाइयाण बाहिं ॥ ९८ ॥

काले दिया व रातो भावे साभावियं व इयरं वा । सिद्धाए पडिमाए कप्पाविमुक्को हवइ सिद्धो ॥ ९९ ॥

देवो महड्ढितो वावि रोगातो ऽहवा मुच्चती । जायती कणगवण्णो उ आगते य इमो विही ॥ १०० ॥

सा क्षुल्लिका मोकप्रतिमा चतुर्विकल्पा चतुराश्रिता भवति । तद्यथा द्रव्ये क्षेत्रे काले भावे च । तत्र द्रव्ये भवति मोकमापातव्यं, क्षेत्रे ग्रामादीनां बहिः काले दिवा रात्रौ वा । भावे तन्मोकं स्वाभाविकमितरद्वा । तत्र स्वाभाविकमाविपत(पिब)ति इतरत्त्यजति । अस्यां च प्रतिमायां सिद्धायां कश्चित्कालं कुर्वन् कर्मविमुक्तः सिद्धो भवति । यदि वा देवो महर्द्धिकः अथवा काले कारणाभावे रोगाद्विमुच्यते । शरीरेण कनकवर्णो जायते, ' पालितायां प्रतिमायामुपाश्रयमागतस्यायं वक्ष्यमाणो विधिस्तमेवाह-

उण्होदगे य थोवे तिभागमद्धे तिभाग योवे य । महुरगभिन्ना महुरगएक्केक्कं सत्तदिवसाइं ॥ १०१ ॥

उष्णोदकादिकमधिकृतगाथोपन्यस्तमुक्तक्रमेण एकैकं सप्तदिवसान् कुर्यादिति गाथापदयोजना । भावना त्वियम्-सप्तदिवसानुष्णोदकेन ओदनं भुंक्ते । च शब्दात् द्वितीयान् सप्तदिवसान् यूषमाण्डेन यापयेत् एतदेवाह-

ओयणं सिणोदएणं दिणे सत्त भुंजिउं । जूसमंडेण वा अन्ना दिणो जावेइ सत्तओ ॥ १०२ ॥

पाठसिद्धं थोवत्ति अन्यान् तृतीयान् सप्तदिवसान् त्रिभागे उष्णादके स्तोकं मधुरमोल्लणं मिश्रयित्वा तेन सह भुंक्ते, तिभागेत्ति

व्य. सू. ४१-४२ ॥१७॥ तदनन्तरमन्यान् सप्तदिवसान् मधुरस्योल्लणस्य त्रिभागं द्वौ भागावुष्णोदकस्य मीलयित्वा तेन सह भुंक्ते अद्धे इति ततः परमन्यान् सप्तदिवसानर्धं मधुरोल्लणस्य मिश्रयित्वा तेन सह कूरं भुंक्ते तिभागत्ति तदनन्तरमन्यान् सप्तदिवसान् त्रिभागमुष्णोदकस्य द्वौ भागौ मधुरोल्लणस्व मिश्रयित्वा तेन सह भुंक्ते । थोवेयत्ति ततः परमन्यान् सप्तदिवसान् मधुरोल्लणोस्तोकमुष्णोदकं प्रक्षिप्य तेन सह भुंक्ते । एवं पञ्चमसप्तकान् मधुरकभिन्नान् स्तोकोदकान् मधुरकसहितान् भुंक्ते । एतदेवाह–

मधुरोल्लणेण थोवेण मीसे तइयसत्तए । तिभागव्वजुयं चेव तिभागो थोवमिस्सियं ॥ १०३ ॥

अन्यैः पूर्वव्याख्यानुसारेणेयं गाथा स्वयं भावनीया अधिकार्थाभावात् तदनन्तरमन्यान् मधुरकेण उल्लणेन सह उपलक्षणमेतत् । अन्यैर्वा यूषप्रकारैः सह भक्तं भुंक्ते। ततः परमन्यान् सप्तसप्तकान् यानि तस्य व्याधेरविरुद्धानि तैर्दध्यादिभिः सह भावयित्वा भुंक्ते । तदनन्तरं सर्वप्रचारा भवति। एतदेवाह–

महुरेणं सत्तन्ने भाविता उल्लणादिणा । दहिगादीण भावेत्ता ताहेव सत्त सत्तए ॥ १०४ ॥

अत्रादिशब्दादन्येषां यूषप्रकाराणां परिग्रहः । दहिगादीण भावित्ता ताहे वा सत्त सत्तए' व्याख्यातप्रायं । साम्प्रतमुपसंहारमाह–

एवमेसा उ खुड्डीया पडिमा होति समाणिया । भोच्चा रुभंते चोद्सेणं, अभोच्चा सोलसेण तु ॥ १०५ ॥

एवमेषा क्षुल्लिका मोकप्रतिमा भवति सा च भुक्त्वा आरोहता प्रतिपद्यमानेन चतुर्दशकेन समानीता समाप्तिं नीता भवति । अभुक्ता प्रतिमानेन षोडशकेन आरुहन्ते इत्यत्र सप्तमी तृतीयार्थे प्रतिपत्तव्या । सम्प्रति महतीं मोकप्रतिमां व्याख्यातुमाह–

एमेव महल्लीवि उ अट्ठारसिमेण नवरि निट्ठाति । परिहारो अट्ठदिवसा नह्य रोगि वालिस्स वा एसा ॥ १०६ ॥

एवमेव अनेनैव प्रकारेण महत्यपि मोकप्रतिमा द्रष्टव्या नवरं सा अष्टादशकेन निष्ठां याति, परिहारस्तपोऽष्टौ दिवसान् न च स रोगी

उ. ९. भा. १०३–१०८ ॥१७॥ भवति प्रतिमाप्रभावात्, । यदि वा बलिन एषा प्रतिमा भवति नेतरस्य ।

पडियत्ती पुण तासिं चरमनिदाघे व पढमसरए वा । संघयणधितीजुत्तो फासयति दोवि एयातो ॥ १०७ ॥

१८ प्रतिपत्तिः पुनरेतयोः प्रतिमयोश्चरमनिदाघे वा प्रथमशरदि वा एते च द्वे अपि प्रतिमे स्पर्शयति आद्यसंहननत्रयोऽन्यतमसंहनन-युक्तो धृत्या च वज्रकुड्यसमानः

संखादत्तियस्स णं भिक्खुस्स पडिग्गह धारिस्स गाहावइ कुल–पिंडवाय पडियाए अणुपविट्ठस्स जावइयं

२२ केइ अंतो पडिग्गहसि उवइत्तु दलएज्जा, तावइयाओ दत्तीओ वत्तवं सिया, तत्थ से केइ छप्पएण वा दूसएण वा वालएण वा अंतो पडिग्गहंसि उवित्ता दलएज्जा सावि णं सा एगादत्ती वत्तव्वं सिया, तत्थ से बहवे भुंजमाणा सव्वे ते सयं सयंपिंडं साविय अंतो पडिग्गहंसि उवित्ता दलएज्जा सव्वाविणं सा एगा दत्ती वत्तवं सिया ॥४३॥ पाणिपडिग्गहियस्सणं जहा (३६ पाणिंसिपडिग्गहंसि).... वत्तव्वं सिया ॥ ४४ ॥ अस्य सम्बन्धमाह–

२६ स साहियपातिण्णो उ नीरोगो दुहतो बली । मियं गेण्हइ सुद्धुच्छ सुत्तस्स समुप्पया ॥ १०८॥

व्य. सू. ४३-४४ ॥१८॥

स मोकप्रतिमासाधकः साधितप्रतिज्ञो। नीरोगो द्विधातो धृत्या संहनने च बली मितं दत्तिसंख्यया च परिमितं शुद्धमुंछं
गृह्णाति ततो दत्तिपरिमाणप्रतिपादनार्थमन्यस्य सूत्रद्वयस्य समुत्पादः प्रवृत्तिगाथायां स्त्रीत्वं प्राकृतत्वात्। एष सूत्रसम्बन्धः। अनेन
सम्बन्धेनायातस्यास्य व्याख्या-संख्यापरिमाणं दत्तिकायाः सूत्रं पुस्त्वमार्षत्वात् यावत् यावत् कश्चिदन्तः पतद्गृहे उवित्ता अवनम्य दद्यात्।
तत्र तावत्यो दत्तयइति वक्तव्यं स्यात्, किमुक्तं भवति? एकस्यामपि भिक्षायामुत्पादितायां यावतो वारानच्छिद्य विच्छिद्य ददाति
तावत्यस्तत्र दत्तय इति तत्र से तस्य साधोः कश्चित् छब्बकेन वंशदलमयेन दूष्येण वा वस्त्रेण वालकेन वा गोमहिष्यादिबालकृतेन गाल-
नादिना अन्तः पतद्ग्रहे अवनम्य दद्यात्। सापि णमिति वाक्यालङ्कारे। एका दत्तिरिति वक्तव्यं स्यात्। तत्र से तस्य साधोर्बहवो भुंजाना
भिक्षार्थं साधुमागतं दृष्ट्वा सर्वे ते स्वीयं पिण्डं संहृत्य एकं पिण्डं कृत्वा अन्तः पतद्गृहे उवित्ता अवनम्य दद्यात्। सर्वापि णमिति पूर्ववत्।
एका दत्तिरिति वक्तव्यं। एतत्सूत्रं पतद्ग्रहधारिण उक्तं,। सम्प्रति पाणिपतद्ग्रहविषयमाह पाणीत्यादि पाणिपद्ग्रहस्यापि विषये एवमेव सूत्रं
वक्तव्यमिति सूत्रसंक्षेपार्थः। सम्प्रति भाष्यविस्तरः-

हत्थेण व मत्तेण व भिक्खा होइ समुज्जया। दत्तितो जत्तिए वारे, खिवती होंति तत्तिया ॥१०९॥

हस्तेन वा मात्रेण वा या समुद्यता उत्पादिता भिक्षा सा भिक्षेत्युच्यते दत्तयः पुन स्तामेव भिक्षां यावतो वारानवच्छिद्य क्षिपन्ति
तावत्यो भवन्ति-

अव्वोच्छिन्न निवाया उ दत्ती होइ उ वेतरा। एगाणेगासु चत्तारि विभागा भिक्खदत्तिसु ॥११०॥

अव्यवच्छिन्ननिपातात् तु दत्तिर्भवति इतरा या भिक्षा च भवति,। भिक्षादत्तिषु च एकानेकासु विषये चत्वारो विकल्पास्तानेवाह-

उ. ९. भा. १०९–११३ ॥१८॥

एगाभिक्खा एगा दत्ती एगाभिक्खअणेगा दत्तितो। णेगातोवि य एगा णेगातो चेव णेगातो ॥१११॥

एकाभिक्षा एका दत्तिरिति प्रथमो विकल्पः। एकाभिक्षा अनेका दत्तय इति द्वितीयः। अनेका भिक्षा एका दत्तिरिति तृतीयः। अनेकाभिक्षा अनेकादत्तय इति चतुर्थः। तत्र प्रथमभङ्ग एवं दायकेन व्यवच्छिन्ना भिक्षा दत्ता सा एका भिक्षा एका च दत्तिः, द्वितीयभङ्गे व्यवच्छिन्ना दत्ता, तृतीयभङ्गे सूत्रमिदम् तत्थ से बहवो भुंजमाणा इत्यादि जाव एगा सा दत्ती वत्तव्वं सिया अस्येयं भावना केचिद् पथिकाः कर्मकरा वा एकत्रावकाशे पृथक् पृथक् उपस्कृत्य भुंक्ते भुञ्जते तेषामेकःपरिवेषकः, साधुना तत्र च भिक्षार्थमागत्य धर्मलाभः समुत्पृष्टस्ततः सः परिवेषक आत्मीयान् ददामीतिव्यवसितस्तैरपि शेषकैः समं भण्यते प्रत्येकमस्मदीयमध्यादपि साधवे भिक्षां देहि ततस्तेन परिवेषकेण सर्वेषां सक्तान् गृहीत्वा एकत्र संमील्याव्यवच्छिन्नं दत्तं। एवमनेकाभिक्षा एकादत्तिरित्युपपद्यते। चतुर्थभङ्गोऽप्येवमेव, नवरं व्यवच्छिन्नं दानमिति। अत्र दत्तिष्वेकानेकदायकभिक्षाभेदतोऽष्टौ भङ्गास्तान् उपदिदर्शयिषुः प्रथमतो एकानेकदायकभिक्षाविषयां चतुर्भङ्गीमाह–

एमेव एगाणेगे दायगभिक्खासु होइ चउभंगो। एगो एगं दत्ती एगो णेगाओ णेगएगा उ ॥११२॥
णेगा य अणेगातो पाणिसु पडिग्गहधरेसु। ( અડધી ગાથા વધારે છે )

एवमेव अनेनैव प्रकारेण एकस्मिन् अनेकस्मिश्च दायके एकानेकभिक्षासु चतुर्भङ्गी भवति। गाथायां पुंस्त्वं प्राकृतत्वात् तामेव चतुर्भङ्गीमाह–एको दायक एकां भिक्षां ददाति १, एको अनेकाः २, अनेके एकां ३, अनेके अनेकाः ४। एते चत्वारो भङ्गाः पाणिषु पाणिभोजिषु पतद्ग्रहधरेषु च द्रष्टव्याः। अत्र यथा दत्तिष्वष्टौ भङ्गास्तथा दर्शयति–

एगो एगं एक्कसि एगो एक्कं बहुसो उ वारे। एगोणेगा एक्क सि एगो णेगा य बहुसो य ॥११३॥

व्य. सू. ४५ ॥१९॥ एको दायक एकां भिक्षामेकवारं ददाति १, एको दायक एकां भिक्षां बहुशो वारान् विच्छिद्य २ ददाति २, एको दायको अनेका भिक्षा एकवारमव्यवच्छेदेन ददाति ३ एको दायकोऽनेका भिक्षा बहुशो वारान् विच्छिद्य विच्छिद्य ददाति ४। एवमेकं दायकमधिकृत्य एकानेकभिक्षासु दत्तिविषया चतुर्भङ्ग्यभिहिता। साम्प्रतमनेकान् दायकानधिकृत्य एकानेकभिक्षासु दत्तिविषयां चतुर्भङ्गीमाह–

णेगा एगं एक्कसि णेगाएगं च णेगसो वारे। णेगाणेगाएक्कासि णेगा णेगा य बहुवारे ॥११४॥

अनेके दायका एकां भिक्षामेकवारमव्यवच्छेदेन ददाति ५। अनेके दायका एकां भिक्षामनेकशो वारान् विच्छिद्य विच्छिद्य ददाति ६। अनेके दायका अनेका भिक्षा एकत्र संपिण्डय एकवारं ददति ७। अनेके दायका अनेका भिक्षा विच्छिद्य विच्छिद्य बहून् वारान् ददाति ८।

पाणिपडिग्गहियस्सवि एसेव कमो भवे निरवसेसो। गणवासे निरवेक्खो सो पुण सपडिग्गहो भइतो ॥११५॥

पाणिपतद्ग्रहकस्यापि एष एवानन्तरोदितः क्रमो भवति निरवशेषो ज्ञातव्यः। स च पाणिपतद्ग्रहभोजी गणवासे निरपेक्षः स पतद्ग्रहो भजितो विकल्पितः कदाचिद्भवति कदाचिन्नेति ततस्तस्य पाणिपतद्ग्रहे भजिता

**सूत्रम्–तिविहे उवहडेपन्नत्ते तंजहा सुद्धोवहडे, फलिओवहडे, संसट्ठोवहडे ॥४५॥** अस्य सम्बन्ध प्रतिपादनार्थमाह–

दोण्हेगतरे पाते गेण्हती उ अभिग्गहाति दो वहडं। दुविहं एगविहं वा आभिहडसुत्तस्स संबंधो ॥११६॥

४

एगाभिक्खा एगा दत्ती एगाभिक्खअणेगा दत्तितो । णेगातोवि य एगा णेगातो चेव णेगातो ॥१११॥

उ. ९. भा, एगाभिक्खा एगा दत्ती एगाभिक्खअणेगा दत्तितो । णेगातोवि य एगा णेगातो चेव णेगातो ॥१११॥
१०९-११३ एकाभिक्षा एका दत्तिरिति प्रथमो विकल्पः । एकाभिक्षा अनेका दत्तय इति द्वितीयः । अनेका भिक्षा एका दत्तिरिति तृतीयः ।
॥१८॥ अनेकाभिक्षा अनेकादत्तय इति चतुर्थः । तत्र प्रथमभङ्ग एवं दायकेन व्यवच्छिन्ना भिक्षा दत्ता सा एका भिक्षा एका च दत्तिः, द्वितीयभङ्गे
व्यवच्छिन्ना दत्ता, तृतीयभङ्गे सूत्रमिदम् तत्थ से बहवो भुंजमाणा इत्यादि जाव एगा सा दत्ती वत्तव्वं सिया अस्येयं भावना केचिद्
१८ पथिकाः कर्मकरा वा एकत्रावकाशे पृथक् पृथक् उपस्कृत्य भुंक्ते भुञ्जते तेषामेकःपरिवेषकः, साधुना तत्र च भिक्षार्थमागत्य धर्मलाभः समु-
त्सृष्टस्ततः सः परिवेषक आत्मीयान् ददामीतिव्यवसितस्तैरपि शेषकैः समं भण्यते प्रत्येकमस्मदीयमध्यादपि साधवे भिक्षां देहि ततस्तेन
परिवेषकेण सर्वेषां सक्तान् गृहीत्वा एकत्र संमील्याव्यवच्छिन्नं दत्तं । एवमनेकाभिक्षा एकादत्तिरित्युपपद्यते । चतुर्थभङ्गोऽप्येवमेव, नवरं
व्यवच्छिन्नं दानमिति । अत्र दत्तिष्वेकानेकदायकभिक्षाभेदतोऽष्टौ भङ्गास्तान् उपदिदर्शयिषुः प्रथमतो एकानेकदायकभिक्षाविषयां
२२ चतुर्भङ्गीमाह–

एमेव एगाणेगे दायगभिक्खासु होइ चउभंगो । एगो एगं दत्ती एगो णेगाओ णेगएगा उ ॥११२॥

णेगा य अणेगातो पाणिसु पडिग्गहधरेसु । ( અડધી ગાથા વધારે છે )

एवमेव अनेनैव प्रकारेण एकस्मिन् अनेकस्मिंश्च दायके एकानेकभिक्षासु चतुर्भङ्गी भवति । गाथायां पुंस्त्वं प्राकृतत्वात् तामेव
२६ चतुर्भङ्गीमाह–एको दायक एकां भिक्षां ददाति १, एको अनेकाः २, अनेके एकां ३, अनेके अनेकाः ४ । एते चत्वारो भङ्गाः पाणिषु
पाणिभोजिषु पतद्ग्रहधरेषु च द्रष्टव्याः । अत्र यथा दत्तिष्वष्टौ भङ्गास्तथा दर्शयति–

एगो एगं एक्कसि एगो एक्कं बहुसो उ वारे । एगोणेगा एक्क सि एगो णेगा य बहुसो य ॥११३॥

एगो एगं एक्कसि एगो एक्कं बहुसो उ वारे । एगोणेगा एक्क सि एगो णेगा य बहुसो य ॥११३॥ — see line above

एको दायक एकां भिक्षामेकवारं ददाति १, एको दायक एकां भिक्षां बहुशो वारान् विच्छिद्य २ ददाति २, एको दायको अनेका

भिक्षा एकवारमव्यवच्छेदेन ददाति ३ एको दायकोऽनेका भिक्षा बहुशो वारान् विच्छिद्य विच्छिद्य ददाति ४ । एवमेकं दायकमधिकृत्य

४ एकानेकभिक्षासु दत्तिविषया चतुर्भङ्गयभिहिता । साम्प्रतमनेकान् दायकानधिकृत्य एकानेकभिक्षासु दत्तिविषयां चतुर्भङ्गीमाह–

णेगा एगं एक्कसि णेगाएगं च णेगसो वारे । णेगाणेगाएक्कसि णेगा णेगा य बहुवारे ॥११४॥

अनेके दायका एकां भिक्षामेकवारमव्यवच्छेदेन ददाति ५ । अनेके दायका एकां भिक्षामनेकशो वारान् विच्छिद्य विच्छिद्य

ददाति ६ । अनेके दायका अनेका भिक्षा एकत्र संपिण्ड्य एकवारं ददति ७ । अनेके दायका अनेका भिक्षा विच्छिद्य विच्छिद्य बहून्

८ वारान् ददाति ८ ।

पाणिपडिग्गहियस्सवि एसेव कमो भवे निरवसेसो । गणवासे निरवेक्खो सो पुण सपडिग्गहो भइतो ॥११५॥

पाणिपतद्ग्रहकस्यापि एष एवानन्तरोदितः क्रमो भवति निरवशेषो ज्ञातव्यः । स च पाणिपतद्ग्रहभोजी गणवासे निरपेक्षः स पतद्ग्रहो

भजितो विकल्पितः कदाचिद्भवति कदाचिन्नेति ततस्तस्य पाणिपतद्ग्रहे भजिता

१२ सूत्रम्–तिविहे उवहडेपन्नत्ते तंजहा सुद्धोवहडे, फलिओवहडे, संसट्ठोवहडे ॥४५॥ अस्य सम्बन्ध प्रतिपादनार्थमाह–

दोण्हेगतरे पाते गेण्हती उ अभिग्गहाति दो वहडं । दुविहं एगविहं वा आभिहडसुत्तस्स संबंधो ॥११६॥

४

अनन्तरसूत्रद्वये पतद्ग्रहधारी पाणिपतद्ग्रहिकश्चोक्तस्तयोश्च पाणिपतद्ग्रहयोरन्यस्मिन् पात्रे पतद्ग्रही गृह्णाति उपहूतमपि त्रिविधं द्विविध-

उ. ९. भा. ११३–११९ ॥१९॥ मेकविधं वा, अभिगृही गृह्णातीत्याभिग्रहिक प्रस्तावादत्रोपहूतस्तत्र रूपोपक्षेपः । एषोभ्याहृतसूत्रस्य सम्बन्धः । सूत्राक्षरसंस्कारस्त्वेवं त्रिवि-

धमुपहूतं प्रज्ञप्तं तद्यथा शुद्धोपहूतं फलितोपहूतं संसृष्टोपहूतं च अमीषां पदानां व्याख्यानां भाष्यकृत्करिष्यति । अधुना भाष्यप्रपञ्चः ।

सुद्धे संसट्ठेया पलितोवहडे य तिविहमेकेक्कं । तिन्नेगदुगातिन्निय तिगसंजोगो भवे एक्को ॥११७॥

उपहूतशब्दः प्रत्येकामभिसम्बन्ध्यते । त्रिविधमुपहूतं सूत्रेऽभिहितं । तद्यथा शुद्धोपहूतं, संसृष्टोपहूतं फलितोपहूतं च, एकैकं पुनस्त्रि-

विधं–यदवगृह्णाति, यच्च संहरति, यथास्ये प्रक्षिपति । एतदनन्तरसूत्रे वक्ष्यते, । अत्रैककसंयोगे त्रयो भङ्गास्तद्यथा शुद्धोपहूतं वा गृह्णाति १

फलितोपहूतं वा गृह्णाति २ संसृष्टोपहूतं वा गृह्णाति ३ द्विकसंयोगेऽपि त्रयस्तद्यथा शुद्धोपहूतं फलितोपहूतं च १ शुद्धोपहूतं संसृष्टोपहूतं २

फलितोपहूतं संसृष्टोपहूतं च ३ त्रिकसंयोगे एकः शुद्धोपहूतं फलितोपहूतं संसृष्टोपहूतं च गृह्णाति । सर्वसंख्यया सप्त भङ्गा एतेषामेक-

तरमभिगृह्णाति अभिगृही । सम्प्रति शुद्धादिपदानामर्थमाचष्टे ।

सुद्धं तु अलेवकडं अहवणसुद्धोदणो भवे सुद्धं । संसट्ठंआदत्तं लेवडमलेवडं चेव ॥ ११८ ॥

फलियं पहेणयादी वंजणभक्खेहि वा विरइयं तु । भोत्तुमणस्सोपहियं पंचमपिंडेसणा एसा ॥ ११९ ॥

यत् अलेपकृतं काञ्जिकेन पानीयेन वा सन्मिश्रीकृतं तत् शुद्धं । अथवा शुद्धोदनो व्यञ्जनरहितो भवति शुद्धं, तदपि नियमादलेप-

कृतं संसृष्टं नाम भोक्तुकामेनात्तं गृहीतं । किमुक्तं भवति ? यत्स्थाले परिवेषितं । तत ग्रहणाय हस्तः क्षिप्तो न तावद्यापि मुखे प्रक्षिपति ।

अत्रान्तरे साधुरागतो भिक्षार्थं यत् लेपकृतमलेपकृतं वा संसृष्टमित्युच्यते । फलितं नाम यत् व्यञ्जनैर्भक्ष्यैर्वा नानाप्रकारैः विरचितं

प्रहेणकादि प्रहेणकं लाभनकमादि शब्दात् सरजस्कानां दानाय कल्पितं परिगृह्यते। उपहृतशब्दस्यार्थमाह-यत्र भोक्तुमनस उपहूत-

व्य. सू. ४६ ॥२०॥ मित्युच्यते एषा च पञ्चमी पिण्डेषणा।

सुद्धग्गहणेण पुण होइ चउत्थीवि एसणा गहिया। संसट्ठे उ विभासा फलियानियमा उ लेवकडं ॥ १२० ॥

शुद्धग्रहणेन चतुर्थ्यप्येषणा अल्पलेपकृता नामिका गृहीता द्रष्टव्या। संसृष्टे विभाषा कदाचित्तल्लेपकृतं कदाचिन्नेति फलितं तु नियमाल्लेपकृतमेवेति।

सूत्रम्-तिविहे उग्गहिए पण्णत्ते जं च उगिण्हति जं च साहरइ जं च आसगंसि पक्खिवति ॥४६॥

अस्य सम्बन्धमाह-

पगया अभिग्गहिया खलु सुद्धयरा ते य जोगवुड्ढीए। इति उवहडसुत्तातो तिविहं दुविहं च पग्गहियं ॥ १२१ ॥

प्रकृता खल्वनन्तरसूत्रे शुद्धोपहृतादिष्वभिग्रहास्ते चाभिग्रहाः शुद्धतरा भवन्ति। योगवृद्ध्या उत्तरोत्तरयोगवृद्धिकरणेन इति अस्मात्कारणात् उपहृत-सूत्रादनन्तरं त्रिविधं द्विविधं वा प्रग्रहीतमुक्तमनेन सम्बन्धेनापातस्यास्य व्याख्या त्रिविधमवग्रहीतं प्रज्ञप्तं। यदवगृह्णाति यच्च संहरति यच्च आस्यके प्रक्षिपति-

सूत्रम्-एगे पुण एव माहंसु दुविहे ओग्गहिएपन्नते तंजहाजं च ओगिण्हइ जं च आसगंसि पक्खिवइ ॥

एके एवमाहुरेकेपुनरेवमाहु द्विविधमवग्रहीतं प्रज्ञप्तं यदवगृहणाति यच्च संहृतमिति एष सूत्राक्षरसंस्कारः। सम्प्रति भाष्यविस्तरः

क. ९. भा. १२०–१२५ ॥२०॥

पग्गहियं साहरियं पक्खियं तं च आसए तहय । तिविहे य दुविहं पुण पग्गहियं चेय साहरियं ॥ १२२ ॥

पग्गहियं साहरियं पक्खिवयं तं च आसए तहय । तिविहे य दुविहं पुण पग्गहियं चेय साहरियं ॥ १२२ ॥ prefix removed

यत् प्रगृहीतं यच्च संहृतं यच्चास्ये प्रक्षिप्यमाणमेतत् त्रिविधमवगृहीतं द्विविधं पुनरवगृहीतमादेशानान्तरेणेदं प्रगृहीतं संहृतं च

अथादेशस्य किं लक्षणमत आह–

वहुसुत्तमाइण्णं न उ बाहियण्णेहिं जुगपहाणेहिं । आदेसो सो उ भवे अहवावि नयंतरे विगप्पो ॥१२३॥

यत् बहुश्रुतैराचीर्णं न चान्यैर्युगप्रधानैर्बाधितं स भवति नाम आदेशः । अथवा नयान्तरविकल्प आदेशः । तद्वशात्सूत्रमेवमुपन्यस्त-

मिति । साम्प्रतमवगृहीतादिपदव्याख्यानार्थमाह–

साहीरमाणं गहियं दिज्जंतं जं च होइ पाउग्गं । पक्खेवए दुगुंछा आदेसो कुडमुहादीसु ॥१२४॥

इह अनानुपूर्व्या ग्रहणं वन्धानुलोमतस्तत एवं द्रष्टव्यं गृहीतं नाम यत् दीयमानं यच्च भवति प्रायोग्यं संहृतं नाम संह्रियमाणं आस्ये प्रक्षिप्यमाणं प्रतीतं । अत्राह–ननु जं च आसगंसि पक्खिवइ इत्यस्यायमर्थः । यदास्यके मुखे प्रक्षिपति तथोच्छिष्टमिति लोके जुगुप्सा ततः कथं तत् गृह्यते । सूरिराह–आदेसो कूडमुहादीसु कुटो घटस्तस्य यन्मुखं तदादिष्वादिशब्दात् पिठरमुखादि परिग्रहः । तत्र आदेशो व्याख्यानं । विमुक्तं भवति । पिठरमुखादीन्यधिकृत्य जं च आसगंसि पक्खिवति इति सूत्रं व्याख्यातमतो न कश्चिद्दोषः । अथ

उपहूतसूत्रस्यावगृहीतसूत्रस्यच परस्परं कः प्रतिविशेषस्तत आह–

उग्गहियंमि विसेसो पंचमापिंडेसणातो छट्टीए । तं पि हु अलेवकडं नियमा पुव्वुद्धडं चेव ॥१२५॥

उपहूतसूत्रे पञ्चमी पिण्डेसणा उक्ता अवगृहीतसूत्रे पुनरस्मिन् अयं विशेषो यत् पञ्चमपिण्डेषणातः परा या षष्ठी पिण्डेषणा तस्या अभिधानमिति तदपि वहू निश्चितं यल्लेपकृतं नियमाच्च पूर्वोध्धृतमिति । सम्प्रति दिज्जंतं च जं होति पायोग्गमित्यस्य व्याख्या–

व्य. सू. ४६ ॥२१॥

भुंजमाणस्य उक्खित्तं पडिसिद्धंतं च तेण उ । जहन्नोवहडं तं तू हत्थस्स परियत्तणे ॥१२६॥

परिवेषकः पटिकायां कूरं गृहीत्वा दक्षिणहस्तेन तलं प्रेषया यस्य दातुकामस्तस्य भाजने क्षिपामीति व्यवसितं तच्च तथा भुञ्जानस्यो- त्क्षिप्तं, तेन भुञ्जानेन प्रतिसिद्धं पर्याप्तं मा मह्यं देहि, । अस्मिन् देशकाले साधुना तत्र प्राप्तेन धर्मलाभितं ततः परिवेषको ब्रूते–साधा धारय पतद्ग्रहं साधुना पात्रं धारितं । तत्रानेन प्रक्षिप्तं इदं हस्तस्य हस्तमात्रस्य परिवर्त्तनात् । गाथायां सप्तमी पञ्चम्यर्थे जघन्यमुपहृतं भवति । एतेन दीयमानमिति व्याख्यातं, यच्च भवति प्रायोग्यमित्यनेन शुद्धसंसृष्टयोः प्रागुक्तयोरन्यतरत् गृहीतम् । तदेवं जं च ओगिण्हइ इति व्याख्यातं । सम्प्रति जं च साहरियमिति व्याख्यानाय तत्साहरिएति गाथाशकलमुक्तं तद्भावयति–

अह साहीरमाणं तु वट्टेउं जो उ दावए । दलेय वलितो तत्तो छट्ठाएं सावि एसणा ॥१२७॥

अथ वर्त्तयितुं संहूयमाणं यो दापयेत् तस्य वचनतः स परिवेषकः तस्मात्स्थानात् मनागप्यचलितो दद्यात् । एतत्संह्रियमाण- मुच्यते । एषापि षष्ठी एषणा द्रष्टव्या । जं च आसगंसि पक्खिवइ इत्यस्य व्याख्यानमाह–

भुत्तसेसं तु जं भूयो छुभंती पिठरे दए । संवदंतीव अन्नस्स आसगंमि पकासए ॥ १२८ ॥

प्रल्हादननिमित्तं किलिञ्जादिभाजने विशाले उत्ताने च क्षिप्तं ततो भोक्तुमुपविष्टानां दत्वा यत् भुक्तशेषं तत् भूयः पिठरे क्षिपन्ती साधवे दद्यात् । यदि वा अन्यस्य भाजने प्रकाशके प्रकाशे आस्यके तस्य मुखे संवर्धयन्ती दद्यात् । इति श्रीमलयागिरिविरचितायां व्यवहारटीकायां नवम उद्देशकः समाप्तः । ग्रंन्थाग्रं० ७०९ ।

व्य. सू.
उ. ९
॥२१॥

# નવમા ઉદ્દેશનો સાર તથા સૂત્રોની તથા ભાષ્યની ગાથાની અનુક્રમણિકા.

સૂ.-(૧) સાગારિક (શય્યાતર)ના ઘરમાંની પડાળીમાં પરોણો કોઇ રસોઈ કરીને જમે તેમાં સાગારિકનો સંબંધ હોયતો તે વહોરાવે
તોપણ સાધુને લેવું ન કલ્પે. (૨) પણ જો તેમાં સાગારિકનો સંબંધ ન હોય, વહોરાવનારનું તદ્દન જુદું હોયતો સાધુને લેવું કલ્પે.
(૩) સાગારિકની બહારની પડાળીમાં પરોણો રસોઇ કરે તેમાં સાગારિકનો સંબંધ હોયતો ન કલ્પે. (૪) પણ તે પરોણાની રસોઈમાં
સાગારિકનો સંબંધ છુટી જાયતો પછી લેવું કલ્પે. (૫-૮) તેજ પ્રમાણે શયાતરનો દાસ, હલકારો નોકર નોકરડીની રસોઈમાં જ્યાંસુધી
સાગારિકનો સંબંધ હોય ત્યાં સુધી ન કલ્પે, પણ છુટયા પછી કલ્પે, ભા. ગા. ૧ થી ૧૨, પા. ૧ થી ૩.

( આ આઠ સૂત્રો મેમાન તથા દાસદાસી નોકર વિગેરે માટે કહ્યાં છે, તેમાં શયાતરના સંબંધનાં ત્યાગવાં પણ સંબંધ ન હોય ત્યાં
કારણ પડે ગોચરી લેવાય. )

સૂ.-(૯) શય્યાતરનો ન્યાતિલો તેના ઘરની અંદરની પડાળીમાં એક ચૂલે રસોઇ કરી તેને આશ્રયે નિર્વાહ કરતો હોય તો તે વહો-
રાવે તોપણ ન કલ્પે, (૧૦) તેજ પ્રમાણે ન્યાતિલો જુદા ચૂલે તેજ પડાળીમાં રસોઈ કરી ખાતો હોયતો ન કલ્પે, (૧૧) શયાતરની બહા-
રની પડાળીમાં એકજ ચૂલે રસોઇ કરતો હોય તોપણ ન કલ્પે. (૧૨) જુદા ચૂલે કરતો હોય તોપણ ન કલ્પે. (૧૩) શય્યાતરની પડાળી
જુદી પણ જવા આવવાનો દરવાજો એક હોય અને એક ચૂલે રસોઈ કરી ખાતો હોય તોપણ ન કલ્પે. (૧૪) ચૂલા જુદા હોય તોપણ
ન કલ્પે. (૧૫) શયાતરની જુદી પડાળીમાં બહારના ભાગમાં એક ચૂલે રાંધી ખાતો હોય તો તે વહોરાવે તો તે ન કલ્પે. (૧૬) જુદા ચૂલે
રાંધી ખાતો હોય તોપણ ન કલ્પે.

સૂત્ર ૩૩ થી ૩૬ શયાતરની સાથે શાખની દુકાન ભાગમાં હોય છે તેમાંની દવા માટે પણ ન કલ્પે, પણ ભાગ જુદો પડે તો કલ્પે, તેજ પ્રમાણે કેરીઓ માટે પણ જાણવું, ગાથા ૩૫ થી ૭૩, પા. ૭ થી ૧૨.

(આ બધાં સૂત્રોમાં શયાતરનો પિંડ ન આવે, તે ધ્યાનમાં રાખવાનું છે.)

સૂત્ર ૩૭ સાધુની સાતસાતમી પ્રતિમા ૪૯ દિવસે પુરી થાય છે અને તેથાં ૧૯૬ ભિક્ષા થાય છે, પા. ૧૨ ગાથા ૭૫.

સૂત્ર–૩૮–૩૯–૪૦ તેજ પ્રમાણે આઠ આઠમી ૬૪ દિ. ૨૮૮ ભિક્ષા થાય છે નવ નવમી ૮૧ દિ. ૪૦૫ ભિક્ષા થાય છે. દશ દશમી ૧૦૦ દિવસે અને ૫૫૦ ભિક્ષા થાય છે. ભા. ગા. ૭૬ થી ૮૬ પા. ૧૨ થી ૧૩.

સૂ. ૪૧–૪૨ માં નાની મોટી મોય પડિમાનું વર્ણન છે. તે પડિમા ધારનારો પુરૂષ પડિમા પુરી થતાં કાંતો મોક્ષમાં જાય છે, કાંતો સુવર્ણ શરીરવાળો નિરોગી બને છે. તે સાત કે આઠ ઉપવાસમાં પૂરી થાય જે. ભા. ગા. ૮૭ થી ૧૦૭ પા. ૧૩–૧૪.

સૂત્ર–૪૩ દત્તિની સંખ્યાનો અભિગ્રહ ધારણ કરનારનું વર્ણન એમાં છે, તે દત્તિ અને ભિક્ષાનું સ્વરૂપ બતાવ્યું છે.

સૂત્ર–૪૪ ઉપરનું સૂત્ર પાતરાં ધારણ કરનાર માટે છે, અને આ સૂત્ર હાથમાં ખાનાર જિનકલ્પી સાધુ માટે છે. ભા. ગા. ૧૦૮ થી ૧૧૫ પા. ૧૪–૧૮.

સૂત્ર ૪૫–ત્રણ ઉપહૃત છે, ત્રણ પ્રકારે ઉપહૃત છે તેમાં શુદ્ધ ઉપહૃત તે કાંજીના પાણીથી મિશ્રિત વસ્તુ હોય જેમાં ચીકટ કે મસાલો નહોય, અથવા ચોખો ભાત રાંધેલો તે, અને સંસૃષ્ટ ઉપહૃત તે તેના ભાણામાં પીરસ્યો હોય, આ શુદ્ધ હોય કે ચીકટવાળો પણ હોય, અને ફલિત તે શાખ સાથે હોય ને તેમાં અવશ્યે ચીકટ હોય, માગધીમાં ઉવહડ શબ્દનો અર્થ કોષમાં ઉપહૃત લીધો છે ટીકાકાર મહા–

અભિનિ વગડાનો અર્થ જુદું ઘર છે, એગ વગડાને એકજ ઘર છે. ઘરની પડાળીમાં રસોઇ કરે તેને આશ્રથી આઠ ભેદ પાડયા,

व्य. सू. उ. प. ॥२२॥

| | | | | | |
|---|---|---|---|---|---|
| ૧ એક ચૂલો એક પડાળી અંદરના ભાગમાં | તેજ પ્રમાણે | ૩ ,, | બહારના ભાગમાં | } | તેજ ઘરમાં |
| ૨ જુદા ચૂલા ,, ,, | તેજ પ્રમાણે | ૪ ,, | ,, | | |

આજ પ્રમાણે ચાર ભાંગા જુદા ઘરના આ આઠે ભાંગામાં દરવાજો એક હોવાથી શયાતરનો સંબંધ રહેવાથી સાધુને તે ન્યાતિલા પાસેથી લેવું ન કલ્પે ભા. ગા. ૧૪ થી ૨૧ પા. ૩ થી ૫.

કેટલીક વખતે પરોણાનું પોતાનુંજ અનાજ હોય અથવા શયાતરે તેને સીધું આપી દીધું હોય તેમાં શયાતરનો હક ન હોય છતાં પણ પરોણાનું લેતાં દેખેતો પોતે પોતાનું તેમાં ઉમેરે અથવા દ્વેષ કરે કે એનું લે છે અને મારૂં નથી લેતા, તેથી તેના દેખતાં ન લેવું. (૧૮)

સૂત્ર ૧૭ શય્યાતરની સાથે ભાગમાં દુકાન હોય તેમાં તેલ વેચાતું હોયતો શય્યાતરનો ભાગ જુદો પાડયા વિના ન લેવાય. પણ તેનો ભાગ આપ્યા પછી બીજો વહેરાવેતો લેવાય, (૧૯–૩૦) એજ પ્રમાણે સચિત મીઠું કપડું સૂત્ર કપાસ સુગંધી કે શૌંડિક (નસાની ચીજ)ની દુકાન શયાતર સાથે ભાગમાં હોય અને ભાગ ન વહેંચાય ત્યાંસુધી તેમાંથી બીજા પાસે ન લેવાય, પણ ભાગ જુદા પાડયા પછી લેવાય, ( આમાં કેટલીક વસ્તુ સાધુને અભક્ષ્ય હોવાથી લેવાતી નથી પણ દવાના કારણે લેવી પડે તો પણ શયાતરનો ભાગ જુદો ન પડે ત્યાં સુધી દવામાં પણ ન લેવાય, આ પ્રમાણે દરેકનાં બબે સૂત્ર લેવાય એમ ૩૦ થયાં ) ગાથા ૨૨ થી ૩૪ પા. ૫ થી ૭.

સૂ. ૩૧–૩૨ શયાતરની શોધિક ( ) શાળામાંથી તેતો ભાગ જુદો ન પડે ત્યાં સુધી ન કલ્પે, જુદો પડેથી કલ્પે.

રાજે ગોચરી લેનારની નિશ્રાએ ઉપહૂત શબ્દ લીધો છે તેનો અર્થ ખાવાની ઈચ્છાનો થાય છે, અને ઉપહૃતનો અર્થ પાસે લેવાનો છે. તે

વ્ય. સૂ. ઉ. ૫. ॥૨૩॥ પીરસનારની અપેક્ષાએ છે.

સુત્ર ૪૯—ત્રણ પ્રકારે અવગૃહિત છે, લેવું, પીરસવું, મોઢાંમા નાંખવું. કેટલાક આચાર્ય બે પ્રકારે અવગૃહિત કહે છે, એટલે લેવું અને મોઢામાં મુકવું, અહીં શિષ્ય શંકા કરે કે ગૃહસ્થે મોઢામાં મુકેલું પછી સાધુ તેના એઠા હાથે ગોચરી લે તે એઠું કહેવાય, તે લોકમાં નિંદ્ય છે તેનું કેમ ? તેનો આચાર્ય ખુલાસો કરે છે કે મોઢાનો અર્થ ખાનારનું મોં નહિ પણ પીરસનારે પીરસતાં જે વધ્યું હોય તે વાસણમાં પાછું નાંખે, તે વાસણનું મોંઢું લેવું, અર્થાત્ એઠા હાથે ગોચરી લેવાની નથી, પણ પીરસતાં જે વધ્યું હોય તે સાધુને વહોરાવે તે લેવાથી શુદ્ધ ગોચરી ગણાય છે.

(જે શ્રાવક શ્રાવિકા એઠું વહોરાવતાં હોય કે તેના એઠા હાથે લેવામાં સમજ ફેર થતી હોય તે આ બાબત ઉપર જરૂર લક્ષ આપશે)

મુનિ માણેક.

લુણુસાવાડા,
૧૯૮૪ પ્રથમ શ્રાવણ વદી ૯.

# દશમા ઉદ્દેશાનો સૂત્ર સાર તથા ભાષ્ય ગાથાની અનુક્રમણિકા

સૂત્ર ૧-૨. માં યવમધ્ય ચંદ્રપ્રતિમા અને વજ્ર મધ્ય પ્રતિમાનું વર્ણન છે. મધ્યમાં જવ જાડો હોય બંને છેડે પાતળો હોય; તેમ સુદ ૧ થી આહારની એક તેમ પાણીની એક દત્તી લે તે પુનમે પંદર દત્તી આવે અને પાછો ઘટે તે અમાવાસ્યાએ ઉપવાસ આવે, આ પ્રતિમા તપ ધારણ કરનારને તેટલા દિવસમાં દેવતા મનુષ્ય તીર્યંચથી જે અનુકુળ પ્રતિકુળ સુખ દુઃખ આવે તે શાંતિથી સહન કરવાનાં છે, તેમ પોતાની ગોચરી લેતાં કોઇ પણ મનુષ્ય કે પશુ પક્ષીને પીડા ન થાય. તેમ વર્ત્તવાનું છે, તેમ ગોચરી નિર્લેપ નિર્દોષ બારણાની બહાર ઉભા રહીને બાઇ કે ભાઇ જે વહોરાવનાર હોય તેનો એક પગ અંદર અને એક પગ ઉંબરા બહાર હોય તેમ લેવાનું છે, વજ્ર મધ્યમાં એટલું વિશેષ કે તે વદી ૧ થી એક દત્તી આહારની તથા એક પાણીની લે. તે અમાવાસ્યાએ પંદર અને સુદ ૧૫ મે ઉપવાસ આવે, ( બંને પડિમાઓ ચંદ્રમાસ સાથે સંબંધ રાખે છે માટે ચંદ્ર શબ્દ જોડયો છે, એક સુદ ૧ થી બીજી વદી ૧ થી લેવાય છે ) ભાષ્યની ૧૨ મી ગાથામાં તેનું ચંદ્રાયણ તપ નામ છે, તે જવ મધ્ય જાણવી, ભાષ્ય ગા. ૫૦ સુધી આ બંનેનું વર્ણન છે, પા. ૮—

સૂત્ર ૩—વ્યવહાર પાંચ પ્રકારનો છે તેનું વર્ણન છે.

વ્યવહાર નામ ન્યાયનું છે, દીવાની ફોજદારી જેમ કાયદા છે તેમ આ સાધુ સમાજનું બંધારણ છે, પોતાની ભૂલો પોતે જ્ઞાનથી જાણી બીજા જ્ઞાની સંવિગ્નસાધુ પાસે પ્રાયશ્ચિત લેઇ શુદ્ધ થવું તેનું વર્ણન છે.

આગમના અર્થ અહીં આત્માની સાથે જેને નિર્મળ જ્ઞાનનો બોધ હોય તે કેવળજ્ઞાની અથવા મનપર્યવજ્ઞાની કે અવધિજ્ઞાની સાધુ જાણવા, તેઓને પ્રાયશ્ચિત્ત લેનારના ભાવ જાણવામાં હોય છતાં પણ તે પોતે પોતાના દોષ બોલે તો તેને વિશેષ લાભ છે, એમ જાણીને તેની પાસે બોલાવે, અને અજાણે ભૂલ થતી હોય તો બતાવે, પણ જો કપટ કરતો હોય તો પોતે પ્રાયશ્ચિત્ત નથી આપતા બીજા પાસે લેવાનું કહે છે તેઓ સૂર્ય માફક સ્વયં પ્રકાશી હોવાથી સૂત્રથી કામ લેતા નથી, આ આગમ ન્યાય પહેલા નંબરનો છે.

બીજે નંબર શ્રુત છે. તે નિશીથ બૃહત્કલ્પ અને વ્યવહાર સૂત્રના આધારે પ્રાયશ્ચિત્ત અપાય છે. પછી ત્રીજો આજ્ઞા અને ચોથો ધારણા છેવટે પાંચમો જિત વ્યવહાર છે. તે દરેકનું વર્ણન અહીં ખુલાસાવાર આપ્યું છે.

આભવત્ શબ્દનો અર્થ ચોમાસું કરનારા કે આઠ માસ વિચરતા સાધુઓમાં ક્ષેત્રને આશ્રયીકોનો કેટલો હક તેનું વર્ણન છે.

ઉપસંપદા શબ્દનો અર્થ જ્ઞાન દર્શન ચારિત્ર અને સુખ દુઃખમાં એક બીજાને મદદ આપવા માટે તેની આજ્ઞામાં અમુક કાળ કે જાવજીવ સુધી રહેવાનો અધિકાર છે.

સંક્ષેપથી પાંચ પ્રકારના વ્યવહારનું વર્ણન ભા. ૧૯૯ પા. ૩૧ સુધી છે, આ પાંચે પ્રકારનો વ્યવહાર દુર્ગતિ નામનો ભય ચૂરનારા તીર્થંકરદેવે કહેલ છે, તેવું ૨૦૦ મી ગાથામાં ભાષ્યકાર મહારાજ કહે છે, ૨૦૧ ગાથામાં આગળ વ્યવહારના બે ભેદ બતાવે છે. પ્રત્યક્ષ અને પરોક્ષ, પ્રત્યક્ષમાં પ્રથમ કહેલ કેવળજ્ઞાની મનપર્યવજ્ઞાની તથા અવધિ

છે. પણ તે શ્રતજ્ઞાન હોવાથી પરોક્ષ જ્ઞાની છે, ૨૦૭ ગાથામાં પ્રત્યક્ષ માફક જેને પરોક્ષ જ્ઞાન છે તે પણ આગમવ્યવહારી છે. પણ તે શ્રતજ્ઞાન હોવાથી પરોક્ષ જ્ઞાની છે, ૨૦૭ ગાથામાં પ્રત્યક્ષ માફક જેને પરોક્ષ જ્ઞાન છે, તે પરોક્ષ જ્ઞાની ચૌદ પૂર્વીથી નવ પૂર્વી સુધી જાણવા, ૨૦૯ ગાથામાં તેમને ગંધહસ્તિની ઉપમા આપી છે, તથા ૨૧૦ માં જીવ અજીવાદિ પદાર્થો નય વિકલ્પ વિગેરેથી સંપૂર્ણ જાણનારા કહ્યા છે, તેઓ ન્યાય કરતાં પ્રાયશ્ચિત લેનારની રાગદ્વેષની હાનિ વૃદ્ધિ ઉપર આધાર રાખી ઓછું વધતું પ્રાયશ્ચિત આપે છે, પ્રાયશ્ચિત આપનારની યોગ્યતા માટે તેના ૧૮ ગુણોના સ્થાનોનું વર્ણન છે, ગાથા ૨૪૫ સુધી, ત્યારપછી ૩૨ અને ત્યારપછી ૩૬ ગુણોનું વર્ણન છે તેવા ઉત્તમ ગુણધારક આગમ વ્યવવહારી રાગદ્વેષ રાહત તે જિનેશ્વરની આજ્ઞા પ્રમાણે પૂર્વધરો પ્રાયશ્ચિત આપે છે. ભા–ગા–૩૩૪ પા.–૪૬ । અહીં વાદી પૂછે છે કે તેવા જ્ઞાનીનો હાલ વિચ્છેદ છે તે વાદી પૂર્વપક્ષ કરે છે–અને તે ફક્ત સમ્યગ્ દર્શન તથા જ્ઞાન ઉપર તીર્થ ચાલે છે તે ૩૪૩ ગાથા સુધી બતાવે છે, આચાર્ય મહારાજ તેના સમાધાન માટે ૩૪૬ સુધી વર્ણન કરે છે અને નવમા પ્રત્યાખ્યાન નામના પૂર્વમાંથી ત્રીજી વસ્તુમાંથી નિશીથ બૃહત્કલ્પ અને વ્યવહાર સૂત્ર ઉદ્ધર્યાનું બતાવ્યું છે. ગા–૭૨૪ માં પા. ૯૪ મે સમાપ્ત થાય છે. ત્યાં ભાષ્યકાર મહારાજ ૭૨૩–૨૪ ગાથામાં વ્યવહાર સૂત્ર ટીકા કરવામાં પોતાની અસમર્થતા બતાવે છે, અને તેની પ્રશંસા કરતા કહે છે કે

एसो मे परि कहिओ दुवालसंगस्स णवणीयं

આ જે કહેલ છે તે વ્યવહાર સૂત્ર બાર અંગનું નવનીત છે, એટલે જેમ દહીમાંથી માખણ તારવે, તેમ શ્રીભદ્રબાહુસ્વામીએ આ બાર અંગનું તત્ત્વ તારી કાઢેલું છે,

ઠ. ઉ. સાર.

સૂત્ર ૪—ચાર જાતના પુરૂષ તેમાં સંશયનો અર્થ સાધે, પણ માન ન કરે, બીજો સંશય અર્થ ન સાધે, પણ માન કરે, ત્રીજો બંને કરે, ચોથો બંને ન કરે, એમ ચાર ભાગમાં પહેલો ત્રીજો કામના, બીજો ચોથો નકામા છે, ગાથા–૧૪

સૂત્ર ૫—માં ગણ તે સાધુ સમુદાયના અર્થે પ્રયાસ કરે, પણ માન ન કરે, તે ચાર ભંગા–ગા–૧૮ સુધી. ા સૂત્ર ૭ માં ગણના રક્ષણ માટે ઉપધિ તથા જ્ઞાન વિગેરેમાં સહાયતા કરે તે ગા.–૨૦ ા સૂત્ર ૭ ગણની શોભા પ્રભાવક બનીને વધારે તેનું વર્ણન ગા–છે.

સૂત્ર ૮—ગણની શોધિ અતિચાર અનાદરની શુદ્ધિ કરે, તેના ચાર ભાંગા છે, ગા. ૨૩–૨૪

સૂત્ર ૯—સાધુ વેષ અને ધર્મ સાથે ચાર ભાંગા એટલે કારણ પડે વેષ તજે પણ ધર્મ ન તજે, વિગેરે. ૨૫–૨૮

સૂત્ર ૧૦–ધર્મ અને ગણની મર્યાદા આશ્રયી ચાર ભાંગા જેમ ધર્મ તજે પણ ગણની મર્યાદા ન તજે વિગેરે. ૨૯–૩૨

સૂત્ર ૧૧–પ્રિય ધર્મ અને દઢ ધર્મ આશ્રયી ચાર ભાંગાનું વર્ણન. ૩૩–૩૬

સૂ–૧૨ દીક્ષા આપનાર વડી દીક્ષા આપનારના આશ્રયી ચાર ભાંગા છે, તેમાં દીક્ષા પણ આપનાર વડી દીક્ષા પણ ન આપનાર એ ચોથા ભાગામાં જૈન ધર્મ પમાડનાર ધર્માચાર્ય છે, પ્રથમના બે તો સાધુ હોય પણ ધર્માચાર્યમાં તો ગૃહસ્થી પણ હોય, ૩૭ થી ૪૧

સૂ–૧૩ તેજ પ્રમાણે સૂત્ર પાઠ અર્થનો બોધ આપનાર આશ્રયી ઉદ્દેશન આચાર્ય, વાચનાચાર્ય તેમાં ચોથા ભાગમાં તે બેથી રહિત ધર્માચાર્ય જાણવો, ગાથા ૪૨

# દશમા ઉદ્દેશાનો સૂત્ર સાર તથા ભાષ્ય ગાથાની અનુક્રમણિકા

સૂત્ર ૧–૨. માં યવમધ્ય ચંદ્રપ્રતિમા અને વજ્ર મધ્ય પ્રતિમાનું વર્ણન છે. મધ્યમાં જવ જાડો હોય બંને છેડે પાતળો હોય; તેમ સુદ ૧ થી આહારની એક તેમ પાણીની એક દત્તી લે તે પુનમે પંદર દત્તી આવે અને પાછો ઘટે તે અમાવાસ્યાએ ઉપવાસ આવે, આ પ્રતિમા તપ ધારણ કરનારને તેટલા દિવસમાં દેવતા મનુષ્ય તીર્યંચ થી જે અનુકુળ પ્રતિકુળ સુખ દુઃખ આવે તે શાંતિથી સહન કરવાનાં છે, તેમ પોતાની ગોચરી લેતાં કોઇ પણ મનુષ્ય કે પશુ પક્ષીને પીડા ન થાય. તેમ વર્ત્તવાનું છે, તેમ ગોચરી નિર્લેપ નિર્દોષ બારણાની બહાર ઉભા રહીને બાઇ કે ભાઇ જે વહોરાવનાર હોય તેનો એક પગ અંદર અને એક પગ ઉંબરા બહાર હોય તેમ લેવાનું છે, વજ્ર મધ્યમાં એટલું વિશેષ કે તે વદી ૧ થી એક દત્તી આહારની તથા એક પાણીની લે. તે અમાવાસ્યાએ પંદર અને સુદ ૧૫ મે ઉપવાસ આવે, ( બંને પડિમાઓ ચંદ્રમાસ સાથે સંબંધ રાખે છે માટે ચંદ્ર શબ્દ જોડયો છે, એક સુદ ૧ થી બીજી વદી ૧ થી લેવાય છે ) ભાષ્યની ૧૨ મી ગાથામાં તેનું ચંદ્રાયણ તપ નામ છે, તે જવ મધ્ય જાણવી, ભાષ્ય ગા. ૫૦ સુધી આ બંનેનું વર્ણન છે, પા. ૮–

સૂત્ર ૩—વ્યવહાર પાંચ પ્રકારનો છે તેનું વર્ણન છે.

વ્યવહાર નામ ન્યાયનું છે, દીવાની ફોજદારી જેમ કાયદા છે તેમ આ સાધુ સમાજનું બંધારણ છે, પોતાની ભૂલો પોતે જ્ઞાનથી જાણી બીજા જ્ઞાની સંવિગ્નસાધુ પાસે પ્રાયશ્ચિત લેઇ શુદ્ધ થવું તેનું વર્ણન છે.

આગમનો અર્થ અહીં આત્માની સાથે જેને નિર્મળ જ્ઞાનનો બોધ હોય તે કેવળજ્ઞાની અથવા મનપર્યવજ્ઞાની કે અવધિજ્ઞાની સાધુ જાણવા, તેઓને પ્રાયશ્ચિત્ત લેનારના ભાવ જાણવામાં હોય છતાં પણ તે પોતે પોતાના દોષ બોલે તો તેને વિશેષ લાભ છે, એમ જાણીને તેની પાસે બોલાવે, અને અજાણે ભૂલ થતી હોય તો બતાવે, પણ જો કપટ કરતો હોય તો પોતે પ્રાયશ્ચિત્ત નથી આપતા બીજા પાસે લેવાનું કહે છે તેઓ સૂર્ય માફક સ્વયં પ્રકાશી હોવાથી સૂત્રથી કામ લેતા નથી, આ આગમ ન્યાય પહેલા નંબરનો છે.

બીજે નંબર શ્રુત છે. તે નિશીથ બૃહત્કલ્પ અને વ્યવહાર સૂત્રના આધારે પ્રાયશ્ચિત્ત અપાય છે. પછી ત્રીજો આજ્ઞા અને ચોથો ધારણા છેવટે પાંચમો જિત વ્યવહાર છે. તે દરેકનું વર્ણન અહીં ખુલાસાવાર આપ્યું છે.

આભવત્ શબ્દનો અર્થ ચોમાસું કરનારા કે આઠ માસ વિચરતા સાધુઓમાં ક્ષેત્રને આશ્રયીકોનો કેટલો હક તેનું વર્ણન છે.

ઉપસંપદા શબ્દનો અર્થ જ્ઞાન દર્શન ચારિત્ર અને સુખ દુ:ખમાં એક બીજાને મદદ આપવા માટે તેની આજ્ઞામાં અમુક કાળ કે જાવજીવ સુધી રહેવાનો અધિકાર છે.

સંક્ષેપથી પાંચ પ્રકારના વ્યવહારનું વર્ણન ભા. ૧૯૯ પા. ૩૧ સુધી છે, આ પાંચે પ્રકારનો વ્યવહાર દુર્ગતિ નામનો ભય ચૂરનારા તીર્થંકરદેવે કહેલ છે, તેવું ૨૦૦ મી ગાથામાં ભાષ્યકાર મહારાજ કહે છે, ૨૦૧ ગાથામાં આગળ વ્યવહારના બે ભેદ બતાવે છે. પ્રત્યક્ષ અને પરોક્ષ, પ્રત્યક્ષમાં પ્રથમ કહેલ કેવળજ્ઞાની મનપર્યવજ્ઞાની તથા અવધિ

જ્ઞાની છે, ૨૦૭ ગાથામાં પ્રત્યક્ષ માફક જેને પરોક્ષ જ્ઞાન છે તે પણ આગમવ્યવહારી છે. પણ તે શ્રુતજ્ઞાન હોવાથી પરોક્ષ જ્ઞાન છે, તે પરોક્ષ જ્ઞાની ચૌદ પૂર્વીથી નવ પૂર્વી સુધી જાણવા, ૨૦૯ ગાથામાં તેમને ગંધહસ્તિની ઉપમા આપી છે, તથા ૨૧૦ માં જીવ અજીવાદિ પદાર્થો નય વિકલ્પ વિગેરેથી સંપૂર્ણ જાણનારા કહ્યા છે, તેઓ ન્યાય કરતાં પ્રાયશ્ચિત લેનારની રાગદ્વેષની હાનિ વૃદ્ધિ ઉપર આધાર રાખી ઓછું વધતું પ્રાયશ્ચિત આપે છે, પ્રાયશ્ચિત આપનારની યોગ્યતા માટે તેના ૧૮ ગુણોના સ્થાનોનું વર્ણન છે, ગાથા ૨૪૫ સુધી, ત્યારપછી ૩૨ અને ત્યારપછી ૩૬ ગુણોનું વર્ણન છે તેવા ઉત્તમ ગુણધારક આગમ વ્યવવહારી રાગદ્વષ રાહત તે જિનેશ્વરની આજ્ઞા પ્રમાણે પૂર્વધરો પ્રાયશ્ચિત આપે છે. ભા—ગા—૩૩૪ પા.—૪૬ । અહીં વાદી પૂછે છે કે તેવા જ્ઞાનીનો હાલ વિચ્છેદ છે તે વાદી પૂર્વપક્ષ કરે છે—અને તે ફક્ત સમ્યગ્ દર્શન તથા જ્ઞાન ઉપર તીર્થ ચાલે છે તે ૩૪૩ ગાથા સુધી બતાવે છે, આચાર્ય મહારાજ તેના સમાધાન માટે ૩૪૬ સુધી વર્ણન કરે છે અને નવમા પ્રત્યાખ્યાન નામના પૂર્વમાંથી ત્રીજી વસ્તુમાંથી નિશીથ બૃહતકલ્પ અને વ્યવહાર સૂત્ર ઉદ્ધર્યાનું બતાવ્યું છે. ગા—૭૨૪ માં પા. ૯૪ મે સમાપ્ત થાય છે. ત્યાં ભાષ્યકાર મહારાજ ૭૨૩—૨૪ ગાથામાં વ્યવહાર સૂત્ર ટીકા કરવામાં પોતાની અસમર્થતા બતાવે છે, અને તેની પ્રશંસા કરતા કહે છે કે

एसो भे परि कहिओ दुवालसंगस्स णवणीयं

આ જે કહેલ છે તે વ્યવહાર સૂત્ર બાર અંગનું નવનીત છે, એટલે જેમ દહીંમાંથી માખણ તારવે, તેમ શ્રીભદ્રબાહુસ્વામીએ આ બાર અંગનું તત્ત્વ તારી કાઢેલું છે,

ઠ. ઉ. સાર.

સૂત્ર ૪—ચાર જાતના પુરૂષ તેમાં સંશયનો અર્થ સાધે, પણ માન ન કરે, બીજો સંશય અર્થ ન સાધે, પણ માન કરે, ત્રીજો બંને કરે, ચોથો બંને ન કરે, એમ ચાર ભાગમાં પહેલો ત્રીજો કામના, બીજો ચોથો નકામા છે, ગાથા–૧૪

સૂત્ર ૫—માં ગણ તે સાધુ સમુદાયના અર્થે પ્રયાસ કરે, પણ માન ન કરે, તે ચાર ભંગા–ગા–૧૮ સુધી. ।। સૂત્ર ૬ માં ગણના રક્ષણ માટે ઉપધિ તથા જ્ઞાન વિગેરેમાં સહાયતા કરે તે ગા.–૨૦ ।। સૂત્ર ૭ ગણની શોભા પ્રભાવક બનીને વધારે તેનું વર્ણન ગા–છે.

સૂત્ર ૮—ગણની શોધિ અતિચાર અનાદરની શુદ્ધિ કરે, તેના ચાર ભાંગા છે, ગા. ૨૩–૨૪

સૂત્ર ૯—સાધુ વેષ અને ધર્મ સાથે ચાર ભાંગા એટલે કારણ પડે વેષ તજે પણ ધર્મ ન તજે, વિગેરે. ૨૫–૨૮

સૂત્ર ૧૦–ધર્મ અને ગણની મર્યાદા આશ્રયી ચાર ભાંગા જેમ ધર્મ તજે પણ ગણની મર્યાદા ન તજે વિગેરે. ૨૯–૩૨

સૂત્ર ૧૧–પ્રિય ધર્મ અને દ્દઢ ધર્મ આશ્રયી ચાર ભાંગાનું વર્ણન. ૩૩–૩૬

સૂ–૧૨ દીક્ષા આપનાર વડી દીક્ષા આપનારના આશ્રયી ચાર ભાંગા છે, તેમાં દીક્ષા પણ આપનાર વડી દીક્ષા પણ ન આપનાર એ ચોથા ભાગામાં જૈન ધર્મ પમાડનાર ધર્માચાર્ય છે, પ્રથમના બે તો સાધુ હોય પણ ધર્માચાર્યમાં તો ગૃહસ્થી પણ હોય, ૩૭ થી ૪૧

સૂ–૧૩ તેજ પ્રમાણે સૂત્ર પાઠ અર્થનો બોધ આપનાર આશ્રયી ઉદ્દેશન આચાર્ય, વાચનાચાર્ય તેમાં ચોથા ભાગમાં તે બેથી રહિત ધર્માચાર્ય જાણવો, ગાથા ૪૨

ॐ

# सभाष्ये व्यवहारसूत्रे दशमोद्देशकः

तदेवं व्याख्यातो नवम उद्देशकः । सम्प्रति दशम आरभ्यते। तत्र चेदमादिसूत्रं—

४ दो पडिमाओ पण्णत्ताओ तं जहा जवमज्झा य चंदपडिमा य वयरमज्झा य चंदपडिमा जव-
मज्झणं चंदपडिमं पडिवन्नस्स अणगारस्स निच्चं मासं वोसट्ठकाये चियत्तदेहे जे केई परीसहोवसग्गा समु-
पज्जंति दिव्वा वा माणुस्सगा वा तिरिक्खजोणिया वा ते उपन्ने सम्मं सहइ खमइ तिइक्खेइ अहियासेइ, जवम-
ज्झणं चंदपडिमं पडिवन्नस्स अणगारस्स सुक्कपक्खस्स से पाडिवए कप्पइ एगादत्ती भोयणस्स पडिगाहेत्तए, एगा-
८ पाणस्स, अन्नायउंछं सुद्धोवहडं निज्जूहित्ता बहवे समणमाहणअइहि किवण वणीमगा कप्पइ से एगस्स भुंज-
माणस्स पडिगाहेत्तए, नो दोण्हं नो तिण्हं नो चउण्हं नो पंचण्हं नो गुव्वीए नो बालवत्थाए नो दारगं पेज्जमाणीए
नो अंतोएलुयस्स दोवि पाए साहट्टु दलमाणी एगं पायं अंतो किच्चा एगं पायं बाहिं किच्चा एलुयं विक्खंभइत्ता एवं
११ दलयइ एवं से कप्पइ पडिगाहेत्तए, एवं नो दलयइ, एवं से नो कप्पइ पडिगाहेत्तए बिइज्जाए से कप्पइ दोण्णि

व्य. सू. १ ॥ १ ॥ दत्तीओ भोयणस्स पडिगाहेत्तए दोण्णि पाणस्स तइयाए से कप्पइ तिण्णीदत्तीओ भोयणस्स पडिगाहेत्तए तिण्णीपाणस्स....पन्नरस्समीए से कप्पइ पन्नरस्सदत्तीओ भोयणस्स पडिगाहेत्तए पन्नरस पाणस्स, बहुलपक्खस्स से पाडिवए कप्पन्ति चोद्दस; ( छापेली प्रति )

दो पडिमाओ पन्नताओ तं जहा जवमज्झा य चंदपडिमा य वयरमज्झचंदपडिमा, जवमज्झं चंदपडिमं पडिवन्नस्स अणगारस्स मासं
१६ निच्चं वोसठकाए चियत्तदेहे जे केई परीसहोवसग्गा समुवज्जंति तं जहा दिव्वां वा माणुस्सा वा तिरिक्खजोणिया वा अणुलोमा वा पडिलोमा वा तत्थ अणुलोमा ताव वंदेज्जा वा नमंसिज्जा वा सक्कारेज्जा वा सम्माणेज्जा वा कल्लाणं मंगलं देवयं चेइयं पज्जुवासेज्जा, पडिलोमा अन्नयरेणं दंडेण वा अट्ठिण वा जोएण वा वेत्तेण वा कसेण वा काए आउट्टेज्जा ते सव्वे उपन्ने समासहेज्जा समेज्जा तितिखिज्जा अहियासेज्जा जवमज्झण्हं चंद-पडिमं पडिवन्नस्स अणगारस्स सुक्कपक्खस्स पडिवए कप्पइ एगा दत्ती भोयणस्स पडिगाहित्तए, एगा पाणस्स सव्वेहिं दुप्पयचउप्पयादिएहि आहारकंखीहिं सत्तेहिं पडिनियत्तेहिं अन्नायउंछं सुद्धोवहडं कप्पइ से एगस्स भुंजमाणस्स पडिग्गाहित्तए नो दुण्हं नो तिण्हं नो चउण्हं नो-पंचण्हं नो गुव्वीणीए नो बालवत्थाए नो दारगं पेज्जमाणिए नो से कप्पइ अंतो एलुयस्य दोवि पाए साहट्टुदल (य) माणीए पडिगाहित्तए अह-
२२ पुण एवं जाणेज्जा एगं पायं अंतो किच्चा एगं पायं बाहि किच्चा एलुयं विक्खंभइत्ता एयाए एसणाए लभेज्जा आहारेज्जा एयाए एसणाए नो लभेज्जा नो आहारेज्जा, बीयाए कप्पंति दोदत्तीओ भोयणस्स पडिगाहित्तए दो पाणगस्स सव्वेहिं दुप्पयचउप्पयाइएहिं आहारकंखीएहिं सत्तेहिं पडिनियत्तेहिं अण्णायं उंछं सुद्धोवहडं कप्पइ जाव नो आहारेज्जा एवं तत्तियाए तिन्नि जावपन्नरसिए पन्नरस, बहुलपक्खस्स पडि-वए से कप्पइ चउदस्सदत्तीओ बीयाए तेरस्स जाव चउदस्सीए एगदत्ती भोयणस्स एगपाणगस्स सव्वेहिं दुप्पयचउप्पयजाव नो आहारेज्जा

उ. १०. भा. १-३ ॥ २ ॥

अमावसाए सेय अभत्तट्ठभवई एवं खलु एसा जवमज्झचंदपडिमा अहासुत्तं जाव अणुपालिया भवइ,॥सू. १॥ वइरमज्झण्हं चंदपडिमं पडिवन्नस्स अणगारस्स मासं निच्चं वोसठकाए चियत्तदेहे जाव अहियासेज्जा वइरमज्झण्हं चंदपडिमं पडिवन्नस्स अणगारस्स वहुलपक्खस्स पडिवए कप्पइ पन्नरस्स दत्तीओ भोयणस्स पडिगाहित्तए, पन्नरस्स पाणगस्स सव्वेहिं दुप्पयचउप्पयजाव नो आहारेज्जा वीयाए से कप्पइ चउदस्स एवं अमावसाए एगा दत्ती सुक्का पडिवए से कप्पइ दो दत्तीओ वीयाए तिन्नी जाव चउदसीए पन्नरस्स पुन्नमीए अभत्तट्ठे भवइ एवं खलु एसा वइरमज्झचंदपडिमा अहासुत्तं जाव अणुपालिया भवइ ॥ सू. २ ॥ ( लखेली प्रतिना आधारे ) अस्य सम्वन्धप्रतिपादनार्थमाह—

**पगया अभिग्गहा खलु एस उ दसमस्स होइ संबंधो । संखा य समणुवत्तइ आहारे वावि अहिकारो ॥१॥**

प्रकृताः खलु नवमोद्देशकचरमसूत्रेष्वभिग्रहा अत्रापि ते एवाभिग्रहाः प्रतिपाद्या इत्येप दशमस्य दशमोद्देशकादिसूत्रस्य सम्वन्धः । अथवा नवमोद्देशकचरमानन्तरसूत्रे आहारे अभिहिता संख्या सा अत्राप्यनुवर्तते । तत आहारविषयसंख्याप्रस्तावादशमोद्देशकादिसूत्रस्याधिकारप्रवृत्तिः सूत्राक्षराणि सामान्यतः सुप्रतीतानि, विशेषस्तु भाष्यकारो व्याख्यानयति—

**जवमज्झ वयरमज्झा वोसठ चियत्त तिविह तीहिं तु । दुविहे वि सहइ सम्मं अण्णाउंछे य निक्खेवो ॥२॥**

यवमध्येतिपदं वज्रमध्येति पदं तथा व्युत्सृष्ट इति त्रिविधमुपसर्गं त्रिभिर्मनोवाक्कायैः सम्यक् सहते यदि वा द्विविधान् उपसर्गान् अनुलोमप्रतिलोमरूपान् त्रिभिः सम्यक् सहते । तथा अज्ञातोंछे च निक्षेप इति व्याख्येयमेष द्वारगाथासंक्षेपार्थः । साम्प्रतमेनामेव विवरीपुः प्रथमतो यवमध्येति वज्रमध्येति च व्याख्यानयति—

**उवमा जवेण चंदेण वा जवमज्झं चंदपडिमाए । एमेव य बिइयाए, वइरं वज्जंति एगट्ठं ॥ ३ ॥**

व्य॰ सू॰ १–२ ॥ २ ॥

यवमध्यचन्द्रपतिमाया यवेनोपमा चन्द्रेण च यवस्येव मध्यं यस्याः सा यवमध्या चन्द्रकारा प्रतिमा चन्द्रप्रतिमेति व्युत्पत्तेः । एवमेव द्वितीयाया अपि वक्तव्यम् । वज्रमध्यचन्द्रप्रतिमाया वज्रेणोपमा चन्द्रेण वज्रस्येव मध्यं यस्याः सा वज्रमध्या चन्द्राकारा प्रतिमा चन्द्रप्रतिमा प्राकृतमधिकृत्य वज्रशब्दस्य पर्यायेण व्याख्यानमाह–'वइरं वज्जंत्ति–एगट्ठं' इयमत्र भावना । शुक्लपक्षस्य प्रतिपदि चन्द्रविमानसदृशस्य पञ्चदशभागीकृतस्य एका कला दृश्यते । द्वितीयायां द्वे कले, तृतीयायां तिस्रः कला, एवं यावत् पञ्चदश्यां परिपूर्णाः पञ्चदश कलाः ततो वहुलपक्षस्य प्रतिपदि एकया कलया ऊनो दृश्यते चतुर्दश कला दृश्यन्ते । द्वितीयायां त्रयोदश तृतीयायां द्वादश यावदमावास्यायामेकापि न दृश्यते, तदेवमयं मास आदावूनो मध्ये सम्पूर्णोऽन्ते पुनरपि परिहीनो वाप्यादावन्ते च तनुको मध्ये विपुलः । एवं साधुरपि भिक्षां गृह्णाति शुक्लपक्षस्य प्रतिपदि एकां, द्वितीयस्यां द्वे, तृतीयस्यां तिस्रः यावत्पञ्चदश्यां पञ्चदश । ततो वहुलपक्षस्य प्रतिपदि पुनश्चतुर्दश, द्वितीयायां त्रयोदश यावच्चतुर्दश्यामेकाममावास्यायामुपोषितः । ततश्चन्द्राकारतया चन्द्रप्रतिमा आदावन्ते च भिक्षायास्तनुत्वान्मध्ये विपुलत्वात् यवमध्योपमितमध्यभागा, तथाऽमूमेव यवमध्यां चन्द्रप्रतिमामधिकृत्यान्यत्रोक्तं ॥

"एकैकां वर्धयेद् भिक्षां, शुक्ले कृष्णे च हापयेत् । भुञ्जीत नामावास्यायामेष चान्द्रायणविधिः ॥"

वज्रमध्यायां चन्द्रेण प्रतिमायां वहूलपक्ष आदौ क्रियते तत एवं भावना । वहुलपक्षस्य प्रतिपदि चन्द्रविमानस्य चतुर्दश कला दृश्यन्ते, द्वितीयस्यां त्रयोदश, तृतीयस्यां द्वादश यावच्चतुर्दश्यामेका अमावास्यायामेकापि न, ततः पुनरपि शुक्लपक्षस्य प्रतिपदि चन्द्रविमानस्यैका कला दृश्यते, द्वितीयायां द्वे, यावत्पञ्चदश्यां पञ्चदशापि तदयं मास आदावंते च पृथुलो मध्ये तनुको वज्रमप्यादावन्ते च विपुलं मध्ये तनुकमेवं साधुरपि भिक्षां गृह्णाति वहुलपक्षस्य पतिपदि चतुर्दश द्वितीयस्यां त्रयोदश तृतीयस्यां द्वादश यावत् अमावास्यायामुपोषितः ततः पुनरपि शुक्लपक्षस्य प्रतिपदि एकां भिक्षां गृह्णाति द्वितीयस्यां द्वे यावत्पञ्चदश्यां पञ्चदशेति । तत एषापि चन्द्राकारतया चन्द्रप्रतिमा

व्य. १०. भा. ४–७ ३ ॥

आदावन्ते विपुलतया मध्ये च तनुतया वज्रमध्योपमितमध्यभागा वज्रभागा वज्रमध्या एतदेव यवमध्यस्य चन्द्रप्रतिमामधिकृत्य सूचयन्नाह—

**पण्णरसे व उ काउं भागे तु सुक्कपक्खस्स । जा वड्ढयए दत्ती हवइ ता चेव कालेण ॥ ४ ॥**

शशिनं शशिविमानं पञ्चदशभागान् कृत्वा यथा शुक्लपक्षस्यादित आरभ्य कलाः प्रतिदिवसं वर्धन्ते, । एवं दत्तयोऽपि आरभ्य या वर्ध्यते ता एव कालेन कृष्णेन पक्षेण क्रमेण हापयेत् । एवं विपरीतक्रमेण वज्रमध्यचन्द्रप्रतिमायामपि द्रष्टव्यम् ।

**भत्तट्ठिओ व खमओ इयरवणे तासि होइ पठवओ । चरिमे असद्धवं पुण होइ अभत्तठमुज्जवणं ॥ ५ ॥**

तयोर्यवमध्यवज्रमध्यप्रतिमयोः प्रस्थापक आरंभे इतरस्मिन् आरंभदिवसात् पाश्चात्ये दिने भक्तार्थो वा भवति, क्षपको वा चरमे चरमदिवसे पुनर्भक्ताविषये अश्रद्धवान् श्रद्धामपि न करोति । एतत् यवमध्यचन्द्रप्रतिमामधिकृत्योक्तं वेदितव्यं । उद्यापनं पुनर्द्वयोरप्य-नयोरभक्तार्थमवसेयम् ;

**संघयणे परियाए सुत्ते अत्थे य जो भवे बलितो । सो पडिमं पडिवज्जइ जवमज्झं वयरमज्झं च ॥ ६ ॥**

संहनने आद्यत्रयस्यान्यनमास्मिन्पर्याये जन्मतो जघन्येन एकोनत्रिंशतिवर्षेषु उत्कर्षतो देशोनायां पूर्वकोट्यां प्रव्रज्यापर्यायेण जघ-न्यतो विंशतिवर्षेषु उत्कर्षतो देशोनायां पूर्वकोट्यां सूत्रमर्थश्च जघन्यतो नवमस्य पूर्वस्य तृतीयमाचारवस्तु उत्कर्षतः किञ्चिन्न्यूनानि दश-पूर्वाणि । एवं संहनने पर्याये सति यः सूत्रेऽर्थे च भवति बलिको बलीयान् स प्रतिमां यवमध्यां वज्रमध्यां च प्रतिपद्यते, तदेवं यवमध्या वज्रमध्येति गतम् । इदानीं नित्यं व्युत्सृष्टकाय इति पदं व्याख्यायते—

**निच्चं दिवा य रातो पडिमाकालो वजत्तितो भणितो । दव्वंमि य भावंमि य, वोसठं तात्थिमं दव्वे ॥ ७ ॥**

लयनरक्षणार्थं यथा काक्यादिः । एवं त्रिविधा उपसर्गा उक्ताः सम्प्रति ये व्युत्सृष्टग्रहणेनात्मसंचेतनीया गृहीतास्तानुपदर्शयति—

व्य. सू. १-२ ॥ ४ ॥

**घट्टणय पवड थंभण लेसण चउहा उ आयसंचेया । ते पुण सन्निवयंती वोसठदारे न इहं तु ॥ १५ ॥**

चतुर्धा आत्मना संचिन्त्यन्ते ये ते इत्यात्मसंचेत्यास्तद्यथा—घट्टनतः प्रपतनतः स्तंभनतश्च श्लेष्मतश्च । तत्र घट्टनतो यथा चक्षुषि रजः
१८ प्रविष्टंतेन चक्षुर्दुःखयितुमारब्धं अथवा स्वयमेव चक्षुषिं गलके वा किंचित्तु खीलप्रभृतिसमुत्थितं घट्टयति । प्रपतनतो यथा मन्दप्रयत्नेन
चंक्रम्यमाणः प्रपताति, ततो दुःखाप्यते स्तंभनतो यथा तावदुपविष्ट आस्ते यावत्पादं सुप्तः स्तब्धो जातः । श्लेष्मनातो यथा पादं तावदाकु-
ञ्च्यावस्थितो यावत्तत्र वातेन लग्नः अथवा नृत्तं शिक्षयामीति किंचिदङ्गमतिशयेन नामितं तच्च तत्रैवं लग्नमिति । ये पुनरात्मसंचेतनीयाः
व्युत्सृष्टद्वारे निपतन्ति, न इह, ते उप्पन्ने सम्मं सहति खमइ तितिक्खेइ अहियासेइत्ति चत्वार्यप्येकार्थिकानि पदानि । तत्र सम्यक् सहनमाह—

२२ **मण वयण कायजोगेहिं तहि उ दिव्वमादिए तिन्नि । सम्मं अहियासेइ, तत्थ सुण्हाए दिठंतो ॥ १६ ॥**

त्रिभिर्मनोवाक्काययोगैः प्रत्येकं दिव्यादीन् त्रीनुपसर्गान् प्रत्येकं चतुर्भेदान् सम्यगध्यास्ते सहते । तत्र सहनं द्विधा—द्रव्यतो
भावतश्च । तत्र द्रव्यसहने स्नुषाया दृष्टान्तः । तमेवाह—

**सासूससुरुक्कोसा देवरभत्तारमादि मज्झिमगा । दासादी य जहण्णा जह सुण्हा सहिय उवसग्गा ॥१७॥**

श्वशुरश्वश्रूरेतावुत्कृष्टौ पूज्यत्वात्, देवरभर्तृका मध्यमा, दासादयो जघन्या यथा तत्कृता उपसर्गाः स्नुषया षोढास्तथा साधुनापि
२६ सोढव्या । इयमत्र भावना—स्नुषया अपराधे कृते तां श्वसुरः श्वश्रूश्च हीलयति । सा च हील्यमाना अतीव लज्जते । यद्यपि तानि दुःखोत्पा-
दनानि वचनानि दुरध्यास्यानि तथापि सा तानि सम्यगध्यास्ते चिन्तयति च न सम्यक् अध्यासिष्ये ततः कस्य मेऽवध्वंसो भविष्यति

स्नुषावारश्चापयास्यति देवरा अपि चोल्लुण्ठवचनानि भाषन्ते यद्यपि तेषां सा नो लज्जते तथापि न तानुल्लुण्ठन्ति किन्तु सम्यक् तद्वच-

उ. १०. भा. १५-२१ ॥ ५ ॥

नान्यध्यास्ते । दासा अपि च तां स्नुषामुल्लुण्ठयन्ति तथापि किमेतेषां वचनान्यहं गणयामीत्यवगणया सम्यगध्यास्ते न प्रतिवचनं ददाति । एतद् द्रव्यसहनं । यत्साधुर्द्दादशविधानप्युपसर्गान् कर्मविनिर्जरणार्थं सम्यगध्यास्ते एतदेवाह—

**सासुससुरोवमा खलु दिव्वा दियरोवमा य माणुस्सा । दासत्थाणी तिरिया तह सम्मं सो हियासति ॥१८॥**

तथा वधूदृष्टान्तोक्तप्रकारेण श्वश्रूश्वशुरोपमान् दिव्यान् उपसर्गान्, देवरोपमान् मानुषान्, दासस्थानीयान् तैरश्चान् उपसर्गान् सम्यगध्यास्ते । सम्प्रति दुविहे वेत्यस्य व्याख्यानार्थमाह—

**दुहावेते समासेण सव्वे सामन्नकंटगा । विसयाणुलोमिया चेव तहेव पडिलोमिया ॥ १९ ॥**

अथवा एते उपसर्गाः श्रामण्यस्य कंटका इव श्रामण्यकंटकाः सर्वे समासेन द्विधा प्रतिपादितास्तत्रथा विषयानुलोमिका इन्द्रियविषयानुलोमिकास्तथैव प्रतिलोमिका इन्द्रियविषयप्रतिलोमिकाः । तानेव दर्शयति—

**वंदण—सक्कारादी अणुलोमा बंधवहण पडिलोमा । तेवि य खमती सव्वे एत्थं रुक्खेण दिट्ठंतो ॥ २० ॥**

वन्दनसत्कारादयोऽनुलोमा बन्धवधप्रभृतयः प्रतिलोमास्तानपि सर्वान् क्षमते, अत्र वृक्षेण दृष्टान्तस्तमेवाह—

**वासी—चंदण—कप्पो जह रुक्खो ईय सुहदुहसमो उ । रागदोसविमुक्को सहई अणुलोमपडिलोमे ॥ २१ ॥**

वासीचन्दनकल्पा यस्य स वासीचन्दनकल्पोऽथवा कल्पस्तुल्यवाची ततोऽयमर्थः वास्यां वास्या तक्षणे, चंदने चन्दनेनानुलेपने कल्पस्तुल्यो वासीचन्दनकल्पो यथा वृक्षो भवति इत्येवममुना प्रकारेण रागद्वेषविमुक्तो अत एव सुखदुःखसमो अनुलोमप्रतिलोमान् उपस-

नित्यं सदा दिवारात्रौ च अथवा यावान् प्रतिमाकालो भणितस्तावन्तं कालं व्युत्सृष्टकायः । तच्च द्विधा—द्रव्ये भावे च । तत्र द्रव्ये

व्य. सू. इदं वक्ष्यमाणं, तदेवाह—

१–२ ॥ ३ ॥ **असिणाण भूमिसयणा अविभूसा कुलवधू पउत्थधवा। रक्खइ पतिस्स सेज्जं अणिकामा दव्ववोसट्ठा ॥८॥**

कुलवधूः प्रोषितधवा अस्नाना भूमिशयना अकृतविभूषा एवं द्रव्यव्युत्सृष्टद्रव्या अनिकामा सकामा पत्युः शय्यां रक्षति एतद्

द्रव्यव्युत्सृष्टं, भावव्युत्सृष्टमाह—

**वातियपितियसिंठियरोगायंकेहिं तत्थ पुट्ठो वि। न कुणइ परिकम्मं सो किंचिवि वोसट्ठदेहो उ ॥ ९ ॥**

तत्र यवमध्यायां वज्रमध्यायां वा चन्द्रप्रतिमायां स्थितो वातिकपैत्तिकश्लेष्मिकरोगातंकैः स्पृष्टोऽपि स व्युत्सृष्टदेहो न किञ्चिदपि

परिकर्म करोति । सम्प्रति चियत्तदेहे इति व्याख्यायते तच्च त्यक्तं द्विधा—द्रव्यतो भावतश्च । तत्र द्रव्यत आह—

**जुद्धपराजियअट्टण फलहिय मल्ले निरुत्त परिकम्मे। गूहण सत्थियमल्ले तईयदिणे दव्वतो चत्तो ॥ १० ॥**

इदं कथानकं प्रबन्धेनावश्यकटीकायामुक्तमिह तु ग्रन्थगौरवभयान्न लिख्यते । ततस्तस्मादवधारणीयमक्षरयोजना त्वेवम्—अ-

ट्टनो नाम मल्ल उज्जयिनीवास्तव्यः सोपारे पत्तने वृद्धतया पराजितस्तेनान्यो फलही मल्लो मार्गितः स सोपारके मात्सिकमल्लेन सह युद्धं

दत्तवान् ततः फलही मल्ले निरुक्तं निरवशेषं परिकर्म क्रियते, इतरस्तु मल्लो गर्वाध्माततया शरीरपीडां गूहयन् न किमपि परिकर्म कारित-

वान् । ततः परिकर्माकरणतस्तृतीये दिने मारितस्तेन परिकर्माकरणतो यस्त्यक्तो देहः स द्रव्यतस्त्यक्तः । भावतस्त्यक्तमाह—

**वंधेज्ज व रुंभेज्ज व कोई व हणेज्ज अहव मारेज्ज। वारेइ न सो भयवं, चियत्तदेहो अपडिबद्धो ॥ ११ ॥**

स प्रतिमामतिपन्नो भगवान् शरीरेऽप्यमतिबद्धो यदि कोऽपि बध्नीयात् अथवा रुन्ध्यात् यदि वा हन्यात् मारयेद्वा तथापि तं न

उ. १०, भा. ८-१४ ॥ ४ ॥ निवारयति, एष भावतस्त्यक्तदेहः। सम्प्रति जे केइ उवसग्गा इति व्याख्यानार्थमाह—

**दिव्वादि तिन्नि चउहा बारस एवं तु होइ उस्सग्गा। वोसट्ठग्गहणेणं आयासंचेयणं गहणं ॥ १२ ॥**

उपसर्गास्त्रिविधास्तद्यथा—दिव्या मानुषास्तैर्यग्योनाश्च। एते त्रयोऽपि प्रत्येकं चतुर्धा। एवं तु सर्वसंख्यया भवन्त्युपसर्गा द्वादश, ननु चतुर्धा आत्मसंचेतनीया अप्युपसर्गा भवन्ति, ते कस्मात्सूत्रकृता नोक्तास्तत आह—व्युत्सृष्टग्रहणेनात्मसंचेतनग्रहणं। तत्र दिव्यानु-पसर्गभेदानाह—

**हासा पदोस वीमंसा पुढो वेसा य दिव्वया चउरो। हास पओस वीमंस कुसीला नरगया चउहा ॥ १३ ॥**

दिव्यका उपसर्गाश्चत्वारस्तद्यथा—हासात् क्रीडात इत्यर्थः। प्रद्वेषादवज्ञानात् पूर्वभवसम्बन्धादिकृतात्। विमर्शात् किमयं स्वम-तिज्ञातश्चलति न वेत्येवंरूपात्। पृथग् विमात्रातो नाम किंचित् हासतः किञ्चित्प्रद्वेषतः किञ्चिद्विमर्शतः। नरगता मनुष्यगता उपसर्गाश्चतुर्धा। तद्यथा—हासात्प्रेद्वषात् विमर्शात्। कुशीलत्ति पदैकदेशे पदसमुदायोपचारात् कुशीलप्रतिसेवनात इति द्रष्टव्यम्। तत्र हासप्रद्वेषविमर्शाः प्राग्वत् पृथग् विमात्रापक्षस्यात्र हासादिष्वेवान्तर्भावविवक्षणं कुशीलस्य प्रतिसेवना समाश्रयणं कुशीलप्रतिसेवना ततो यथा ईर्ष्यामो-षितस्य गृहे रात्रावुषितस्य तद्भार्या चतुष्टयतः

**भयतो पदोस आहार तह अवच्चलेणरक्खट्ठा। तिरिया होंति चउहा, एए तिविहावि उवसग्गा ॥ १४ ॥**

तैरश्चा भवन्त्युपसर्गाश्चतुर्धास्तद्यथा—भयेन श्वादिर्दशति, प्रद्वेषतो यथा चण्डकोशिको मर्कटादिर्वा, आहारहेतोर्यथा सिंहादि रपत्य-

लयनरक्षणार्थं यथा काक्यादिः। एवं त्रिविधा उपसर्गा उक्ताः सम्प्रति ये व्युत्सृष्टग्रहणेनात्मसंचेतनीया गृहीतास्तानुपदर्शयति—

व्य. सू. १-२ ॥ ४ ॥

**घट्टणय पवड थंभण लेसण चउहा उ आयसंचेया। ते पुण सन्निवयंती वोसट्ठदारे न इहं तु ॥ १५ ॥**

चतुर्धा आत्मना संचिन्त्यन्ते ये ते इत्यात्मसंचेत्यास्तद्यथा—घट्टनतः प्रपतनतः स्तंभनतश्च श्लेष्मतश्च। तत्र घट्टनतो यथा चक्षुषि रजः

१८ प्रविष्टं तेन चक्षुर्दुःखयितुमारब्धं अथवा स्वयमेव चक्षुषि गलके वा किंचित्तु खीलप्रभृतिसमुत्थितं घट्टयति। प्रपतनतो यथा मन्दप्रयत्नेन चंक्रम्यमाणः प्रपतति, ततो दुःखाप्यते स्तंभनतो यथा तावदुपविष्ट आस्ते यावत्पादं सुप्तः स्तब्धो जातः। श्लेष्मनातो यथा पादं तावदाकु-

श्चयावस्थितो यावत्तत्र वातेन लग्नः अथवा नृत्तं शिक्षयामीति किंचिदङ्गमतिशयेन नामितं तच्च तत्रैवं लग्नमिति। ये पुनरात्मसंचेतनीया व्युत्सृष्टद्वारे निपतन्ति, न इह, ते उप्पन्ने सम्मं सहति खमइ तितिक्खेइ अहियासेइत्ति चत्वार्यप्येकार्थिकानि पदानि। तत्र सम्यक् सहनमाह—

२२ **मण वयण कायजोगेहिं तहि उ दिव्वमादिए तिन्नि। सम्मं अहियासेइ, तत्थ सुण्हाए दिठंतो ॥ १६ ॥**

त्रिभिर्मनोवाक्कायययोगैः प्रत्येकं दिव्यादीन् त्रीनुपसर्गान् प्रत्येकं चतुर्भेदान् सम्यगध्यास्ते सहते। तत्र सहनं द्विधा—द्रव्यतो भावतश्च। तत्र द्रव्यसहने स्नुषाया दृष्टान्तः। तमेवाह—

**सासूससुरवकोसा देवरभत्तारमादि मज्झिमगा। दासादी य जहण्णा जह सुण्हा सहिय उवसग्गा ॥१७॥**

२६ श्वशुरश्वश्रूरेतावुत्कृष्टौ पूज्यत्वात्, देवरभर्तृका मध्यमा, दासादयो जघन्या यथा तत्कृता उपसर्गाः स्नुषया षोढास्तथा साधुनापि सोढव्या। इयमत्र भावना—स्नुषया अपराधे कृते तां श्वसुरः श्वश्रूश्च हीलयति। सा च हील्यमाना अतीव लज्जते। यद्यपि तानि दुःखोत्पादनानि वचनानि दुरध्यास्यानि तथापि सा तानि सम्यगध्यास्ते चिन्तयति च न सम्यक् अध्यासिष्ये ततः कस्य मेऽवध्वंसो भविष्यति.

उ. १०, भा. स्नुषावारश्चापयास्यति देवरा अपि चोल्लुण्ठवचनानि भाषन्ते यद्यपि तेषां सा नो लज्जते तथापि न तानुल्लुण्ठन्ति किन्तु सम्यक् तद्वच-
१९–२१ नान्यध्यास्ते । दासा अपि च तां स्नुषामुल्लुण्ठयन्ति तथापि किमेतेषां वचनान्यहं गणयामीत्यवगणया सम्यगध्यास्ते न प्रतिवचनं ददाति ।
॥ ५ ॥ एतद् द्रव्यसहनं । यत्साधुर्द्वादशविधानप्युपसर्गान् कर्मविनिर्जरणार्थं सम्यगध्यास्ते एतदेवाह—

**सासुससुरोवमा खलु दिव्वा दियरोवमा य माणुस्सा । दासत्थाणी तिरिया तह सम्मं सो हियासति ॥१८॥**

तथा वधूदृष्टान्तोक्तप्रकारेण श्वश्रूश्वशुरोपमान् दिव्यान् उपसर्गान्, देवरोपमान् मानुषान्, दासस्थानीयान् तैरश्चान् उपसर्गान् सम्यगध्यास्ते । सम्प्रति दुविहे वेत्यस्य व्याख्यानार्थमाह—

**दुहावेते समासेण सव्वे सामन्नकंटगा । विसयाणुलोमिया चेव तहेव पडिलोमिया ॥ १९ ॥**

अथवा एते उपसर्गाः श्रामण्यस्य कंटका इव श्रामण्यकंटकाः सर्वे समासेन द्विधा प्रतिपादितास्तद्यथा विषयानुलोमिका इन्द्रियविषयानुलोमिकास्तथैव प्रतिलोमिका इन्द्रियविषयप्रतिलोमिकाः । तानेव दर्शयति–

**वंदण–सक्कारादी अणुलोमा बंधवहण पडिलोमा । तेवि य खमती सव्वे एत्थं रुक्खेण दिट्ठंतो ॥ २० ॥**

वन्दनसत्कारादयोऽनुलोमा बन्धवधप्रभृतयः प्रतिलोमास्तानपि सर्वान् क्षमते, अत्र वृक्षेण दृष्टान्तस्तमेवाह—

**वासी–चंदण–कप्पो जह रुक्खो ईय सुहदुहसमो उ । रागदोसविमुक्को सहई अणुलोमपडिलोमे ॥ २१ ॥**

वासीचन्दनकल्पा यस्य स वासीचन्दनकल्पोऽथवा कल्पस्तुल्यवाची ततोऽयमर्थः वास्यां वास्या तक्षणे, चंदने चन्दनेनानुलेपने कल्पस्तुल्यो वासीचन्दनकल्पो यथा वृक्षो भवति इत्येवममुना प्रकारेण रागद्वेषविमुक्तो अत एव सुखदुःखसमो अनुलोमप्रतिलोमान् उपस-

व्य. सू. गान् सम्यक् सहते । साम्प्रतमण्णाउंछमित्यस्य व्याख्यानमाह—

१-२ **अण्णाउंछं दुविहं दव्वे भावे य होइ नायव्वं ॥ दव्वुंछणेगविहं लोगरिसीणं मुणेयव्वं ॥ २२ ॥**

॥ ५ ॥ अज्ञातोञ्छं द्विविधं तद्यथा द्रव्ये भावे च । तत्र द्रव्योञ्छमनेकविधं लोकर्षीणां तापसानां ज्ञातव्यं । तदेवानेकविधं द्रव्योञ्छमाह—

१८ **उक्खल क्खलए दव्वी दंडे संडासए य पोत्तीय । आमे पक्के य तहा दव्वोंछ होइ निक्खेवो ॥ २३ ॥**

तापसा उंछवृत्तयः । उदूखले च्छंटितेषु तन्दुलेषु ये परिशाटिताः शालितन्दुलादयस्तान् उच्चित्य रन्धन्ति, खलएत्ति खलधान्ये मर्दिते संव्यूढे च यत् शटितं तत् उच्चिन्वन्ति, दव्वीति धान्यराशेर्यदेकया दर्व्या उत्पाट्यते तत् गृह्णन्ति, एवमन्यत्रापि प्रतिदिवसं दण्डत्ति स्वामिनमनुज्ञाप्य यत् धान्यराशेरेकया यष्ट्या उत्पाट्यते तत् गृह्णन्ति, एतदेवमन्यत्रापि प्रतिदिवसं । संडासए इति अंगुष्ठप्रदेशिनीभ्यां

२२ यत् गृह्यते शाल्यादिकं तावन्मात्रं प्रतिगृहं गृह्णन्ति, यद्यपि बहुकं पश्यति शाल्यादि तथापि न मुष्टिं भृत्वा गृह्णन्ति । पोत्तीयत्ति स्वामिन-मनुज्ञाप्य धान्यराशौ पोतिं क्षपन्ति तत्र यत्पोतौ लगति तत् गृह्णन्ति, एवमन्यत्रापि । तथा आमं पक्वं वा यचरकादयो भिक्षाप्रविष्टा मृगयन्ते । एष भवति द्रव्योञ्छे निक्षेपः । सम्प्रति भावोंछमाह—

**पडिमापडिवण्णे एस भयवमज्ज किर एत्तिया दत्ती । आदियतित्ति न नज्जइ अन्नाउंछं तवो भणितो ॥२४॥**

२६ प्रतिमाप्रतिपन्न एष भगवान् अद्य किल एतावतीर्दत्तीरादत्ते इति न ज्ञायते तेन तस्य भगवतस्तपो अज्ञातोंछं भवति । एतदेव सविस्तरं भावयति—

**दव्वादभिग्गहो सो दव्वे सुकुंछमेत्ति या दत्ती । एलुगमेत्तं खेत्ते गेण्हइ तइयाए कालम्मि ॥ २५ ॥**

उ. १०, भा. २२–२७ ॥ ६ ॥

तदज्ञातोंछं तपो द्रव्याद्यभिग्रहो द्रव्याभिग्रहः क्षेत्राभिग्रहः कालाभिग्रहो भावाभिग्रहश्च । तत्र द्रव्ये द्रव्याभिग्रहो यत् शुद्धमुंछं गृह्णाति, शुद्धं नाम अलेपकृत् तदपि शुद्धमुंछं गृह्णाति उपनीतं नानुपनीतं तेन पञ्चानामाद्यानां पिण्डैषणानामग्रहणमुपरितन्योश्च द्वयोरेकतरस्या अभिग्रह इत्यावेदितं द्रष्टव्यम् । तथा एतावत्यो दत्तयोऽद्य मया ग्राह्या एष द्रव्याभिग्रहः । क्षेत्रे क्षेत्रविषयेऽभिग्रहे यदेलुकमात्रं विष्कंभ्य गृह्णाति । अत्रापीयं सामाचारी यदि द्वावपि पादावेलुकस्यान्तस्तदा न कल्पते, तत्रेदं कारणं यद्युच्च एलुकस्तदा कस्य पादौ प्रतिष्ठितौ न दृश्येते, किं बीजादौ प्रतिष्ठितावुत नेति तस्मादेलुकं विष्कंभ्य यदि नीचे एलुके पाश्चात्यः पादः पतितः शुद्ध्यति यथा न बीजादौ प्रतिष्ठित इति तदा कल्पते, अत्युच्चे तु न कल्पते इति काले कालाभिग्रहे तृतीयस्यां पौरुष्यां यद्भिक्षामटति । सम्प्रति द्रव्याभिग्रहे विशेषमभिधित्सुर्द्वारगाथामाह—

**अण्णाउंछं एगोवणीय निज्जूहिऊण समणादी । अगुव्विणिं अबालंती एलुगविक्खंभणे दोसा ॥ २६ ॥**

स प्रतिमाप्रतिपन्नो भगवान् अज्ञातोंछं गृह्णाति, तदप्येकेनोपनीतं न द्विप्रभृतिभिस्तथा श्रमणादीन् आदिशब्दात् द्विपदचतुष्पदार्दीश्च निर्यूह्यातिवाह्य भिक्षामटति । तथा तां ददतीं भिक्षामगुर्विणीमभ्युपगच्छति । अबालां च क्षीराहारबालवर्जितां तथा एलुकविष्कंभणे दोषा भवंति ते चाग्रे वक्ष्यन्ते एष द्वारगाथासंक्षेपार्थः । साम्प्रतमेनामेव विवरीषुः प्रथमतोऽज्ञातोंछमाह—

**अणाउञ्छं च सुद्धं च पंच काऊण अग्गहं । दिण दिणे अभिगिण्हे तासिमन्नयरीय उ ॥ २७॥**

पञ्चानामाद्यानां पिण्डैषणानामग्रहणं कृत्वा तयोरन्तिमयोरन्यतरस्याश्च ग्रहणं कृत्वा दिने दिनेऽज्ञातोंछं च शुद्धं चाभिगृह्णाति ।

साम्प्रतमेकोपनीतमित्यस्य व्याख्यानमाह—

एगरस भुंजमाणस्स उवणीयं तु गेण्हइ। न गेण्हे दुगुमादीणं अचियत्तं तु मा भवे ॥ २८ ॥

व्य. सू. १-२ ॥ ६ ॥ एकस्य भुञ्जानस्य (भुंजमानस्य) उपनीतं भगवान् गृह्णाति न द्विकादीनां द्वयोस्त्रयाणां चतुर्णां पंचानां वा उपनीतं न गृह्णाति, । कस्मादिति चेन्मा भूदप्रीतिरितिहेतोः। अधुना निज्जूहिऊण समणादी इत्यस्य व्याख्यानमाह—

अडंतो भिक्खकालंमी घासत्थी वसभादओ। वज्जेइ होज्ज मा तेसिं आउरत्तेण अप्पियं ॥ २९ ॥

भिक्षाकाले वृषभादयो ग्रासार्थिनोऽटन्ति। ततस्तान् वर्जयति मा तेषामातुरत्वेनाप्रीतिकं भूयादिति हेतोः। एतदेवाह—

दुपय चउप्पय पक्खी किविणातिहि समण साणमाईया। निज्जूहिऊण सव्वे अडइ भिक्खं तु सो ताहे ॥३०॥

भिक्षाकाले द्विपदाश्चतुष्पदाः पक्षिणः कृपणातिथयः श्रमणा श्वादयश्च भिक्षार्थमटन्ति ततस्तान् सर्वान् निर्यूह्य तदनन्तरं स भगवान् भिक्षामटति। कथमतिवाह्येत्यत आह—

पुव्वि चरइ तेसिं नियट्टिचारेसु वा अडइ पच्छा। जत्थ भवे दोण्णि काला चरइ तत्थ अतित्थिते ॥३१॥

तेषां श्रमणानां पूर्वं वा चरति यदि वा तेषु श्रमणादिषु निवृत्तचारेषु पश्चादटति, एतच्च तस्मिन् क्षेत्रे द्रष्टव्यं यत्र त्रयो भिक्षा काला यत्र तु द्वौ भिक्षाकालौ तत्र अतीत्थिते अतिक्रान्ते श्रमणादौ गच्छति। अथवा—

अणारद्धे अण्णेसु मज्झे चरति संजओ। गेण्हेत देंतयाणं तु वज्जयंतो अपत्तियं ॥ ३२ ॥

यदि प्रथमभिक्षाकालप्रारंभे एव भिक्षामटति तदा दायकानामप्रीतिस्ततः प्रथमे भिक्षाकाले अतिक्रान्तप्राये द्वितीये च भिक्षाकाले

उ. १० भा. २८-३६ ॥ ७ ॥

अन्ये श्रमणादिभिरनारब्धे स भगवान् प्रतिमाप्रतिपन्नः संयतश्चरति, कथंभूतः सन्नित्याह—गृह्णतां ददतां चाप्रीतिकं वर्जयन् । साम्प्रतमगुर्विणीमित्यादि व्याख्यानयति—

**नवमासगुब्विणीं खलु गच्छे वज्जइ इयरो सव्वा उ । दारं खीराहारं गच्छो वज्जे इयरो उ सव्वंपि ॥३३॥**

नवमासगुर्विणीं खलु गच्छो गच्छवासी वर्जयति । इतरो गच्छनिर्गतः प्रतिमाप्रतिपन्नादिकः सर्वा अपि गुर्विणीर्वर्जयति । तथा गच्छो गच्छवासी क्षीराहारं बालं वर्जयति, इतरस्तु सर्वमपि बालम् । साम्प्रतमेलुगविक्खंभणे दोसा इत्यस्य व्याख्यामाह—

**गच्छगयनिग्गए वा लहुगा गुरुगा य एलुगा परतो । आणादिणो य दोसा दुविहा य विराहणा इणमो॥३४॥**

एलुकात्परतः साधुरतिगच्छति, उपलक्षणमेतत् यदि साधुरेलुकं विष्कंभयति आसन्ने वा प्रदेशे एलुकस्य तिष्ठति, तदा गच्छगतस्य प्रायश्चितं चत्वारो लघुकाः, गच्छानिर्गतस्य चत्वारो गुरुकाः, तत आज्ञादय आज्ञाभङ्गादयो दोषा द्विविधा च विराधना—आत्मविराधना संयमविराधना च इयं वक्ष्यमाणा । तामेवाह—

**संक ग्गहणे इच्छा दुन्निविठा अवाउडा । निहणुक्खणणविरेगे तेणे अविदिन्न पाहुडए ॥ ३५ ॥**

**बंधवहे उद्दवणे य खिंसणा आसीयावणा चेव । उव्वेवग कुरुंडिय दीणे अविदिण्ण(४६)वज्जणया ॥ ३६ ॥**

एलुकात्परतो यदि गच्छति,तदा स्तैन्ये मिथुने या लोकस्य शङ्का स्यात्(३७) तदनन्तरं च ग्रहणं तथा यस्या(३८) गृहमभ्यन्तरं प्रविष्टस्तस्याविषयेऽस्य साधोः किन्तु(३८),इच्छा येनाभ्यन्तरं गत इति लोकस्याशङ्का स्यात्तथा दुर्निविष्टा अप्रावृत्ता(३९-४०)वा मध्ये आगारी स्यात्तस्या लज्जा स्यात्,दोषाश्चान्ये शङ्कादयः तथा मध्ये गृहस्वामी हिरण्यादेर्निधानं करोति,उत्खननं वा परस्परं विरेचनं, (४१-४२)तत्र स्तेनोऽयमिति शङ्का

व्य. सू. स्यात् (४२), तथा अतिभूमिप्रवेशनं तीर्थकृद्भिर्गृहस्थैश्चावितीर्णमननुज्ञातं (४३)। ततोऽदत्तादानदोषः तस्मात् कस्मादतिभूमिमेष प्रविष्ट इति गृहस्थः
१–२ प्राभृतमधिकरणं कुर्यात्तथा बन्धं निगडादिभिर्वधं कशादिभिस्ताडनं अपद्रावणं जीवितादूव्यपरोपणं, तथा खिंसना हीलना(४४), यथैते वराका
॥ ७ ॥ अलभमाना अन्तः प्रविशन्ति, आसियावणा चेवत्ति आसीयावणा नाम निष्काशयितुमासादनं किमुक्तं भवति गले गृहीत्वा बहिर्वने
१८ निक्षिपति(४४), तथा स व्रती धिग् इव प्रविष्टस्तासामगारीणामुद्वेजको भवति(४५)। तथा कुरुंडितो नाम उपचारक इत्युच्यते(४५)तं शङ्कमाना गृहिणो वधबन्धनादीनि कुर्युरेतैः कारणैरवितीर्णस्यातिभूमिप्रवेशनस्य वर्जना। एष द्वारगाथासमासार्थः। साम्प्रतमेतदेव विवरीषुः प्रथमतः शङ्काद्वारमाह—

**पच्छित्ते आदेसा संकियनिस्संकिए य गहणादी। तेण्णे चउत्थे संकिय गुरुगा निस्संकिए मूलं ॥३७॥**

२२ एलुकात्परतः प्रवेशे स्तैन्यविषये चतुर्थे चतुर्थव्रतविषये वा शङ्का स्यात्। तस्यां च शङ्कायां सत्यां निःशङ्किते जनस्य जाते प्राय-श्चित्ते प्रायश्चित्तविषये आदेशौ प्रकारौ तावेव दर्शयति, शङ्किते चत्वारो गुरुकाः, निःशंकिते मूलमिति। तथा ग्रहणादयश्च शंकायां दोषा-स्तानेव कथयति—

**गेण्हण कड्ढण ववहार पच्छकडुड्डाह तहा य निव्विसए। किं उ हु इमस्स इच्छा अब्भितरमइगतो जेण ॥३८॥**

२६ ग्रहणं स्तेनः पारदारको चेति बुद्ध्या प्रतिग्रहणं ततो राजकुलं प्रतिकर्षणं तदनन्तरं राजकुले व्यवहरणं। ततः पश्चात्कृतकरणं व्रत-मोचनमित्यर्थः। एवं च सति महान् प्रवचनस्योड्डाहः। तथा निर्विषय आज्ञाप्ये तद्वारगाथायां तु ग्रहणे इति कर्षणादीनामुपलक्षणं॥ गतं ग्रहणद्वारमिच्छाद्वारमाह— किं तु इति वितर्के हुरिति निश्चितं यस्या गृहमभ्यन्तरमतिगस्तस्या विषयेऽस्य साधोरिच्छा येनेत्थमभ्यन्तरं

सहसा प्रविष्ट इति । अधुना दुर्निविष्टा अप्रावृतेति पदद्वयं व्याख्यानयति—

दुणिविट्ठा व होज्जा, अवाउडा वा अगारी उ । लज्जिया सावि होज्जा ही संका वा से समुब्भवे ॥ ३९ ॥

मध्ये आगारी दुर्निविष्टा वा भवेत् अप्रावृता वा भवेत् ततः सहसा साधोरभ्यन्तरप्रवेशे सापि लज्जिता भवेत् । शङ्का वा से तस्याः समुद्भवेत् । तामेवाह—

किं मन्ने घेत्तुकामो एस ममं जेण तेतिए दूरं । अन्नो वा संकेज्जा गुरुगा मूलं तु निस्संके ॥ ४० ॥

आउत्थ परा वावी उभयसमुत्था व होज्ज दोसा उ । उक्खणनिहणाविरेगं तत्थ किंचि करेज्जाहि ॥ ४१ ॥

किं मन्ये एष संयतो मां ग्रहीतुकामो येन एतद्दूरमागच्छति । अन्यो वा एवं शङ्केत, तत्र शङ्कायां सत्यां तस्य प्रायश्चित्तं चत्वारो गुरुकाः, निःशंकिते तस्य वा जाते मूलं प्रायश्चित्तं, आत्मोत्थः परस्मात् उभयसमुत्था दोषा भवेयुः । सम्प्रति निहणुक्खणणेत्यादि व्याख्यानयति—उक्खणणेत्यादि तत्र गृहस्थो गृहमध्ये हिरण्यादेरुत्खननं वा कुर्यात् निधानं परस्परं विवेकं वा विरेचनं किंचित्कुर्यात्ततः किमित्याह—

दिट्ठं एएण इमं साहेज्जा मा उ एस अन्नेसिं । तेणोत्ति व एसो ऊ संका गहणाइ कुज्जाही ॥ ४२ ॥

दृष्टमेतेन साधुना इदं हिरण्यादि उत्खन्यमानादिकं, ततो मा एष अन्येषां कथयेत् । यदि वा एष स्तेन इति शङ्कया ग्रहणादि ग्रहणवधबन्धनादि कुर्यात् । साम्प्रतमवितीर्णपदव्याख्यानार्थमाह—

व्य. सू. १-२ ॥ ८ ॥ तित्थगरगिहत्थेहिं दोहिं वि अतिभूमिपविसणमदिण्णं । कीसे दूरमतिगतो अ संखडं बंधवहमादी ॥४३॥

तीर्थकरेण गृहस्थेन च द्वाभ्यामप्यतिभूमीप्रवेशनमदत्तं, तीर्थकरेणादत्तमतिभूमिं न गच्छेज्जा इत्यादि वचनात्, गृहस्थेनाप्रीतिकरणात्, प्राभृतादिद्वारकलापमाह—कस्मादेतदूरमयमागत इति गृहस्थो संखडं कलहं कुर्यादतिरोषाद्बन्धवधादिकं । सम्प्रति खिंसाद्वारमाह—

१८ खिंसेज्ज एए अलभंत वराग अंतो पविसंति । गलए घित्तूण वणंमि निच्छुभेज्जाहि बाहिरतो ॥ ४४ ॥

खिंसेत हीलवेत् गृहस्थो यथा एते वराका अलभमाना मध्ये प्रविशन्ति । आसियावणद्वारमाह—गलके गृहीत्वा बहिर्वने निक्षिपेत्, । उद्वेजकद्वारमाह—

ता उय आगारीतो वीरल्लेणेव तासिया उ सउणी । उव्वेवं गच्छेज्जा कुरुंडितो नाम उवचरओ ॥ ४५ ॥

२२ यथा वीरल्लेण त्रासित्ता शकुनिका उद्वेगं गच्छति, तथा ताः अप्यगार्यः सहसान्तः प्रविष्टेन साधुना त्रासिताः सत्य उद्वेगं गच्छेयुः, कुरुंडितद्वारमाह—कुरुंटितो नाम उपचारकस्तदा शंकया च वधबन्धनादि कुर्यात्—

अहवा भणेज्ज एते गिहिवासंमिवि अदिट्ठकल्लाणा । दीणा अदिण्णदाणा दोसे ते णाउ नो पविसे ॥ ४६ ॥

अथवा ब्रूयात् गृहवासेऽप्येते अदृष्टकल्याणा दीना अदत्तदाना आसीरन्, तेन मध्ये प्रविशन्ति । उपसंहारमाह—एतान् दोषान् ज्ञा-
२६ त्वा नो मध्ये प्रविशेत् । अत्र चोदकः प्राह—यदि एलुकाविष्कम्भे एते दोषा अन्तः प्रविष्टे सविशेषास्तत एलुकविष्कंभसूत्रमफलं स्यात्तत आह—

उंबरविक्खंभमविज्जति दोसा अतिगयंमि सविसेसा । तहवि अफलं न सुत्तं सुत्तणिवाओ इमो जम्हा ॥४७॥

उ. १०, भा. १६३-१६९ ॥ २६ ॥

**जह कोइ मगन्नू अन्नं देसं तु वज्जती साहू । उपसंपज्जइ उ तगं तत्थण्णो गंतुकामो उ ॥ १६७ ॥**

यथेति मार्गोपसम्पत्प्रदर्शने यथा कश्चित्साधुर्मार्गज्ञोऽन्यं देशं व्रजति तत्र देशेऽन्यो गन्तुकामस्तकं साधुमुपसम्पद्यते, अहमपि युष्माभिः सह समागमिष्यामि । अथ कीदृशो मार्गोपदर्शननिमित्तमुपसम्पद्यते तत आह—

**अव्वत्तो अविहाडो अदिठदेसी अभासितो वावि । एगमणेगे उवसंपयाए चउभंगो जा पंथो ॥ १६८ ॥**

अव्यक्तो वयसा अविहाडोऽप्रगल्भः अदृष्टदेशी अदृष्टपूर्वदेशान्तरोऽभाषिको देशभाषापरिज्ञानविकलः सा चोपसम्पद् एकस्यानेकस्य च तत्र चतुर्भङ्गी । तद्यथा—एकक एकं संपद्यते १ एकमनेकः २ अनेकमेकः ३ अनेकमनेकः ४ सा चोपसम्पत् तावत् यावत्पन्थाः । किमुक्तं भवति यावत्पन्थानं व्रजति ततो वा प्रत्यागच्छतीति । एतदेव सविशेषमभिधित्सुराह—

**गयागते गयनियत्ते फिडियगविठे तहेव अगविट्ठे । उब्भामग सन्नायग नियट्ट अदिट्ठ अभासीय ॥१६९॥**

अव्यक्ता अविहाडा अदेशिका अभाषिका वा अन्यं साधुमुपसंपद्यते, अस्माकममुकप्रदेशेन यथा वा यत्र तेषां गन्तव्यं तत्र ये विवक्षित-साधोरन्ये ऽव्यक्तविहाडादयो गन्तुकामास्तान् ब्रुवते वयं युष्याभिः सह गमिष्यामस्तत्र यत्र गन्तुकामास्ततो यदि प्रत्यागच्छन्ति तदैतत् गतागतमित्युच्येत तस्मिन् मार्गोपसम्पत् गयनियत्ते इति अनुसंपन्ना एवात्मीयेन व्यक्तविहाडादिना समं गतास्तस्य च कालगततया प्रति भग्नत्वादिना वा कारणेन प्रत्यागन्तव्यं नाभवत्ततः प्रत्यागच्छन्तस्तं साधुमुपसंपद्यते । एषा गतानिवृत्ते मार्गोपसम्पत्तथा फिडियगविट्ठे तहेव अगविठे इति स्फिटितो नाम नष्टः तत आह उब्भामगेत्यादि उद्भ्रामकभिक्षाचर्यया अदृष्टपूर्वे विषये गतस्ततो न जानाति कुतो गन्तव्य-मिति स्फिटितः । अथ स्वज्ञातयो गवेषमाणाः समागतास्तत स्तस्मात् स्थानाद्दृष्टपूर्वे विषये नष्टः ततः स्फिटितस्तथा अभाषकोऽदृष्टपूर्वे विषये

पृष्टो पृष्टतो लग्नो याति, परं मिलितुं न शक्नोति, स (च) दृष्ट्वा पि प्रतिपृच्छनीयदेशभाषामजानन् न प्रतिपृच्छति, ततो यथा



तत्परिभ्रष्टो नश्यति, स च नष्टो गवेषणीयः। तत्र स्फिटिते गवेषिते तथैव चागवेषिते अभावेन मार्गणा कर्तव्या। तत्र तदेव गवेषयतां वाभवनमनाभवनमाह—

१८ **उवणट्ठ अन्नपंथेण वा गयं अगेवसित न लभंति। अगवेट्ठोति परिणत गवेसमाणा खलु लभंति ॥१७०॥**

उपेत्य स्वज्ञातिकान् दृष्ट्वा नष्ट उपनष्टो अन्येन वा यथा स विवक्षिते स्थाने गतो भविष्यतीत्येवं संकल्पा ये मार्गोपदेशनायोपसम्पन्नास्ते यदि तं न गवेषयन्ति, तदा तेऽगवेषयन्तस्तस्य सत्कं न किंचिल्लभन्ते, यदि पुनरद्यापि न गवेषित इति परिणते चेतसि प्रयत्नं विधाय गवेषयन्ति, तदा तस्यादर्शनेऽपि खलु तत्सत्कं लभन्ते, । अथोपसम्पद्यमानानां किमाभवति किं वा नेत्यत आह—

२२ **अम्मापिति संबद्धा मित्ता य वयंसगा य जे तस्स। दिट्ठा भट्ठा य तहा मग्गुवसंपन्नतो लभति ॥१७१॥**

व्रजन्तः प्रत्यागच्छन्तो वा यत्ते उपसम्पद्यमानाः सचित्तादिकमुत्पादयन्ति तत्सर्वं मार्गोपदेशकस्य नेतुराभवति, ये पुनर्मातापितृसम्बद्धा नालबद्धवल्लीद्विकमिति भावः। मित्राणि वयस्या दृष्टा भाषिताश्च ये तमभिधारयन्ति तान्मार्गोपसम्पन्नो मार्गोपसम्पदं प्रतिपन्नो लभते। तदेवं गता मार्गोपसम्पत्। सम्प्रति विनयोपसम्पदमाह—

२६ **विणयोपसंपयातो पुच्छणसाहण अपुच्छगहणे य। नायमनाये दोन्निवि नमंति पक्किल्लसाली वा ॥१७२॥**

अत ऊर्ध्वं विनयोपसम्पद्वक्तव्या इति शेषः। स चैवं कारणतो वा केचिद्विहरंतोऽकारणतो वा केचिद्विहरन्तो ऽदृष्टपूर्वदेशं गतास्तैर्वास्तव्यानां सांभोगिकानां समीपे प्रच्छनं कर्तव्यम्। यथा कानि मासप्रायोग्यानि क्षेत्राणि कानि वर्षावासप्रायोग्याणि। एवं पृष्टैरपि साधनं

कथनं कर्तव्यमन्यथा वक्ष्यमाणप्रायश्चित्तप्रसक्तेरथ तथैवागन्तुका न पृच्छन्ति तदा तेषामपि प्रायश्चित्तं, गहणे यत्ति सचित्तादिकस्य ग्रहणे सति परस्परं निवेदनं कर्तव्यं, यथैतत्सचित्तं वा लब्धं यूयं गृह्णीतेति अनिवेदने असमाचारी तथा नाएत्ति ते आगन्तुका वास्तव्याश्च परस्परं जानन्ति । तथा यतन्ते न प्रमादिनः अनाएत्ति न जानन्ति, कियन्तस्ते किंवा प्रमादिनस्तत्र ज्ञाता न ज्ञाता वा द्रव्यादिभिः परीक्ष्योपसम्पद्येरन् नान्यथा, दोन्निवि नमंतित्ति ते च परीक्षापूर्वकमुपसम्पद्यमाना द्वयोरपि परस्परं नमन्ति किमुक्तं भवति रत्नाधिकस्य प्रथमतोऽवमरत्नाधिकेनालोचना दातव्या पश्चात् रत्नाधिकस्य । अत्र पक्वशालयो दृष्टान्तः । यथा पक्वशालयः परस्परं नमन्ति तथात्रापीति भावः ।

साम्प्रतमेनामेव गाथां विवरीषुः प्रथमतः पुच्छणसाहण अपुच्छत्ति व्याख्यानार्थमाह—

**कारणमकारणे वा अदिट्ठदेसं गया विहरमाणा । पुच्छाविहारखेत्ते अपुच्छ लहुतो य जं वावि ॥ १७३ ॥**

कारणे अशिवादिलक्षणे अकारणे विहारप्रत्ययं सुखविहारो भविष्यतीति बुद्ध्या विहरन्तो यथा सुखमक्लेशेन सूत्रार्थान् कुर्वन्तोऽदृष्टपूर्वं देशं गतास्तत्र च तेषां सांभोगिकाः सन्ति, ततस्तैरागन्तुकैस्ते वास्तव्याः सांभोगिकाः पुच्छाविहारखेत्तत्ति मासकल्पप्रायोग्यानि वर्षाकल्पप्रायोग्यानि वा विहारक्षेत्राणि प्रष्टव्यास्तानि च तैः कथयितव्यानि । यदि न पृच्छन्ति, पृष्टा वा ते न कथयन्ति तदा द्वयानामपि प्रत्येकं प्रायश्चित्तं लघुको मासः, । यच्च पृच्छामन्तरेण वा स्तेन स्वापदादिभ्यो अनर्थं साधवः प्राप्नुवन्ति तन्निष्पन्नमपि तेषां द्वयानामपि प्रायश्चित्तमधुना गहणे य इति अस्य व्याख्यानमाह—

**सचित्तंमि उ लद्धे अण्णोण्ण अनिवेयणे लहुगो । ववहारेण उ हाउं पुणरवि दाणं नवरं मासो ॥ १७४ ॥**

यत्ते आगन्तुका वास्तव्या वा सचित्तं लभंते उपलक्षणमेतदचित्तं वा तस्मिन् लब्धे अन्योन्यस्य निवेदना कर्तव्या यथैतन्मया

सचित्तमचित्तं वा लब्धं यूयं प्रतिगृह्णीत । एवं निवेदने कृते द्वितीयो न गृह्णाति, परं सामाचारी एषेत्यवश्यं निवेदनं कर्त्तव्यमनिवेदने प्रायश्चित्तं लघुको मासः । एतदेव सविशेषमाह—ववहारेण उ इत्यादि न निवेदयति तदा असमाचारी प्रतिषेधनार्थं व्यवहारेणागमप्रसिद्धेन तत् हृत्वा मासलघुप्रायश्चित्तं दत्वा तस्यैव पुनः प्रतियच्छन्ति । सम्प्रति नायमनाये इत्यस्य व्याख्यानमाए—

१८ **नाए व अनाए वा होइ परिक्खविही जहा हेट्ठा । अपरिच्छणंमि गुरुगा जो उ परिक्खाए अविसुद्धो ॥१७५॥**

ज्ञाते अज्ञाते वा भवति द्रव्यादिभिः परीक्षा विधिर्यथाधस्ताद्भणितस्तथा कर्तव्यः । यदि पुनरपरीक्ष्योपसम्पद्यते योऽपि च गच्छः परीक्षायामविशुद्धः प्रमादीति कृत्वा तमपि ये उपसम्पद्यन्ते तेषां प्रत्येकं प्रायश्चित्तं चत्वारो गुरुकाः । सम्प्रति दोन्निवि नमन्तीत्यत्र मतान्तरमाह—

२२ **केई उ भणंति उभो नियमेण निवेइ इक्क इयरस्स । तं तु न जुज्जइ जम्हा, पक्किकल्लग सालिदिट्ठंतो ॥१७६॥**

केचित् ब्रुवते नियमेनाऽवमोऽवमरत्नाधिको निवेदयति इतरस्य रत्नाधिकस्य इच्छा यदि प्रतिभासेत ततो निवेदयति, नो चेन्नेति तच्च न युज्यते यस्मात्पक्वशालिदृष्टान्त उपन्यस्तः स चोभयनमनसूचक इति । सम्प्रति द्वयोर्नमनमाह—

**वंदणा लोयणा चेव तहेव य निवेयणा । सेहेण उवउत्तंमि इयरो पक्क कुव्वती ॥ १७७ ॥**

२६ शैक्षेण अवमरत्नाधिकेन वन्दने आलोचनायां तथैव च निवेदने सचित्तादेः कृते पश्चादितरो रत्नाधिकस्तस्य पुरतो वन्दनमालोचनां निवेदनं च करोति । सम्प्रति क्षेत्रश्रुतसुखदुःखे मार्गविनयोपसम्पत्सु यदाभाव्यं तदुपदर्शयति ।

**सुयसुहदुक्खे खेत्ते मग्गे विणउवसंपयाए य । वावीसपुव्वसंथुय वयंस दिट्ठा भट्ठे य सव्वे य ॥ १७८ ॥**

उ. १०. भा. १७५-१८० ॥ २८ ॥

श्रुतोपसम्पदि उपसम्पद्यमाना द्वाविंशतिं लभन्ते। तद्यथा—षट् अमिश्रवल्ल्यां माता पिता भ्राता भगिनी पुत्रो दुहिता इत्येवं रूपान्, षोडशमिश्रवल्ल्यां तद्यथा—मातुर्माता पिता भ्राता भगिनी। एवं पितुरपि, भ्रात्रादीनां चतुर्णां प्रत्येकं द्वौ द्वौ तद्यथा—पुत्रो दुहिता च। सुखदुःखोपसम्पदि पूर्वसंस्तुतान् मातापितृसम्बन्धान् उपलक्षणमेतत् मित्रवयस्यप्रभृतीति च क्षेत्रोपसम्पदि वयस्यान्। इदमप्युपलक्षणं पूर्वसंस्तुतान् पश्चाच्च संस्तुतान् नालबद्धवल्लीद्विकं च लभते। मार्गोपसम्पदि दृष्टाभाषितान् च शब्दाद्वल्लीद्विकं मित्राणि च विनयोपसम्पदि सर्वान् लभते नवरं निवेदयति। एतदेवाह—

**खेत्ते मित्तादीया सुतोपसंपन्नतो उ छल्लभते। अम्माउ पिउ संबद्धो सुहदुक्खी इयरो दिट्ठो ॥ १७९ ॥**

क्षेत्रे उपसम्पद्यमानो मित्रादीन् लभते, आदिशब्दात् पूर्वपश्चात्संस्तुतान् नालवल्लीद्विकमाहारं मात्रकत्रिकं संस्तारं वसतिं चेति परिग्रहः, श्रुतोपसम्पन्नं लभते षट् मात्रादिकान् मिश्रां च वल्लिं मातृपितृसम्बद्धां सुखदुःखी सुखदुःखोपसम्पन्नो मातापितृसम्बन्धान् लभते वयस्यादीन् च, इतरो मार्गोपसम्पन्नो दृष्टान् दृष्टाभाषितानुपलक्षणमेतत् वल्लिद्विकं मित्राणि च लभते विनयोपसम्पन्नस्याभाव्यं सुप्रतीतमिति न व्याख्यातम्।

**इच्चेयं पंचविहं जिणाण आणाए कुणइ सट्ठाणे। पावइ धुवमाराहं तव्विवरीए विवच्चासं ॥ १८० ॥**

इत्येवं पञ्चविधक्षेत्रश्रुतादिभेदतः पञ्चप्रकारमाभवद्व्यवहारं स्वस्थाने आत्मीये स्थाने यथा क्षेत्रोपसम्पदि यत् उपसम्पद्यमानस्य वा भवति तत्तथैव व्यवहरति। एवं शेषेष्वपि स्थानेषु वक्तव्यं जिनानामाज्ञया करोति परिपालयति स ध्रुवमन्ते आराधनां प्राप्नोति, जिनाज्ञया परिपालितत्वात्। तद्विपरीत आभवद्व्यवहारविपर्यासकारी विपर्यासं प्राप्नोति नाराधनामन्तकाले प्राप्नोतीति भावः।

एएसो पंचविहो ववहारो आभवंति तो नाम । पच्छित्ते ववहारं सुण वच्छ समासओ वुच्छं ॥ १८१ ॥

इत्येष आभवतिकोनाम व्यवहारः पञ्चविध उक्तः । अत ऊर्ध्वं प्रायश्चित्ते व्यवहारं समासतो वक्ष्ये, तच्च वत्स वक्ष्यमाणं शृणु;

सो पुणचउव्विहो दव्वखेत्तकालभावे य । सचित्ते अचित्ते य दुविहो होइ दव्वंमि ॥ १८२ ॥

स पुनः प्रायश्चित्तव्यवहारश्चतुर्विधस्तद्यथा द्रव्ये क्षेत्रे काले भावे च । तत्र द्रव्ये पुनर्द्विविधो भवति । तद्यथा—सचित्ते अचित्ते च । तत्र प्रथमतः सचित्ते विवक्षुरिदमाह—

पुढविदगअगणिमारुय वणस्सइ तसेसु होइ सचित्ते । अचित्ते पिंड उवही दसपन्नरसेव सोलसगे ॥ १८३ ॥

संघट्टण परियावण उद्दवणा वज्जणा एसट्ठाणं । दाणं तु चउत्थादी तत्तियमित्ता व कल्लाणे ॥ १८४ ॥

पृथिव्यादीनां संघट्टनादौ प्रत्येकं यथापत्तिप्रायश्चित्तं तत् स्वस्थानमित्युच्यते, । तच्च छक्काय चउसु लहुया इत्यादिना प्रागेवाभिहितमिदं तु दानप्रायश्चित्तमभिधीयते, । किं तदित्याह—चतुर्थादि, तद्यथा—पृथिव्यादिकं वनस्पतिपर्यन्तमेकेन्द्रियमपद्रावयति जीविताद्व्यपरोपयति तदा अभक्तार्थः, । द्वीन्द्रियमपद्रावयतः षष्ठं त्रीन्द्रियमपद्रावयतोऽष्टमं चतुरिन्द्रिये दशमं, पञ्चेन्द्रिये द्वादशमम्, । तत्तियमित्ता च कल्लाणे इति अथवा यस्य यावन्ति इन्द्रियाणि तस्य तावन्ति कल्याणानि प्रायश्चित्तं, तद्यथा—एककल्याणकमेकेन्द्रियाणां परितापने, द्वे कल्याणके द्वीन्द्रियाणां पूर्वार्द्धमित्यर्थः । त्रीणि कल्याणकानि त्रीन्द्रियाणामेकाशनकमिति भावः । चतुरिन्द्रियाणामाचाम्लं पञ्चेन्द्रियाणामभक्तार्थः । अथवेदं वर्जनायां सचित्ते प्रायश्चित्तं ।

अहवावि अट्ठारसगं पुरिसे इत्थीसु वज्जिया वीसुं । दसगं य नपुंसेसुं आरोवणवन्निया तत्थ ॥ १८५ ॥

टीकायां प्रत्याख्यानचिन्तायामिव भावनीयास्ततोऽवादि बहुतरा वापि, अथ मनसा कथं करणं कारणमनुमननं वा तत आह—

उ. १०, भा. १८९–१९४ ॥ ३० ॥

**वावे महमंबवणं मणसकरणं तुहो अनुत्तेवि । अणजाणसु जावुप्पइ मणकारणमो अवारेंते ॥ १९१ ॥**

कोऽपि संयतः कश्चित् प्रदेशं दृष्ट्वा चिन्तयति अस्मिन्नवकाशे अहमाम्रवणं वपामि । यद्यपि तेन तथा चिन्तयित्वा नोप्तमाम्रवणं
४ तथापि तत्तेन मनसा कृतमपि मनसा करणं तथा केनचित् गृहस्थेन संयत उक्तो यथा संयत! यदित्वमनुजानासि तत एतस्मिन्नवकाशे आम्र-
वणं वपामि तस्मादनुजानीहि येनोप्यते इति । एवमुक्ते यदि न निवारयति तदा अनुक्तेऽपि मनसा कारापणं द्रष्टव्यमेतदेव भावयति—

**मागहा इंगिएणं तु पेहिएण य कोसला । अद्धुत्तेण उ पंचाला नाणुत्तं दक्खिणावहा ॥ १९२ ॥**

**एवं तु अणुत्ते वि मणसा कारावणं तु बोधव्वं । मणसाणुन्ना सा हु चूयवणं वुत्तवुप्पति वा ॥१९३॥**

मागधा मगधदेशोद्भवाः प्रतिपन्नमप्रतिपन्नं वा इङ्गिताकारविशेषेण जानन्ति, कौशलाः प्रेक्षितेन अवलोकितेन, पञ्चालाः अर्धोक्तेन,
८ नानुक्तं दक्षिणापथाः किन्तु साक्षाद्वचसा व्यक्तीकृतं ते जानते, प्रायो जडप्रज्ञत्वात्, । तत एवं सति वचसानुक्तेऽपि निवारणाभावात् मनसा
कारापणं बोद्धव्यम् । सम्प्रति मनसानुज्ञातं भावयति चूतवनमुप्तं पूर्वमारोपितं, यदि वा उप्यते आरोप्यमाणं तिष्ठतीति कृत्वा साधुश्चिन्तयति ।
शोभनं यदिह चूतवनमुप्तमुप्यते वा एषा मनसानुज्ञा ।

**एवं वयकायम्मी तिविहं करणं विभासबुद्धीए । हत्थदिसन्नच्छोटिं इय काये कारणमणुण्णा ॥ १९४ ॥**

१२ एवमुक्तप्रकारेण वचसि काये च त्रिविधं करणं करणकारणानुमननलक्षणं स्वबुद्ध्या विभाषेत तत्र वचसि सुप्रतीतं काये तु दुर्वि-
भावमिति तद्भावनामाह—हत्थादि हत्यादि । अत्रापि कायेन स्वयं करणमिति प्रतीतं ततः कारणमाह—हस्तादिसंज्ञा कायेन गाथायां सप्तमी

वसिमेऽपि संस्तरन्तोऽपि यदविधिकरणं तन्निष्पन्नं क्षेत्रप्रायश्चित्तं तथा अध्वनि प्रपन्ने अयतनायां अध्वनः प्रपदने वा दर्पेण
व्य. सू. यत् प्रायश्चित्तं तथा काले सुभिक्षे संस्तरणेऽपि दुर्भिक्षकल्पं समाचरति दुर्भिक्षे वा समापतिते अयतना दिवानिशा मर्यादाया अकरणं
३
॥ २९ ॥ दिवस्य कल्पस्य रात्रौ रात्रिकल्पस्य दिवसे समाचरणमिति भावो यदि वा दिवसकल्पस्य रात्रिकल्पस्य ऊनमधिकं वा करणं तन्निष्पन्नं

१८ कालविषयं प्रायश्चित्तं, भावविषयमाह—

**जोगतिए करणतिए दप्पपमायपुरिसभावंमि । एएसिं तु विभागं वुच्छामि अहाणुपुव्वीए ॥ १८९ ॥**

योगत्रिकं मनोवाक्कायलक्षणं, करणत्रिकं करणकारणानुमोदनारूपं, दर्पो निष्कारणमकल्पस्य प्रतिषेवनं, प्रमादः पञ्चविधः, पुरुषो गुर्वादिलक्षणो वक्ष्यमाण एतेषु यत्प्रायश्चित्तं तद्भावविषयं, । साम्प्रतमेतेषामेव पदानां विभागमहं समासेन वक्ष्ये । तत्र योगत्रिक-

२२ करणत्रिकभावनामाह—

**जोगतिए करणतिए सुभासुभे तिविहकालभेएण । सत्तावीसं भंगा दुगुणा वा बहुतरा वावि ॥ १९० ॥**

योगत्रिके करणत्रिके प्रत्येकं शुभे अशुभे च त्रिविधकालभेदेन संचार्यमाणे सप्तविंशतिर्भङ्गा भवन्ति । द्विगुणा वा बहुतरा वा तद्यथा मनसा करोति १ मनसा कारयति २ मनसा कुर्वन्तमनुजानाति ३ । एवं वचसा ३ कायेन च ३ सर्वसंख्यया नव एते वातीता-

२६ नागतः वर्तमानरूपकालत्रिके चिंत्यमानाः सप्तविंशतिर्भवन्ति । एते चाशुभव्यापारसमाचरणविषये, तथा च शुभव्यापारासमाचारविषये-ऽपि द्रष्टव्याः । यथा मनसा न करोति कालप्राप्तमपि शक्तावपि च सत्यां शुभं व्यापारं १ न च कारयति २ कुर्वन्तं नानुजानीते ३ इत्यादि तथैव उभयमीलने चतुःपञ्चाशत् । तत उक्तं द्विगुणा वा एते एकएकसंयोगे द्विकत्रिकसंयोगे च बहुतरा भवन्ति । ते चावश्यक-

टीकायां प्रत्याख्यानचिन्तायामिव भावनीयास्ततोऽवादि बहुतरा वापि, अथ मनसा कथं करणं कारणमनुमननं वा तत आह—

**वावे महमंबवणं मणसकरणं तुहो अनुत्तेवि । अणजाणसु जावुप्पइ मणकारणमो अवारेंते ॥ १९१ ॥**

कोऽपि संयतः कश्चित् प्रदेशं दृष्ट्वा चिन्तयति अस्मिन्नवकाशे अहमाम्रवणं वपामि । यद्यपि तेन तथा चिन्तयित्वा नोक्तमाम्रवणं तथापि तत्तेन मनसा कृतमपि मनसा करणं तथा केनचित् गृहस्थेन संयत उक्तो यथा संयत ! यदित्वमनुजानासि तत एतस्मिन्नवकाशे आम्र-वणं वपामि तस्मादनुजानीहि येनोप्यते इति । एवमुक्ते यदि न निवारयति तदा अनुक्तेऽपि मनसा कारापणं द्रष्टव्यमेतदेव भावयति—

**मागहा इंगिएणं तु पेहिएण य कोसला । अद्धुत्तेण उ पंचाला नाणुत्तं दक्खिणावहा ॥ १९२ ॥**

**एवं तु अणुत्ते वि मणसा कारावणं तु बोधव्वं । मणसाणुन्ना सा हु चूयवणं वुत्तवुप्पति वा ॥१९३॥**

मागधा मगधदेशोद्भवाः प्रतिपन्नमप्रतिपन्नं वा इङ्गिताकारविशेषेण जानन्ति, कौशलाः प्रेक्षितेन अवलोकितेन, पञ्चालाः अर्धोक्तेन, नानुक्तं दक्षिणापथाः किन्तु साक्षाद्वचसा व्यक्तीकृतं ते जानते, प्रायो जडप्रज्ञत्वात् , । तत एवं सति वचसानुक्तेऽपि निवारणाभावात् मनसा कारापणं बोद्धव्यम् । सम्प्रति मनसानुज्ञातं भावयति चूतवनमुप्तं पूर्वमारोपितं, यदि वा उप्यते आरोप्यमाणं तिष्ठतीति कृत्वा साधुश्चिन्तयति । शोभनं यदिह चूतवनमुप्तमुप्यते वा एषा मनसानुज्ञा ।

**एवं वयकायम्मी तिविहं करणं विभासबुद्धीए । हत्थदिसन्नच्छोटिं इय काये कारणमणुण्णा ॥ १९४ ॥**

एवमुक्तप्रकारेण वचसि काये च त्रिविधं करणं करणकारणानुमननलक्षणं स्वबुद्ध्या विभाषेत तत्र वचसि सुप्रतीतं काये तु दुर्वि-भावमिति तद्भावनामाह—हत्यादि हत्यादि । अत्रापि कायेन स्वयं करणमिति प्रतीतं ततः कारणमाह—हस्तादिसंज्ञा कायेन गाथायां सप्तमी

व्या. सू. ३ ॥ ३० ॥ तृतीयार्थे कारणं तथा च्छोटिं नखच्छोटिकां ददतः कायेन अनुज्ञा ॥

**एवं नवभेएणं पाणाइवायादिगे उ अइयारो । निरवेक्खाण मणेवि पच्छित्तियरेसि उभएणं ॥ १९५ ॥**

एवमुक्तेन प्रकारेण नवभेदेन समाहारोयं नवभिर्भेदैः प्राणातिपातादिके अतीचारे यत्प्रायश्चित्तं तत्रावविषयमिति भावः । तत्र निरपेक्षाणां प्रतिमाप्रतिपन्नादीनां मनसाप्यतीचारसेवने प्रायश्चित्तमितरेषां गच्छस्थितानामुभयेन वा कायेन चातीचारसेवने प्रायश्चित्तमिति ॥

**वायामवग्गणादी धारण डेवण य होइ दप्पेणं । पंचविह पमायंमी जं जहि आवज्जई तं तु ॥ १९६ ॥**

यन्निष्कारणं व्यायाम वल्गनादि करोति यदि वा धावनं डेपनं वा, लोष्ट्वादेः प्रक्षेपणं तद्विषयं प्रायश्चित्तं भवति ज्ञातव्यं, दर्पेण तथा पंचविधे पञ्चप्रकारे प्रमादे यं प्रमादमापद्यते यत्र तद्वर्ति प्रमादविषयं प्रायश्चित्तं । सम्प्रति पुरुषानाह—

**गुरुमाईया पुरिसा तुल्लवराहे वि तेसि नाणत्तं । परिणामगाइया वा इड्ढिमनिक्खंत असहू वा ॥ १९७ ॥**

**पुमं बाल थिरा चेव कयजोग्गा य सेयरा । अहवा सभावतो पुरिसा होंति दारुण भद्दगा ॥ १९८ ॥**

गुर्वादयः पुरुषास्तेषां तुल्येऽप्यपराधे प्रायश्चित्तमधिकृत्य भवति नानात्वं । अथवा त्रिविधाः पुरुषाः परिणामकादयः परिणामिका अपरिणामका अतिपरिणामिकाश्च । तेषामपि तुल्येऽप्यपराधे प्रायश्चित्तमयवान्यथा भवति । अथवा अनेकविधा पुरुषाः, तद्यथा—ऋद्धिमन्निष्क्रान्ताः अनृद्धिमन्निष्क्रान्ताश्च असहाः ससहाश्च पुरुषाः स्त्री नपुंसकानि च बालास्तरुणाश्च स्थिरा अस्थिराश्च कृतयोगाश्च सेतरा नाम सप्रतिपक्षा एतेषामपि तुल्येऽप्यपराधे पुरुषभेदेन प्रायश्चित्तभेदः अथवा स्वभावतः पुरुषा द्विविधा भवन्ति तद्यथा दारुणा भद्रकाश्च । तत्र तुल्येऽप्यपराधे दारुणानामन्यत् प्रायश्चित्तमन्यत् भद्रकाणामिति । सांप्रतमुपसंहारमाह—

उ. १०. भा. १९५-२०४ ॥ ३१ ॥

पायछित्ता भवंते य ववहारे सो समासतो भणितो। जेणं तु ववहरिज्जइ इयाणि तं तू पवक्खामि ॥१९९॥

एषोऽनन्तरोदितः प्रायश्चित्ते आभवति च प्रत्येकं पञ्चविधो व्यवहारः समासतो भणितः इदानीं तु येन व्यवह्रियते तं व्यवहारं प्रवक्ष्यामि। प्रतिज्ञातमेव करोति।

पंचविहो ववहारो दुग्गतिभयचुरगेहिं पन्नत्तो। आगम सुय आणा धारणा य जीए य पंचमए ॥२००॥

येन व्यवह्रियते स व्यवहारो दुर्गतिभयचूरकैर्दुर्गतिभयविध्वंसकैः पञ्चविधः प्रज्ञप्तस्तद्यथा आगमः श्रुतमाज्ञाधारणा जीतं च पञ्चमः ॥

आगमतो ववहारो सुणह जहा धीरपुरिसपन्नत्तो। पच्चक्खो य परोक्खो सो वि य दुविहो मुणेयव्वो ॥२०१॥

तत्रागमतो व्यवहारो तथा धीरपुरुषैः प्रज्ञप्तस्तथा शृणुत स आगमतो व्यवहारो द्विविधो ज्ञातव्यस्तद्यथा—प्रत्यक्षः परोक्षश्च।

पच्चक्खो वि य दुविहो इंदियजो चेव नोव इंदियजो। इंदियपच्चक्खो वि य पंचसु विसएसु नेयव्वो ॥२०२॥

प्रत्यक्षोऽपि द्विविधस्तद्यथा—इन्द्रियजो नोइंद्रियजश्च। तत्र इन्द्रियजः प्रत्यक्षः पञ्चसु रूपादिषु विषयेषु ज्ञातव्यः।

नोइंदियपच्चक्खो ववहारो सो समासतो तिविहो। ओहि मणपज्जवे या केवलनाणे य पच्चक्खे ॥ २०३ ॥

यस्तु नो इन्द्रियजः प्रत्यक्षो व्यवहारः समासतस्त्रिविधस्तद्यथा—अवधिप्रत्यक्षं, मनःपर्यवप्रत्यक्षं, केवलज्ञानप्रत्यक्षं। तत्रावधिप्रत्यक्षमाह—

उही गुणपच्चइए जे वट्टंती सुयंगवी धीरा। ओहि विसयनाणत्थे जाणसु ववहारसोहिकरे ॥ २०४ ॥

व्य. सू. अवधिर्द्विधा भवप्रत्ययो गुणप्रत्ययश्च । तत्र संयतानां गुणप्रत्यय एव न भवप्रत्ययस्तत आह—अवधौ गुणप्रत्यये ये वर्तन्ते श्रुताङ्ग-
३ विदो धीरास्तान् अवधिविषयज्ञानस्थान् जानीतं व्यवहारशोधिकरान् शुद्धव्यवहारकारिणः ॥
॥ ३१ ॥ **उज्जुमती विउलमती जे वट्टंती सुयंगवी धीरा । मणपज्जवनाणत्थे जाणसु ववहारसोहिकरे ॥ २०५ ॥**

ये ऋजुमतौ विपुलमतौ वा मनःपर्यवज्ञाने श्रुताङ्गविदो धीरा वर्तन्ते तान्मनःपर्यवज्ञानस्थान् जानीत व्यवहारशोधिकरान् शुद्ध-
१८ व्यवहारकारिणः;

**आदिगरा धम्माणं चारित्तवरनाणदंसणसमग्गा । सव्वत्तगनाणेणं ववहारं ववहरंति जिणा ॥ २०६ ॥**

ये धर्मयोः श्रुतधर्मस्य चारित्रधर्मस्य चादिकरास्तत्प्रथमतया प्रवर्तनशीलाश्चारित्रवरज्ञानदर्शनसमग्रास्ते जिनाः सर्वत्रगज्ञाने व्यवहारं व्यवहरन्ति । उक्तः प्रत्यक्षः । सम्प्रति परोक्षमाह—

२२ **पच्चक्खागमसरिसो होति परोक्खो वि आगमो जस्स । चंदमुही विव सोवि हु आगमो ववहारवं होइ॥२०७॥**

यद्यपि पूर्वादिकं श्रुतं तथापि यस्यागमश्चतुर्दशपूर्वादिकः परोक्षोऽपि प्रत्यक्षागमसदृशः प्रत्यक्षावध्यादितुल्यरूपो भवति सोप्यागम-व्यवहारवान् वक्तव्यो भवति । यथा चन्द्रसदृशमुखी कन्या चन्द्रमुखीति एतदुक्तं भवति यद्यपि पूर्वाणि श्रुतं नागमतुल्यानीति (तदपि) तैर्व्यवहरन् आगमव्यवहारवान् उच्यते इति । सम्प्रत्यागमस्य व्याख्यानमाह—

२६ **नायं आगमयंति एगट्ठं जस्स सो परायत्तो । सो परोक्खो वुच्चइ तस्स पएसा इमे हुंति ॥ २०८ ॥**

ज्ञानमागमितमित्येकार्थमेवं च ज्ञानमागम इत्येकार्थमापतितं । तत्र यस्य स आगमोऽपराधीनः स प्रत्यक्ष उच्यते । स चावध्या-

दिरूपो यस्य तु परायत्तः स परोक्ष उच्यते । स च चतुर्दशपूर्वादिसमुत्थस्तस्य परोक्षस्यागमस्य प्रदेशाः प्रतिभागा भेदा इत्यर्थः । इमे वक्ष्यमाणा भवन्ति । तानेवाह—

पारोक्खं ववहारं आगमतो सुयधरा ववहरंति । चोद्सदसपुव्वधरा नवपुव्वियगंधहत्थी य ॥ २०९ ॥

ये श्रुतधराश्चतुर्दशपूर्वधरा दशपूर्वधरा नव पूर्विणो वा गन्धहस्तिनो गन्धहस्तिसमानाः से आगमतः परोक्षं व्यवहारं व्यवहरन्ति । अत्राक्षेपपरिहारावभिधित्सुराह—

किह आगम ववहारी जम्हा जीवाद्यो पयत्था उ । उवलद्धा तेहिं तू सव्वेहिं नयविगप्पेहिं ॥ २१० ॥

कथं केन प्रकारेण साक्षात् श्रुतेन व्यवहरन्तः आगमव्यवहारिणः प्रोच्यन्ते सूरिराह—यस्मात् जीवादयः पदार्थास्तैश्चतुर्दशपूर्वधरादिभिः सर्वैं नयविकल्पैर्नैगमादिनयभेदैरुपलब्धाः एतदेव सविशेषमाह—

जह केवली वि जाणइ दव्वं च खेत्तं च कालभावं च । तह चउलक्खणमेवं सुयनाणीमेव जाणाति ॥२११॥

यथा केवली केवलज्ञानेन सर्वं द्रव्यं सर्वं क्षेत्रं सर्वं कालं सर्वं भावं च सर्वात्मना स्वपरपर्यायभेदाभिन्नं जानाति । एवं श्रुतज्ञान्यपि चतुर्लक्षणं द्रव्यक्षेत्रकालभावरूपं श्रुतबलेन जानाति । तत एतेऽप्यागमव्ववहारिण उच्यन्ते एतदेवं प्रस्तुतं प्रायश्चित्त-शुद्धयधिकारमधिकृत्य योजयति ।

पणगं मासविवड्ढी मासगहाणी य पणगहाणी य । एगाहे पंचाहं पंचाहे चेव एगाहं ॥ २१२ ॥

रागदोसविवड्ढिं हाणिं वा नउ देंति पच्चक्खी । चोद्दसपुव्वादीवि हु तह नाउं देंति हीणाहियं ॥ २१३ ॥

व्य. सू. यथा प्रत्यक्षिणः प्रत्यक्षागमज्ञानिनस्तुल्येऽप्यपराधे पञ्चक पञ्चक योग्ये एकस्य पञ्चकं ददति । अपरस्य रागद्वेषविवृद्धिमुपलभ्य
३ मासेन मासाभ्यां मासैर्वा वृद्धिं प्रयच्छन्ति । उपलक्षणमेतत् मूलमनवस्थाप्यं पाराञ्चितं वा यच्छन्ति । यथा तुल्येऽपि पाराञ्चितं योग्यापराधे
॥ ३२ ॥ एकस्य पाराञ्चितमपरस्यानवस्थाप्यं मूलं च्छेदं वा मासेन मासाभ्यां मासै र्वा हान्या तपो वा च शब्दात् पञ्चकं यावदन्ते नमस्कार
१८ सहितं हा दुष्ठुकृतं हा दुष्ठुकारितं हा दुष्ठु अनुमोदितमित्येवं वैराग्यभावनातो रागद्वेषहानिं भूयसीमति भूयस्तरामुपलभ्य प्रयच्छन्ति, तथा कस्यचित् मासप्रतिसेवनायामल्पां रागद्वेषहानिमुपलभ्य पञ्चकहान्या मासिकं ददाति पञ्चविंशतिं दिनानि ददतीत्यर्थः । तथा एकाहंनाम अभक्तार्थं प्रतिसेविते पञ्चाहं ददति पञ्चाहे वा प्रतिसेविते एकाहमुपलक्षणत्वादाचाम्लमेकाशनं पूर्वार्द्धं निर्विकृतं पौरुषीं नमस्कारसहितं वा प्रयच्छन्ति । एवं चतुर्दशपूर्वादयोऽपि हु निश्चितं रागद्वेषहानिवृद्धी उपलभ्य हीनमधिकं वा प्रायश्चितं ददति । अत्र परस्य प्रश्नमुदीरयति—

२२ **चोदगपुच्छा पच्चक्खनाणिणो थोव कह बहुं देंति । दिठंतो वाणियए जिणचोदस पुव्विए धमए ॥ २१४ ॥**

चोदकस्यात्र पृच्छा प्रत्यक्षज्ञानिनो जिनादयः स्तोकेऽपराधे कथं बहु प्रयच्छन्ति प्रायश्चित्तमुपलक्षणमेतत् भूयसि वापराधे स्तोकमत्र सूरिराह—दृष्टान्तोऽत्र वणिजा दृष्टव्यः । तथा भूयः परस्य पृच्छा जिनादयः केवलज्ञानादिबलेन परस्य भावं जानते चतुर्दशपूर्विणस्तु कथं येन स्तोकेऽपि बहु, बहावपि स्तोकं ददति । सूरिराह—अत्र धमको दृष्टान्तः तत्र प्रथमतो वणिग्दृष्टान्तं भावयति—

२६ **जं जह मोल्लं रयणं तं जाणइ रयणवाणितो निउणो । थोवं तु महल्लस्सवि कासइ अप्पस्स वि बहुं तु ॥२१५॥**

यथा निपुणो रत्नवणिक् यत् रत्नं यथा मूल्यं तत्तथा सम्यक् जानाति । ज्ञात्वा च कस्यचित् महतोऽपि रत्नस्य स्तोकं मूल्यं ददाति, कस्यचिदल्पस्याप्यद्भुतगुणोपेतस्य बहु, इमामेव दृष्टान्तभावनां प्रकारान्तरेणाह—

**अहवा कायमणिस्स उ सुमहल्लस्स विउ कागणी मोल्लं । वइरस्स उ अप्पस्स वि मोल्लं होती सयसहस्सं॥२१६॥**

अथवेति प्रकारान्तरे रत्नपरीक्षको वणिक् काचमणेः सुमहतोऽपि मूल्यं काकिनीं करीत । वज्रस्य तु रत्नस्याल्पस्यापि मूल्यं तेन क्रियमाणं शतसहस्रं भवति । अत्रोपनयमाह—

**इय मासाण बहूण विरागदोसप्पयाए थोवं तु । रागदोसोवचया पणगे विउ तो बहुं देंति ॥ २१७ ॥**

इति अमुना दृष्टान्तप्रकारेण बहुनामपि मासानां योग्येऽपराधे वैराग्यभावनाच्छलतो रागद्वेषाल्पतया स्तोकं प्रायश्चित्तं ददति, सिंहव्यापादकस्येव,रागद्वेपोपचयात् पञ्चकेऽप्पपराधे बहुप्रायश्चित्तं ददति। अधुना जिन चोद्दसपुव्विएधमए इत्यस्य(२१४)व्याख्यानमाह—

**पच्चक्खी पच्चक्खं पासइ पडिसेवगस्स सो भावं । किए जाणइ पारोक्खी नायमिणं तत्थ धमएणं ॥२१८॥**

प्रत्यक्षी जिनादिः प्रत्यक्षं प्रतिसेवस्य भावं जानाति, परोक्षी चतुर्दशपूर्वादिः कथं जानाति येन सोऽपि तथैव व्यवहरति ? सूरिराह—तत्र तस्मिन् विषये ज्ञातमुदाहरणमिदं वक्ष्यमाणं धमकेन शङ्खध्मात्रा तदेव दर्शयति—

**नालीधमएण जिणा उवसंहारं करेंति पारोक्खे; जह सो कालं जाणइ सुएण सोहिं तहा सोउं ॥ २१९ ॥**

जिनास्तीर्थकृतः परोक्षे आगमे उपसंहारं नालीधमकेन कुर्वन्ते इयमत्र भावना—नाडिकायां गलन्त्यामुदकगलनपरिमाणतो जानाति एतावत्युदके गलिते यामो दिवसस्य रात्रेर्वागत इति ततोऽन्यस्य परिज्ञानाय शङ्खं धमति । तत्र यथा सोऽन्यो जनः शङ्खस्य शब्देन श्रुतेन कालं वा यामलक्षणं जानाति तथा परोक्षागमगामिनोऽपि शोधिमालोचनां श्रुत्वा तस्य यथावस्थितं भावं जानन्ति । ज्ञात्वा च तदनुसारेण प्रायश्चित्तं ददति । अथ कीदृशास्ते श्रुतज्ञानिनो ये प्रत्यक्षज्ञानिन इव शोधिं जानन्ति । तत आह—

व्य. सू. जेसिं जीवाजीवा उवलद्धा सव्वभावपरिणामा । सव्वाय नयविहीहिं केण कयं आगमेण कयं ॥२२०॥

३ येषां श्रुतवलेन सर्वे जीवा अजीवाश्च उपलब्धा द्रव्यतः सर्वेषामपि च भावानां पदार्थानामुपलब्धाः श्रुतज्ञानविषयाः परिणामाः

॥ ३३ ॥ पर्यायाः कैरित्याह—सर्वैर्नैगमादिभिर्नयविकल्पैस्ते प्रत्यक्षज्ञानिन इव परस्य शोधिं जानन्ति । अत्र परप्रश्नः केन कृतं तत् श्रुतज्ञानं यस्येदृशं

१८ माहात्म्यमत आहआगमेन केवलज्ञानेन कृतमेताववाक्षेपपरिहारौ भावयति—

तं पुण केण कयं सुयनाणं जेण जीवमादीया । नज्जंति सव्वभावा केवलनाणीण तं तु कयं ॥ २२१ ॥

यत्पुनः श्रुतज्ञानं केन कृतं, येन जीवादयः सर्वे भावा ज्ञायन्ते । सूरिराह केवलज्ञानिभिः कृतं गाथायां षष्ठी तृतीयार्थे प्राकृतत्वात् तदेवं यथा श्रुतज्ञानिनोऽपि जानन्ति तथा प्रतिपादितमधुना शोधिविधिमाह—

२२ आगमतो ववहारं परसोच्चा संकियंमि उ चरित्ते । आलोइयंमि आराहणा अणालोइए भयणा ॥ २२२ ॥

आगमतः प्रत्यक्षज्ञानी वापरे परस्मिन् व्यवहारं करोति । परस्यालोचनां श्रुत्वा नान्यथा । तत्र यदि कलुषितचारित्रतया न सम्यगालोचयति, किंत्वामर्यादामतिक्रम्य वर्त्तते, तदा शंकितमिति भिन्नमिति वा कलुपितमिति वा एकार्थं चारित्रे सति न सम्यगनेनालोचितमिति ज्ञात्वा तं ब्रूते अन्यत्र गत्वा शोधिं कुरु यदि पुनः सम्यगालोचयति तदा ददाति प्रायश्चितं अथ यदि प्रत्यक्षागमज्ञानिनः परोक्षागमज्ञानिनो वा

२६ सर्वभावपरिज्ञानात्ततः कस्मात्तस्य पुरत आलोच्यते, किंतु तस्य समीपमुपगम्य वक्तव्यम्, अपराधान्मे भवन्तो जानते तस्य शोधिं प्रयच्छत तत आह—आलोइयादि । आलोचिते बहुगुणसंभवतः सम्यगाराधना भवति। अनालोचित आराधनाया भजना विकल्पना कदाचिद्भवति कदाचिन्नेति । एतच्चाग्रे भावयिष्यते। तत्रागमतो ववहारं परे सोच्चेति व्याख्यानयति—

आगमववहारी छव्विहो वि आलोयणं निसामेत्ता । देति ततो पच्छित्तं पडिवज्जइ सारिउं जइ य ॥२२३॥

उ. १०, भा. २२०–२२६ ॥ ३४ ॥

आगमव्यवहारी षड्विधोऽपि परस्यालोचनां निशम्य ततः प्रायश्चित्तं ददाति, । यदि च कमप्यपराधं विस्मृतः स्मारितः सन् सम्यक् प्रतिपद्यते तदा स्मारयति च । अन्यथा तस्यालोचनामेव न ददाति । साम्प्रतमुत्तरार्धं व्याख्यानयति—

आलोइय पडिक्कंतस्स होइ आराहणा सुनियमेण । अणालोयंमि भयणा किह पुण भयणा हवइ तस्स ॥२२४॥

पूर्वमपराधजातमालोचित्तं ततस्तस्मात् प्रतिक्रान्तस्य अपुनःकरणतया प्रतिनिवृत्तस्य नियमेन पर्यन्ते सम्यगाराधना भवति । अनालोचिते पुनर्भजना । आह—कथं पुनरनालोचिते तस्याराधनाविपयभजना भवति । अत्राह—

कालं कुव्वेज्ज सयं अमुहो वा हुज्ज अहव आयरितो । अप्पत्ते पत्ते वा आराहण तहवि भयणेवं ॥ २२५ ॥

कोऽपि आलोचनां ग्रहीष्यामीत्यालोचनापरिणामपरिणत आलोचनाग्रहणाय सम्प्रस्थित आलोचनार्हसमीपं, स च तमप्राप्त एवापान्तराले स्वयं कालं कुर्यात् । यदि वा प्राप्तोऽपि रोगवशादमुखो जातोऽथवा तस्यामासवत एव स आलोचनार्ह आचार्यः कालगतो, यदि वा प्राप्तवतोऽप्यमुखो जातः । ततः स एवमालोचनां परिणतः आलोचनाया असंभवेऽपि काले कुर्वन्नाराधको यदि पुनर्न सम्यगालोचनापरिणामपरिणतस्तदा सोऽनाराधकः स च तथा कालगतो दीर्घसंसारी भवति, एवमाराधना आलोचना हि प्राप्तेऽप्राप्ते वा भजनया भवति । सम्प्रत्यागमव्यवहारिणामपि पुरत आलोचनायां गुणानुपदर्शयति ।

अवराहं वियाणंति तस्स सोहिं च जइवी । तहा वि आलोयणा वुत्ता आलोयंते बहुगुणा ॥ २२६ ॥

यद्यप्यागमव्यवहारिणस्तथालोचकस्यापराधं विजानन्ति शोधिं च तथापि तेषामपि पुरत आलोचना दातव्या उक्ता तीर्थकर-

व्य. सू: ३ ॥ ३४ ॥

गणधरैर्यत आलोचयति वहवो गुणास्तथाह्यालोचनाचार्येण स आलोचकः प्रोत्साह्यते यथा वत्स, त्वं धन्यस्त्वं सभाग्यः यदेवं मानं निहत्यात्महितार्थतया स्वरहस्यानि प्रकटयति । महादुष्करमेतत्, एवं च स प्रोत्साहितः सन् वर्धमानपरिणामः सम्यग् निःशल्यो भूत्वा यथावस्थितमालोचयति शोधिं च सम्यक् प्रतिपद्यते, । ततः पर्यन्ते आराधना स्तोककालेन च मोक्षगमनमिति । अथ कथमागमिनो व्यवहारं प्रयुंजते तत आह—

दव्वे हिं पज्जवेहिं य कमक्खेत्ते कालभावपरिसुद्धं । आलोयणं सुणेत्ता तो ववहारं पउंजंति ॥ २२७ ॥

द्रव्यैः सचित्तादिभिः पर्यायैस्तेषामेव सचित्तादिद्रव्याणामवस्थाविशेषैः परिणामविशेषैस्तथा क्रमतः क्षेत्रतः कालतो भावतश्च परिशुद्धामालोचनां श्रुत्वा ततस्तदनन्तरं व्यवहारं शोधिव्यवहारं प्रयुञ्जते नान्यथा, तत्र यदि सचित्तं सेवित्वा सचित्तमेवालोचयति तदा द्रव्यशुद्धा सा आलोचना यदा तु सचित्तं प्रतिसेव्याचित्तमालोचयति तदा द्रव्याशुद्धा, तथा यामवस्थामुपगतं सचित्तं प्रतिसेव्य तामवस्थागतं तदालोचयति तदा सा पर्यायशुद्धा; यदान्यामवस्थामुपगतं प्रतिसेव्यान्यावस्थामालोचयति तदा पर्यायाशुद्धा तथा यदि प्रतिसेवनानुलोममालोचयति तदा सा क्रमशुद्धा उत्क्रमेणालोचयतः क्रमाशुद्धा । तथा यद्यत्र जनपदेऽध्वानि वा प्रतिसेवितं तत्तथैव आलोचयतः क्षेत्रशुद्धा आलोचना जनपदे प्रतिसेवितमध्वानि कथयतः क्षेत्राशुद्धा । यथा यत् यदा दुर्भिक्षे सुभिक्षे वा दिवारात्रौ वा प्रतिसेवितं तत्तदालोचयतः कालशुद्धा सुभिक्षे प्रतिसेव्य दुर्भिक्षे कथयतो रात्रौ वा प्रतिसेव्य दिवसे कथयतः कालाशुद्धा । तथा येनानाभोगादिना सेवितं तं भावं कथयतो भावशुद्धा, उपेत्य प्रतिसेव्यानाभोगादिना कथयतो भावाशुद्धा । सम्प्रति भावमेवोपदर्शयति—

सहसा अन्नाणे ण व भीएण व पेल्लिएण व परेण । वसणेण पमादेण व मूढेण व रागदोसेहिं ॥ २२८ ॥

ध. १०. भा. २२७-२३२ ॥ ३५ ॥

तेन प्रतिसेवकेन सहसा अज्ञानेन वा परेण वा प्रेरितेन वा व्यसनेन वा द्यूतादिना प्रमादेन वा मूढेन घा रागद्वेषाभ्यां वा प्रतिसेव्य यदि तथैवालोच्यते प्रायश्चित्ताय मे ददाति नान्यथेति वाक्यशेषः । सम्प्रति सहसेत्यस्य व्याख्यानमाह—

पुव्वं अपासिऊणं छूढे पायंमि जं पुणो पासे । न य तरइ नियत्तेउं पायं सहसा करणमेयं ॥ २२९ ॥

पूर्वमग्रेतनप्रदेशे कुलिङ्गिनमदृष्ट्वा क्षिप्ते उत्पादिते पादे यत्पुनः पश्यति कुलिङ्गिनं समापतितं न पादं निवर्तयितुं शक्नोति तत एवं यत्तस्य व्यापादनमेतत्सहसाकरणं । साम्प्रतमज्ञानमाह—

अन्नयरपमाएणं असंपउत्तस्स नोवउत्तस्स । इरियाइसु भूयत्थे अवट्टतो एयमण्णाणं ॥ २३० ॥

पञ्चानां प्रमादानामन्यतरेणापि प्रमादेनासंप्रयुक्तस्याक्रोडीकृतस्यात एव ईर्यादिषु समितिषु भूतार्थेन तत्वतोऽवर्तमानस्य यद्भवनमेतदज्ञानं अधुना भीएण व पेल्लिएण व परेण (२२८) इत्यस्य व्याख्यानमाह—

भीतो पलायमाणो अभियोगभएण वावि जं कुज्जा । पडितो वाऽपडितो वा पेलिज्जउ पेल्लिउ पाणे ॥२३१॥

अभियोगभयेन भीतः पलायमानो यत् कुर्यात् प्राणव्यपरोपणादि तत् भीतेनेति द्रष्टव्यम् । तथा परेण प्रेरितः सन्पतितोऽपतितो वा प्राणान् द्वीन्द्रियादीन् एकेन्द्रियान्वा प्रेरयेत, सम्प्रति व्यसनादिपदानि व्याचष्टे ।

जूयादि होइ वसणं पंचाविहो खलु भवे पमादो उ । मिच्छत्तभावणा उ मोहो तह रागदोसा य ॥ २३२ ॥

द्युतादि भवति व्यसनं, प्रमादः खलु मद्यादिभेदाद्भवति पञ्चविधः, मिथ्यात्वं भावना मोहः रागद्वेषाः सुप्रतीताः ।

एएसिं ट्ठाणाणं अन्नयरे कारणे समुप्पन्ने । तो आगमवीमंसं करेंति अत्ता तदुभएणं ॥ २३३ ॥

व्य. मू. ३ ॥ ३५ ॥ एतेषामनन्तरोदितानां सहसामभृतीनां स्थानानामन्यतरस्मिन्कारणे समुत्पन्ने सति आलोचनायां प्रदत्तायामागमविमर्शमाप्ता उभयेन सूत्रार्थलक्षणेन कुर्वन्ति । यथायं सहोऽयमसहः अयमेतावता शोत्स्यति अयं नेति । अथवा किमनेन सम्यगालोचितं किं वा नेति। साम्प्रतमागमविमर्शमेव व्याख्यानयति—

**जइ आगमो य आलोयणा य दोण्णि विसमं तु निवयंति। एसा खलु वीमंसा जो व सहू जेण वा सुज्झे॥२३४॥**

यत्रागमश्चालोचना च एते द्वे अपि समकं परस्परमविसंवादितया निपततो यथैव तस्यागमस्तथैवेतरस्यालोचना यथैव तस्यालोचना तथैवागमिन आगमः । एष खलु आगमविमश उच्यते । अस्मिन् सति शोधिं ददति नान्यथा यदि वा यः सहोऽसहो वा येन वा यः शुद्ध्यति । एतत्परिभावनमागमविमर्शः । सम्प्रत्याप्तशब्दव्याख्यानमाह—

**नाणमादीणि अत्ताणि, जेण अत्तो उ सो भवे । रागदोसप्पहीणो वा, जे व इट्ठा विसोधीए ॥ २३५॥**

ज्ञानादीनि ज्ञानदर्शनचारित्राणि येनाप्तानि स भवत्याप्तः ज्ञानादिभिराप्यते स्म आप्त इति व्युत्पत्तेः यो वा रागद्वेषप्रहीणः स आप्तः । यदि वा ये इष्टाः शोधौ शोधिविषये ये आप्ताः। सम्प्रत्युभयशब्दव्याख्यानार्थमाह—

**सुत्तं अत्थो उभयं आलोयण आगमो व इति उत्तयं । जं तदुभयंति वुत्तं तत्थ इमा होइ परिभासा ॥२३६॥**

सूत्रमर्थ इत्युभयं तेनागमविमर्शं कुर्वन्ति किमयं सह इत्यादि अथवा आलोचनमागमविमर्शं विदधति । यथा किं यथावस्थितास्यालोचना किं वा नेति । तत्र यत्तदुभयमित्युक्तं । तत्र इयं वक्ष्यमाणा परिभाषा भवति । तामेवाह—

**पडिसेवणाइयारे जइ नाउट्टइ जहक्कमं सव्वे । न हु देंती पच्छित्तं आगम ववहारिणो तस्स ॥ २३७ ॥**

यदि प्रतिसेवनातिचारान् यथाक्रमं सर्वान् यदि नाकुट्टयति नालोचयति तदा तस्यागमव्यवहारिणः प्रायश्चित्तं न ददाति। यदि पुनः

उ. १०. भा. प्रतिसेवनातिचारान् यथाक्रमं सर्वान् आकुट्टयति आलोचयति तदा तस्यागमव्यवहारिणः प्रायश्चित्तं ददाति।

२३४–२४१ **न तस्स दित्ते पच्छित्तं, बिंति अन्नत्थ सोहय ॥ २३८ ॥**

॥ ३६ ॥ **कहेहि सव्वं जो वुत्तो जाणमाणो वि गूहति।**

यान् सर्वानालोचयन् कथय सर्वं मा निगूहयेति य उक्तः सन् जानानोऽपि गूहयति तस्य प्रायश्चित्तमागमव्यवहारिणो न ददाति।

किन्तु ब्रुवते अन्यस्य समीपे गत्वा शोधय, शोधिं गृहाण।

**न संभरति जो दोसे सब्भावा न य मायया। पच्चक्खी साहए ते उ माइणो उ न साहए ॥ २३९ ॥**

यो दोषान् सद्भावतो न स्मरति न मायया, तस्य प्रत्यक्षी प्रत्यक्षागमज्ञानी कथयति।

**न हु होंति पच्छित्तं आगम ववहारिणो तस्स॥२४०॥**

**जइ आगमतो व आलोयणा व दोवि विसमं निवइयाइं।**

यद्यागम आलोचना च एते द्वे अपि विषमं निपतिते यथा तेनालोचितं तथागमज्ञानी तस्यातीचारं न प्रेक्षते किन्त्वन्यादृशमूनम-

धिकं वा इत्यर्थः। तदा तस्यागमव्यवहारिणः प्रायश्चित्तं न ददाति।

**जइ आगमोय आलोयणा य दोन्निवि समं निवडियाइं। देंति ततो पच्छित्तं आगमववहारिणो तस्स॥२४१॥**

यद्यागम आलोचना च एते द्वे अपि समं निपतिते यथापराधमालोचनामागमज्ञानी पश्यतीत्यर्थः। ततस्तस्यागमव्यवहारिणः प्राय-

श्चित्तं ददाति। अथ कीदृश आलोचनार्हः कीदृशो नेत्याह—

अट्ठारसेहिं ट्ठाणेहिं जो होइ अपरिनिट्ठितो । नलमत्थो तारिसो होइ ववहारं ववहरित्तए ॥ २४२ ॥

 अष्टादशसु वक्ष्यमाणेषु स्थानेषु गाथायां तृतीया सप्तम्यर्थे यो भवति अपरिनिष्ठितः सम्यगऽपरिज्ञानी स तादृशो व्यवहारं व्यवहर्त्तुं नालमर्थः—



अट्ठारसेहिं ट्ठाणेहिं जो होइ परिनिट्ठितो । अलमत्थो तारिसो होइ ववहारं ववहरित्तए ॥ २४३ ॥

अष्टादशसु वक्ष्यमाणेषु स्थानेषु यो भवति परिनिष्ठितः । सम्यग् ज्ञाता स तादृशो व्यवहारं व्यवहर्त्तुमलमर्थः पर्याप्तो भवति

अट्ठारसेहिं ट्ठाणेहिं जो होति अपतिट्ठितो । नलमत्थो तारिसो होइ ववहारं ववहरित्तए ॥ २४४ ॥

अट्ठारसेहिं ट्ठाणेहिं जो होति सुपतिट्ठतो । अलमत्थो तारिसो होइ ववहारं ववहरित्तए ॥ २४५ ॥

श्लोकद्वयमपि पूर्ववत्, नवरमप्रतिष्ठितः तेषु सम्यगवर्त्तमानः, प्रतिष्ठितस्तेषु सम्यग् वर्त्तमानः । सम्प्रति तान्येवाष्टादशस्थानान्याह—

वयछक्ककायछक्कं अकप्पो गिहिभायणे पलियंको । गोयरनिसिज्ज न्हाणे भूसा अट्ठारसट्ठाणे ॥ २४६ ॥

व्रतषट्कं प्राणातिपातमृषावादादत्तादानमैथुनपरिग्रहरात्रिभोजनलक्षणं, कायषट्कं पृथिव्यप्तेजोवायुवनस्पतित्रसलक्षणं, अकल्पः पिण्डशय्या वस्त्रपात्ररूपं चतुष्टयमकल्पनीयं गृहिभाजनं कांस्यपात्रादिः, पल्यङ्कः शय्याविशेषो गृहस्थोचितो गोचरनिषद्यागोचरगतस्य निषदनं, स्नानं देशतः सर्वतो वा शरीरस्य प्रक्षालनं विभूषामण्डनमष्टादशं स्थानमधुना परिनिष्ठितप्रतिष्ठितशब्दयोरर्थमाह—

परिनिट्ठितो परिन्नाया परिट्ठिओ जो ट्ठितो उ तेसि भवे ।

अविऊ सोहिं न याणेइ अट्ठितो पुण अन्नहा कुज्जा ॥ २४७ ॥

परिनिष्ठितो नाम यथायोगं विधेयतया वा सम्यक् परिज्ञातः प्रतिष्ठितो, यस्तेष्वष्टादशसु स्थानेष्वागमानुसारतोऽविधायकतयावस्थितोऽथापरिनिष्ठितोऽप्रतिष्ठितो वा, को दोषो येन तस्यालोचनार्हत्वप्रतिषेधस्तत आह—अविद्वान् अपरिनिष्ठितः शोधिं न जानाति, अप्रतिष्ठितो निःशूकतया मा ममापि गुरुतरं प्रायश्चित्तमापतेदिति भयतो वान्यथा व्यवहारं कुर्यात्तेनोभयोरप्यालोचनार्हत्वप्रतिषेधः ।

बत्तीसाए ट्ठाणेसु जो होइ अपरिनिट्ठितो । नलमत्थो तारिसो होइ ववहारं ववहरित्तए ॥ २४८ ॥

बत्तीसाए ट्ठाणेसु जो होइ परिनिट्ठितो अलमत्थो तारिसो होइ ववहारं ववहरित्तए ॥ २४९ ॥

बत्तीसाए ट्ठाणेसु जो होइ अपतिट्ठितो । नलमत्थो तारिसो होइ ववहारं ववहरित्तए ॥ २५० ॥

बत्तीसाए ट्ठाणेसु जो होइ सुपतिट्ठितो । अलमत्थो तारिसो होइ ववहारं ववहरित्तए ॥ २५१ ॥

श्लोकचतुष्टयमपि पूर्ववत् । सम्प्रति तान्येव द्वात्रिंशत् स्थानान्याह—

अट्ठविहा गणिसंपय एक्केक्का चउव्विहा मुणेयव्वा । एसो खलु बत्तीसा ते पुण ट्ठाणा इमे हुंति ॥२५२॥

गणिन आचार्यस्य सम्पदष्टविधा अष्टप्रकारा एकैका च भवति चतुर्विधा ज्ञातव्या, एस खलु द्वात्रिंशत् स्थानानि भवन्ति । तत्र यानि सम्पदोऽष्टौ स्थानानि तानीमानि भवन्ति । तान्येवाह—

आयारसुयसरीरे वयणे वायणामती पउगमती । एतेसु संपया खलु अट्ठमिया संगहपरिन्ना ॥ २५३ ॥

व्य. सू. आचारे श्रुते शरीरे वचने वाचनाया मतौ प्रयोगमतौ एतेषु स्थानेषु सम्पदो भवन्ति । ताश्च सर्वसंख्यया सप्त, अष्टमिका सम्प-
३ त्संग्रहपरिज्ञा ।

॥ ३७ ॥ **एसा अट्ठविहा खलु एक्केक्कीए चउव्विहो भेदो । इणमो उ समासेणं वुच्छामि अहाणुपुव्वीए ॥ २५४ ॥**

एषा अनन्तरोदिता अष्टविधा खलु सम्पत्तदेकैकस्याश्च सम्पदश्चतुर्विधोऽयं वक्ष्यमाणो भेदः तं समासेन यथानुपूर्व्या परिपाट्या
१८ वक्ष्यामि प्रतिज्ञातमेव निर्वाहयति—

**आयार संपयाए संजमधुवजोगजुत्तया पढमा । बिइया य असंपग्गहिया अणिययवित्ती भवे तइया ॥२५५॥**
**तत्तो य वुड्ढसीले आचारे संपया चउब्भेया । चरणं तु संजमो ऊ तहियं निच्चं तु उवउत्तो ॥ २५६ ॥**

आचारसम्पद्यवान्तरभेदतश्चतस्रः सम्पदस्तद्यथा—प्रथमा संयमध्रुवयोगयुक्तता, द्वितीया असंप्रग्रगहिता संप्रग्रहरहितता, तृतीया
२२ भवत्यनियतवृत्तिं स्ततश्चतुर्थी यत् वृद्धशीलो वर्त्तते । एषा आचारे संपच्चतुर्धा । तत्र संयमध्रुवयोगयुक्तता नामसंयमश्चरणं तस्मिन् ध्रुवं नित्यं
योगे युक्तता उपयुक्तता संयमध्रुवयोगयुक्तता । असंप्रग्रहिता नाम जात्यादिमदैरनुत्सिक्तता । तथा चाह—

**आयरितो बहुस्सुत्तो तवसिं जच्चादिगेहि व मएहिं । जो होइ अणुस्सित्तो असंपग्गहितो भवे सो उ ॥२५७॥**

आचार्योऽहं बहुश्रुतोऽहं तेजस्वी अहमिति मदैर्जात्यादिभिर्वा मदैर्यो भवत्यनुत्सिक्तः स भवत्यसंप्रग्रहितो मदसंप्रग्रहरहितत्वात्
२६ अनियतवृत्तिंता अनियतचारिता । तथा चाह—

**अणिययचारी अणिययवित्ती अगिहितो वि होइ अणिकेतो । निहुय स भवे अचंचल नायव्वो वुड्ढसीलत्ति॥२५८॥**

उ. १०, भा. २५४-२६२ ॥ ३८ ॥

अनियतवृत्तिर्नाम अनियतचारी अथवा अग्राहिकोऽविद्यमाननिकेतोऽनियतवृत्तिस्तथा निवृत्त एतदेव व्याचष्टे—अचञ्चलो वृद्धशीलो ज्ञातव्यः उक्ता आचारसम्पच्चतुर्धाः । सम्प्रति श्रुतसम्पदश्चातुर्विध्यमाह—

**बहुसुय परिचियसुत्ते विचित्तसुत्ते य होइ बोधव्वे । घोसविसुद्धिकरे वा चउहा सुयसंपया होइ ॥ २५९ ॥**

श्रुतसम्पच्चतुर्धा चतुःप्रकारा भवति, तद्यथा–बहुश्रुतः परिचितसूत्रः विचित्रसूत्रो घोषविशुद्धिकरः । सम्पत्सम्पद्वतोरभेदेनाभिधानं श्रुतश्रुतववतोः कथंचिद्भेदात् । एवमुत्तरत्र पूर्वं च परिभावनीयं । तत् बहुश्रुतमाह—

**बहुसुत्तजुगपहाणे अब्भिंतर बाहिरं सुयं बहुहा । होइ व सद्दग्गहणा चारित्तं वि सुबहुयंपि ॥ २६० ॥**

यस्य बहुधा बहुप्रकारमभ्यन्तरमङ्गप्रविष्टं बाह्यमङ्ग बाह्यश्रुतं भवति विद्यते । घोषविशुद्धिकर इत्यत्र च शब्दग्रहणात् सुवहुकं चारित्रमपि यस्य स युगप्रधानो बहुश्रुतः ।

**सगनामं व परिचियं उक्कमउक्कमतो बहूहिं विगमेहिं । ससमयपरसमएहिं य उस्सग्गोववायतो चित्तं॥२६१॥**

यथा श्रुतं उत्क्रमतः क्रमेण च तथा क्रमेण उत्क्रमेण वा एकैकपदमोचनेन इत्यादिभिरपि बहुनिर्गमैः स्वनामेव स्वाभिधानमिव परिचितं सूत्रं सपरिचितसूत्रस्तथा यस्य स्वसमयपरसमयाभ्यां स्वसमयपरसमयवक्तव्यताभ्यामुत्सर्गापवादेन उत्सर्गानुविद्धमपवादानुविद्धं विचित्रं सूत्रं सविचित्रसूत्रः । घोषविशुद्धमाह—

**घोसा उदत्तमादी तिहिं विसुद्धं तु घोसपरिसुद्धं । एसा सुत्तोवसंपय सरीरउवसंपयं अतो वुच्छं ॥ २६२ ॥**

घोषा उदात्तादयस्तैर्विशुद्धं घोषविशुद्धं तत्करणशीलो घोषविशुद्धिकरः एषा चतुर्धा श्रुतोपसम्पत् । अत ऊर्ध्वं शरीरोपसम्पदं

व्य. सू. ३ वक्ष्ये । तामेवाह—

॥ ३८ ॥ **आरोह परीणाहो तह अणुत्तप्पया सरीरंमि । पडिपुण्ण इंदियएहिं य थिरसंघयणो य बोधव्वो ॥ २६३ ॥**

तत्रारोह-शरीरस्य आरोहः समपरिणाहः तथा अनुतप्यता अलज्जनीयता तथा परिपूर्णमिन्द्रियैः स्थिरसंहननश्चतुर्थो बोद्धव्यः । तत्रारोह-

१८ परिणाहमाह ॥

**आरोहो दिग्घत्तं विक्खंभो वि जइ तेत्तितो चेव । आरोह परीणाहे उवसंपया एस नायव्वा ॥ २६४ ॥**

आरोहो दीर्घत्वं परिणाहो विष्कंभो विशालता । तत्र यावानारोहस्तावान् यदि विष्कंभो भवति तदा एषा उपसम्पत् आरो-हपरिणाहे ज्ञातव्या । अनुतप्यतामाह—

२२ **तवु लज्जाए धाऊ अलज्जणीयो अहीण सव्वंगो । होइ अणुतप्पे सो अविगलइंदियपडिपुण्णे ॥ २६५ ॥**

त्रपुधातुर्लज्जायां वर्तते त्रपौषि लज्जायामिति वचनात् । तत उत्प्राबल्येन त्रप्यते लज्यते येन तत् उत्त्रप्यं । न उत्त्रप्यमनउत्त्रप्यम-लज्जनीयं तथा च शरीरशरीरमतोरभेदमधिकृत्याह—अलज्जनीयः किमुक्तं भवति अहीनसर्वाङ्ग एष भवत्यनुत्त्रप्यः । तथा अविकलानि स्पष्टं सम्पूर्णानि इन्द्रियाणि यस्य सोऽविकलेन्द्रियः । परिपूर्णः परिपूर्णेन्द्रिय उच्यते । स्थिरसंहननमाह—

२६ **पढमगसंघयणथिरो बली य सरीरो च होइ नायव्वो । एसा सरीरसंपया एत्तो वयणंमि वुच्छामि ॥ २६६ ॥**

प्रथमसंहननः स्थिरः स्थिरसंहननो ज्ञातव्यः । एषा चतुःप्रकारा शरीरसम्पदुक्ता । अत ऊर्ध्वमिदानीं वचने सम्पदं व्याख्यामि

तामेवाह—

आदेज्जगब्भवक्को अत्थवगाढं भवे महुरं॥२६७॥

आदेज्ज महुरवयणो य अणिस्सियं वयणो तहा असंदिद्धो । आदेज्जगब्भवक्को अत्थवगाढं भवे महुरं॥२६७॥

आदेज्ज महुरवयणो य अणिस्सियं वयणो तहा असंदिद्धो । निस्सिय कोहाईहिं अहवावी रागदोसेहिं ॥ २६८ ॥

अहवा अपरुसवयणो खीरासवमादिलद्धिजुत्तो वा । निस्सिय कोहाईहिं अहवावी रागदोसेहिं ॥ २६८ ॥

आदेज्जति पदैकदेशे पदसमुदायोपचारादादेयवचन इति द्रष्टव्यमेवमन्यत्रापि । तथा मधुरवचनोऽनिश्रितवचनोऽसन्दिग्धोऽसन्दिग्ध- वचनः । तत्रादेय आदेयवचनो नाम ग्राह्यवाक्यः । अर्थावगाढं भवति मधुरं, मधुरं वचनं यस्यासौ मधुरवचनः । अथवा अपरुषवचनो यदि वा क्षीराश्रवादिलब्धियुक्तो मधुरवचनः । तथा निश्रितं क्रोधादीनामथवा रागद्वेषाणां निश्रामुपगतं गाथायां तृतीयाकरणविवक्षातो न निश्रितं वचनं यस्य स तथा असन्दिग्धवचनमाह—

अव्वत्तं अफुडत्थं अथ बहुत्ता व होति संदिद्धं । विवरीयमसंदिद्धं वयणे सा संपया चउहा ॥ २६९ ॥

अव्यक्तवचो व्यक्तताया अभावतः अस्फुटार्थमक्षराणां सन्निवेशविशेषतो विवक्षितार्थसम्पादकत्वाभावात्, अर्थबहुत्वाद्वा भवति। सन्दिग्धं तद्विपरीतमसंदिग्धं तद्वचनं यस्य सोऽसंदिग्धवचनः । एषा वचने सम्पच्चतुर्धा चतुःप्रकारा । सम्प्रति वाचनासम्पदं चतुः- प्रकारमाह—

वायणभेया चउरो विजिओद्देसण, समुद्दिसणयाओ । परिनिव्वय निवायाए निज्जवणे च्चेव अत्थस्स ॥ २७० ॥

वाचनाया भेदाश्चत्वारस्तद्यथा–विचिन्त्य सम्यक् योग्यतां परिनिश्चित्योद्देशनं १, विचिन्त्यैव समुद्देश (नं) समुद्देशनता च २, तथा परिनिर्वाप्य वाचयति ३, अर्थस्य निर्यापना ४ । तत्र विचिन्त्योद्देशनमाह—

व्य. सू. ३ ॥ ३९ ॥

तेणेव गुणेणं तू वाएयव्वा परिक्खिउंसी । सा उद्दिसाति वियाणेउं जं जस्स उ जोग्गं तं तस्स ॥२७१॥

अयमस्य वाचना योग्योऽयमयोग्य इति तेनैव वाचनाविषयेन गुणेन शिष्याः परीक्ष्य वाचयितव्या नान्यथा ततो यत् यस्य योग्यं तत्तस्य विज्ञाय उद्दिशति । अत्रैव प्रकारान्तरमाह—

अपरिणामगादी वियाणिउ अभायणे न वाएत्ति । जह आममट्टिय घडे, अंबेव नछुब्भती खीरं ॥ २७२ ॥

अपरिणामिकादीन् आदिशब्ददतिपरिणामिकपरिग्रहः छेदसूत्राणामभाजनानि विज्ञाय न वाचयति नोद्देशतीत्यर्थः । यथा आमे अपक्वे मृत्तिका घटे पक्के वा अम्ले न क्षीरं क्षिप्यते ।

जइ छुब्भती विणस्सइ नस्सइ वा एवमपरिणामादी । नोद्देसे च्छेयसुत्तं समुद्दिसे वाचितं चेव ॥ २७३ ॥

यद्यम्ले क्षीरं क्षिप्यते तदा विनश्यते यदि वा आममृत्तिकाघटे घटस्य भङ्गतो विनश्यति । एवमपरिणामादौ च्छेदसूत्रं विनश्यति नश्यति वा ततो नोद्दिशति एषा विचिन्त्योद्देशनता, समुद्दिशेदपि तदेव योग्यं नान्यत् । एषा विचिन्त्य समुद्देशनता ।

परिनिव्ववियावाए जत्तियमेत्तं तु तरइ उप्पेउं । जाहगदिट्ठंतेणं परिचिते ताव तमुद्दिसाति ॥ २७४ ॥

परिनिर्वाप्य वाचयति । किमुक्तं भवति ? जाहकदृष्टान्तेन यावन्मात्रमवग्रहीतुं शक्नोति तावन्मात्रमग्रेतनपरिचिते उद्दिशति । एषा परिनिर्वाप्य वाचना, अर्थस्य निर्यापणामाह—

निज्जवग्गो अत्थस्स जो वियाणाइ अत्थ सुत्तस्स । अत्थेण व निव्वहती अत्थंपि कहेइ जं भणियं ॥२७५॥

अर्थस्य निर्यापक इति यद्भणितं तस्यायमर्थः । यो नाम सूत्रस्यार्थं कथ्यमानं विजानाति यदि वा अर्थेन निर्वहति अर्थावधारण-

वलेन सूत्रपातो निर्वाहमुपयाति तस्यार्थमपि कथयति, आस्तां सूत्रं ददातीत्यपि शब्दार्थः । सम्प्रति मतिसम्पदं चतुर्भेदामाह—

उ. १०, भा. २७१–२७९ ॥ ४० ॥

**मइसंपयचउभेया उग्गह ईहा अवाय धारणा य । उग्गहमति छब्भेया तत्थ इमा होइ नायव्वा ॥ २७६ ॥**

मतिसम्पच्चतुर्भेदा । तद्यथा—अवग्रह ईहा अवायः धारणा च । तत्रावग्रहणमवग्रहः अनिर्देश्य सामान्यमात्रग्रहणमीहनमीहा अव-
४ ग्रहीतस्यार्थस्यासद्भूतविशेष परित्यागेन सद्भूतविशेषादानाभिमुखो बोधविशेषः । अवायो निश्चयः । धारणा स्मृतिस्तत्रावग्रहमतिरियं वक्ष्य-
माणे षड्भेदा भवति ज्ञातव्या । तामेवाह—

**खिप्प बहुविहं व धुवअनिस्सिय तह य होइ असंदिद्धं । उगेण्हइ एवीहा अवायमवि धारणा चेव ॥२७७॥**

१ क्षिप्रं २ बहु ३ बहुविधं ४ ध्रुव ५ निश्रित ६ असन्दिग्धमवगृह्णाति । एवं अवग्रहस्य षट् भेदं एवं षट् भेदा ईहा अवायो
८ धारणापि च प्रत्येके ज्ञातव्या । तत्र क्षिप्रमवग्रहं व्याख्यानयति ।

**सीसेण कुतित्थीण व उच्चरियमेत्तमेवाउगिण्हे । तं खिप्पं बहुगं पुण पंच व छ स्सत्त गंथसया ॥ २७८ ॥**

शिष्येन कुतीर्थिना वा यत् उच्चरितमात्रमेवावगृह्णाति तत् क्षिप्रमवग्रहणमुच्यते । बहुकं पुनरवग्रहणामिदं यत् पञ्च षट् सप्त वा
ग्रन्थशतान्येकवारमवगृह्णाति;

१२ **बहुहाणेगपयारं जह लिहति वधारए गणेइ विया, अक्खाणगं कहेइ सद्दसमूहं व णेगविहं ॥ २७९ ॥**

बहुविधमवग्रहणं नाम अनेकप्रकारं यथा स्वयं लिखति अन्येन भण्यमानमवधारयति । अन्यच्च संख्येयवस्तु गणयति । अथवा
नानापुरुषाश्रितं नानातोद्याश्रितं वा शब्दसमूहमनेकाविधं अनेकप्रकारं प्रत्येकमवगृह्णाति एतत् बहुविधमवग्रहणम् ।

न विस्सरति धुवं ता अणिस्सियं जन्न पोत्थए लिहिया, अणभासियं च गेण्हए निस्संकिय होइ संदिद्धं॥२८०॥

व्य. सू. ३ ॥ ४० ॥ यन्नैव विस्मरति तत् ध्रुवम् । अनिश्रितं नाम यन्न पुस्तके लिखितमपेक्षते अभाषितं वा परैर्व्याजेन उदीरितं वा यदवगृह्णाति तद-
निश्रितं, निःशङ्कितं भवत्यसन्दिग्धं । एवं ग्रहणस्य षड्भेदाः । साम्प्रतमीहादीनां षड्भेदान् प्रत्येकं योजयन्नाह—

उग्गहियस्स उ ईहा ईहिता पच्छा अणंतरमवातो । अवगते एच्छ धारण तीए विसेसो इमो नवरं ॥२८१॥

१८ अवग्रहीतार्थस्य विषये ईहा प्रवर्तते, ईहाया अपि उक्तप्रकारेण षड्भेदा भावनीयाः । ईहिते सति पश्चादनन्तरमवाय उपजायते । तत-
स्तस्याप्युक्तप्रकारेण षड्भेदाः । अवगते सति पश्चाद्धारणातस्तस्या अपि षड्भेदा नवरं तस्यां धारणायामयं वक्ष्यमाणो विशेषस्तमेवाह—

बहु बहुविहं पुराणं दुद्धरमणिस्सिय तहेव असंदिद्धं । पोराण पुरा वायितं दुद्धरनयभंगगुविलता ॥ २८२ ॥

२२ बहु बहुविधं पौराणं दुर्धरमनिश्रितं तथैवासन्दिग्धं धरणमिति धारणायाः षड्भेदास्तत्र बहुबहुविधाऽनिश्रिताऽसन्दिग्धानि तथैव
पौराणं नाम यत् पुरा चिरकालो वाचितं। दुर्द्धरं नाम नयभंगैर्गुपिलत्वान्महता कष्टेन धार्यम् सम्प्रति प्रयोगमतिसम्पदं चतुर्भेदामाह ॥

एत्तो उ पउगमती चउव्विहा होइ आणुपुव्वीए । आयपुरिसं व खेत्तं वत्थुं वि य पउंजए वायं ॥ २८३ ॥

अत ऊर्ध्वं प्रयोगमतिश्चतुर्धा आनुपूर्व्या परिपाट्या वक्ष्यते । तामेवाह—आत्मानं पुरुषं क्षेत्रं वस्तु विदित्वा ज्ञात्वा वादं प्रयुङ्क्ते
२६ उपलक्षणमेतत् । धर्मकथादिकं वा तत्रात्मद्वारमाह—

जाणति पयोगभिसजो वाही जेणातुरस्स छिज्जइ । ओइय वातो य कहा वा नियसत्तिं नाउ कायव्वा ॥२८४॥

( वाधीए वप्पणो सामत्थं णाऊणपउंजे वाओ धम्मकथं वा )

उ. १०. भा. २८०–२८९ ॥ ४१ ॥

यथा प्रयोगमिपक् येनौषधेनातुरस्य व्याधिः च्छिद्यते तत् जानाति ज्ञात्वा च तत् प्रयुंक्ते इत्येवममुना प्रकारेण निजशक्तिं ज्ञात्वा वादो धर्मकथा वा कर्तव्या नान्यथा। गतं आत्मद्वारमधुना पुरुषद्वारमाह—

पुरिसं उवासगादी अहवावी जाणगा इयं परिसं। पुव्वं तु गमेऊणं ताहे वातो पतोत्तव्वो ॥ २८५ ॥

पुरुषमुपासकादि कथमथवा ज्ञापिकादिकां विद्यां वा पर्षदं पूर्वं गमयित्वा पश्चात् वादः प्रयोक्तव्यो नान्यथा। गतं पुरुषद्वारमधुना क्षेत्रद्वारमाह—

खेत्तं मालवमादी अहवावी साहुभावियं जं तु। नाऊण तहा विहिणा वातो य तहिं पतोत्तव्वो ॥२८६॥

क्षेत्रं मालवादिकं यद्वा साधुभावितं तत्तथारूपेण ज्ञात्वा विधिना जिनभणितेन वादः प्रयोक्तव्यो नान्यथा। गतं क्षेत्रद्वारं। वस्तुद्वारमाह—

वत्थुं परवादी ऊ बहु आगमितो न वा च णाऊणं। रायावरायमच्चो दारुणभद्दस्स भावोत्ति ॥ २८७ ॥

वस्तु परिवादी बह्वागमिको न वा यदि वा राजा राजामात्यो वा दारुणस्वभावो भद्रस्वभावो वा इति ज्ञात्वा वादः प्रयोक्तव्यः तदेवमुक्ता प्रयोगमतेः सम्पच्चतुःप्रकारा। सम्प्रति संग्रहपरिज्ञां चतुःप्रकारामाह—

बहुजणजोग्गं खेत्तं पेहे तह फलगपीढमादिण्णो। वासासु एए दोण्णि वि काले य समाणए कालं॥ २८८ ॥

पूए अहो गुरुंमि य चउहा एसा उ संगह परिण्णा। एएसिं तु विभागं वुच्छामि अहाणुपुव्वीए॥ २८९ ॥

वर्षासु बहुजनयोग्यं क्षेत्रं प्रेक्षयति तथा फलकपीठं समाहारो द्वन्द्वः। पीठफलकानीत्यर्थः। यद्वर्षासु एते द्वे अपि पीठफलके

आचीर्णे तथा काले स्वाध्यायादिसम्बन्धिनि प्राप्तावसरे तं कालं स्वाध्यायादिना समानयति । तथा यथा गुरुरत्नाधिकतरं पूजयति एषा चतुर्था संग्रहपरिज्ञा । साम्प्रतमेतेषां पादानां विभागं यथानुपूर्व्या क्रमेण वक्ष्यते तमेवाह—

**वासे बहुजणजोग्गं विच्छिन्नं जंतु गच्छपाओग्गं । अहवा वि बाल दुब्बल गिलाण आदेसमादीणं ॥ २९० ॥**

बहुजनयोग्यं नाम विस्तीर्णं यतः समस्तस्यापि गच्छस्य प्रायोग्यं अथवा बालदुर्बलग्लानादेशादीनां प्रायोग्यं बहुजनयोग्यं । एवंभूतक्षेत्राप्रत्युपेक्षणे दोषानाह—

**खेत्ते असति असंगहिया ताहे वच्चंति ते उ अन्नत्थ । न उ मइल्लेति निसेज्जा पीढफलगाण गहणंमि ॥२९१॥**

बहुजनयोगस्य क्षेत्रस्य असति अभावे ते साधवोऽसंगृहीता भवन्ति ततस्तेऽन्यत्र गच्छान्तरे व्रजन्ति, तस्मादवश्यं बहुजनयोग्यं क्षेत्रं वर्षासु प्रत्युपेक्ष्यं, तथा पीठफलकादीनां ग्रहणे तु नैव मलिनयति न मलिनीभवन्ति निषद्याः संस्तारकादिरूपाः ।

**वियरे न तु वासासुं अन्नकाले उ गम्मते णत्थ । पाणासीयलकुंथादिया ततो गहण वासासु ॥ २९२ ॥**

न चान्यत्संस्तारकादिवर्षासु साधूनां वितरति श्रावकजनस्तथा समाचार्यभावात् अथान्यत्र क्षेत्रान्तरे गम्यते यत्र न पानीयस्पन्दस्तत आह–अन्यत्र गम्यते काले ऋतुबद्धेन वर्षासु भूमेः शीतलायाः प्राणाःकुन्थ्वादयः संमूर्च्छन्ति ततो ग्रहणं वर्षासु पीठफलकानामेतेन आचीर्णे द्वे अपि वर्षास्विति व्याख्यातम् । सम्प्रति (२८८) काले य समाणए कालमित्यस्य व्याख्यानमाह—

**जं जंमि होइ काले कायव्वं तं समाणए तंमि । सज्झाया पह उवही उप्पायण भिक्खमादी य ॥ २९३ ॥**

यत् स्वाध्याय उपकरणस्य प्रत्युपेक्षा उपधिरुत्पादनं भिक्षादिकं च यस्मिन् काले कर्तव्यं तस्मिन् काले समानयति । एष तृतीयः

संग्रहपरिज्ञाभेदः। चतुर्थमाह—

अह गुरु जेणं पव्वावितो उ जस्स व अहीति पासंमि। अहवा अहागुरू खलु हवति रायणियतरागा उ ॥२९४॥

येन प्रव्राजितो यस्य वा पार्श्वेऽधीतः स यथा गुरुरथवा गुरवो नाम ये तस्य रत्नाधिकतरास्तेषां पूजनामाह—

तेसिं अप्भुट्ठाणं दंडग्गह तह य होइ आहारे। उवही वहणं विस्सामणं य संपूयणा एसा ॥ २९५ ॥

तेषां यथा गुरूणामेषा संपूजना आगच्छतामभ्युत्थानं दण्डस्य ग्रहणं तथा भवत्याहारे आहारस्य काले प्रायोग्यस्य सम्पादनमुपधि- वैहनं विश्रामणं च। उपसंहारमाह—

एसा खलु बत्तीसा एयं जाणाति जो ट्ठितो वेत्थ। ववहारे अलमत्थो अहवावि भवे इमेहिं तु ॥ २९६ ॥

एषा अनन्तरोदिता खलु स्थानानां द्वात्रिंशत् एतेषां यो जानाति यो वाऽत्र स्थितः स व्यवहारे अलमर्थः। अथवा एषु षड्त्रिंश- त्संख्येषु वक्ष्यमाणेषु स्थानेषु ज्ञाता स्थितो वा व्यवहारसमर्थो भवति। एतदेवान्वयव्यतिरेकत आह—

छत्तीसाए ट्ठाणेहिं जो होइ अपरिनिट्ठितो। नलमत्थो तारिसो होइ ववहारं ववहरित्तए ॥ २९७ ॥

छत्तीसाए ट्ठाणेहिं जो होति परिनिट्ठितो। अलमत्थो तारिसो होइ ववहारं ववहरित्तए ॥ २९८ ॥

छत्तीसाए ठाणेहिं जो होइ अपतिट्ठितो। नलमत्थो तारिसो होइ ववहारं ववहरित्तए ॥ २९९ ॥

छत्तीसाए ट्ठाणेहिं जो होइ सुपतिट्ठितो। अलमत्थो तारिसो होइ ववहारं ववहरित्तए ॥ ३०० ॥

श्लोकचतुष्टयमपि प्राग्वत्। सम्प्रत्येनामेव षट्त्रिंशतमाह—

**जा भणिया बत्तीसा तं च्छोढूण विणयपडिवत्तिं । चउभेयं तो होही छत्तीसा एस ट्ठाणाणं ॥ ३०१ ॥**

या पूर्वं स्थानानां द्वात्रिंशदुक्ता तस्यां चतुर्भेदां विनयप्रतिपत्तिं प्रक्षिप्यते, तत एषां स्थानानां षट्त्रिंशद्भवति ज्ञातव्या ।

**बत्तीसवण्णिय विय वोत्थं चउभेयविणयपडिवत्तिं । आयरियोऽतेवासिं जह विणयित्ता भवे निरिणो ॥३०२॥**

द्वात्रिंशत्प्राग् वर्णितैव ततः सम्प्रति वक्ष्यामि चतुर्भेदां विनयप्रतिपत्तिं । यथाचार्योऽन्तेवासिनं विनयित्वा विनयं ग्राहयित्वा निरृणो भवति तामेव चतुर्भेदां विनयप्रतिपत्तिमाह—

**आयारे सुय विणए विक्खेवण चेव होइ बोधव्वे । दोसस्स निग्घाए विणए चउहेस पडिवत्ती ॥ ३०३ ॥**

आचारे विनयः श्रुतविनयः विक्षेपणे चैव विनयो भवति बोद्धव्यः। विक्षेपणाविनयः दोषनिर्घातविनयश्च । एषा चतुर्धा विनये प्रतिपत्तिस्तत्राचारविनयमाह—

**आयारे विणओ खलु चउव्विहो होइ आणुपुव्वीए । संजमसामायारी तवे य गणविहरणा चेव ॥ ३०४ ॥**

**एगल्लविहारे या सामायारी य एस चउभेया । एयासिं तु विभागं वुच्छामि अहाणुपुव्वीए ॥ ३०५ ॥**

आचारे आचारविषयः खलु विनयश्चतुर्विधो भवति अनुपूर्व्या परिपाट्या तद्यथा—संयमसामाचारी, तपः सामाचारी, गणविहरण-सामाचारी, एकलविहारसामाचारी । एवमेषा चतुर्भेदा सामाचारी । एतासां सामाचारीणां विभागं यथानुपूर्व्या वक्ष्यामि । तत्र संयम-सामाचारीमाह—

संयममायरति सयं परं व गाहेति संयमं नियमा । सीयंते थिरकरणं उज्जयचरणं च उववूहे ॥ ३०६ ॥

स्वयं संयममाचरति परं च नियमात् संयमं ग्राहयति । तथा संयमविषये सीदति स्थिरीकरणं उद्यतचरणं तु उपबृंहयति । एषा संयमसामाचारी । सम्प्रति संयममेव कथयति—

सो सत्तरसो पुढवादियाण घट्ट परिताव उद्दवणं । परिहरियव्वं नियमा संजमगो एस बोधव्वो ॥ ३०७ ॥

स संयमः सप्तदशः सप्तदशप्रकारो विस्तरतः । संक्षेपतः पुनः पृथिव्यादीनां षण्णां कायानां घट्टनं परितापनमपद्रावणं च नियमा-त्परिहर्तव्यमित्येष संयमो बोद्धव्यः । संयमक इति प्राकृतत्वात्स्वार्थे कप्रत्ययः उक्ता संयमसामाचारी । तपःसामाचारीमाह—

पक्खियपोसहिएसुं कारयति तवं सयं करोति य । भिक्खायरियाए तहा निजुंजति परं सयं वावी ॥३०८॥

पाक्षिकेऽर्धमासपर्वणि पौषधिकेषु च अष्टम्यादिषु पर्वसु परं तपः कारयति स्वयमपि च करोति । तथा भिक्षाचर्यायां परं नियुंक्ते प्रयोजनमपेक्ष्य स्वयमपि भिक्षाचर्यां गच्छति—

सव्वंमि बारसविहे निउंजइ परं सयं च उज्जुत्तो । गणसामायारीए गणं विसीयं तु चोएति ॥ ३०९ ॥

सर्वस्मिन् द्वादशविधे तपसि यथायोगं परं नियुंक्ते, स्वयं च सर्वत्र यथाशक्ति उद्युक्तः । एषा तपःसामाचारी । गणसामाचार्यां गणं विषीदन्तं चोदयन्ति कथमित्याह—

पडिलेहण पप्फोडण बालगिलाणाइ वेयव्वए चेव । सीदंतं गाहेई सयं च उज्जुत्तो एएसु ॥ ३१० ॥

प्रत्युपेक्षणं चक्षुषा निरीक्षणं प्रस्फोटनमाखोटादिकमेतयोर्बालग्लानादिवैयावृत्त्ये च सीदन्तं प्रत्युपेक्षणादि ग्राहयति कारयति । स्वयं च एतेषु स्थानेषु सततमुद्युक्त उक्ता गणसामाचारी, साम्प्रतमेककविहारसामाचारीमाह—

**एगल्लविहारादी पडिमा पडिवज्जती सयण्णं व। पडिवज्जावे एवं अप्पाण परं च विणएती ॥ ३११ ॥**

एककविहारादय आदिशब्दात्प्रतिमागतविशेषानुष्ठानपरिग्रहः । एवं भूताः प्रतिमाः स्वयं प्रतिपद्यते अन्यं च प्रतिपादयति । एवं
१८ आचारविनयमात्मानं परं च विनयति, गत आचारविनयः । सम्प्रति श्रुतविनयमाह—

**सुत्तं अत्थं च तहा हिय निस्सेसं तहा पवाएइ । एसो चउव्विहो खलु सुयविणओ होइ नायव्वो ॥३१२॥**

सूत्रं प्रवाचयति तथा अर्थमपि हितं यत् यस्योचितं तत्तं प्रवाचयन्ति नेतरत् । तथा निःशेषं परिपूर्णमेष चतुर्विधः खलु श्रुतविनयो भवति ज्ञातव्यः । एतमेव व्याचष्टे—

२२ **सुत्तं गाहेइ उज्जुत्ते अत्थं च सुणावए पयत्तेण । जं जस्स होइ जोग्गं परिणामगमाइणं तु हियं॥ ३१३ ॥**
**निस्सेसमपरिसेसं जाव समत्तं तु ताव वाएइ । एसो सुयविणतो खलु वोच्छ विक्खेवणाविणयं ॥३१४॥**

उद्युक्तः सन् शिष्यं सूत्रं ग्राहयति । एष सूत्रग्राहणविनयः तथा प्रयत्नेन शिष्यमर्थं श्रावयति एषोऽर्थश्रावणविनयः परिणामकादीनां यत् यत् यस्य भवति योग्यं तत्तु तस्य हितं सूत्रतोऽर्थतश्च ददाति । एष हितप्रदानविनयः । तथा निःशेषं किमुक्तं भवति यावत्समाप्तं भवति
२६ तावद्वाचयति । एष निःशेषवाचनाविनयः । उपसंहारमाह—एष चतुर्विधः खलु श्रुतविनयोऽत ऊर्ध्वं विक्षेपणाविनयं वक्ष्ये । प्रतिज्ञातमेव करोति ।

उ. १०. भा. ३११-३१९ ॥ ४४ ॥

अदिट्ठं दिट्ठं खलु दिट्ठं साहम्मियत्तविणएणं । चुयधम्म धम्मे ट्ठावे तस्से व हियट्ठमब्भुट्ठे ॥ ३१५ ॥

अदृष्टं अदृष्टधर्माणं दृष्टमिव दृष्टपूर्वमिव धर्मं ग्राहयति । दृष्टं दृष्टपूर्वकं श्रावकं साधर्मिकत्वविनयेन विनयति प्रव्राजयतीत्यर्थः । तथा च्युतधर्मं धर्मात्प्रभ्रष्टं पुनर्धर्मे स्थापयति । तथा तस्यैव चारित्रधर्मस्य वृद्धये हितमभ्युत्तिष्ठति ४ । तत्र प्रथमभेदव्याख्यानार्थमाह—

विन्नाण भावंमी खिवि पेरणे विक्खित्तु परसमया । ससमयं तेणमभिच्छुभे अदिट्ठधम्मं तु दिट्ठं वा ॥३१६॥

विशब्दो नानाभावे क्षिपप्रेरणे परसमयाद्विनिक्षिप्य नानाप्रकारं प्रेर्यादृष्टधर्माणं दृष्टं वेति वाशब्द उपमायां । दृष्टधर्माणमिव स्वसमयान्तेन स्वसमयाभिमुखमभिक्षिपति । एनमेव चरमपदं व्याचष्टे—

धम्मसभावो सम्मं दंसणं तु जेण पुव्वि न उ लद्धं । सो होइ दिट्ठपुव्वो तं गाहेई पुव्वदिट्ठंमि व ॥३१७॥

धर्मस्वभावः सम्यग् दर्शनमित्येकार्थं तत्सम्यग् दर्शनं येन पूर्वं न लब्धं स भवत्यदृष्टपूर्वोऽदृष्टपूर्वधर्मस्तं पूर्वदृष्टमिवाविविक्तो विश्रान्ततया पूर्वोपलब्धमिव धर्मं ग्राहयति । अदृष्टं दृष्टमित्यस्यान्यथा व्याख्यानमाह ॥

जह भायरं च पियरं वा मिच्छदिट्ठंपि गाहिसम्मत्तं । दिट्ठपुव्वो सावग साहम्मि करोति पव्वावे ॥३१८॥

अदृष्टं अदृष्टं पूर्वदृष्टमिव धर्मं ग्राहयति, । किमुक्तं भवति ? यथा भ्रातरं पितरं वा सम्यक्त्वं ग्राहयति एवमदृष्टपूर्वं मिथ्यादृष्टमपि सम्यक्त्वं ग्राहयति—दिट्ठसाहम्मियत्ति विणएण इत्यस्य व्याख्यानमाह—दृष्टो नाम दृष्टपूर्वः । स च श्रावकस्तं साधर्मिकत्वविनयेन शिष्ययति साधर्मिकं करोति प्रव्राजयतीत्यर्थः । चुयधम्मंधम्मे ठावए इत्यस्य व्याख्यानमाह—

चुयधम्मो चरित्तधम्मातो दंसणातो वा । तं ट्ठावेइ तहिं चिय पुणो वि धम्मे जहोदिट्ठो ॥ ३१९ ॥

च्युतधर्मो नाम भ्रष्टधर्मः । धर्माद्भ्रष्टो भ्रष्टधर्मः । राजदन्तादिदर्शनात् धर्मशब्दस्य परिनिपातः । कस्मात् च्युत इत्याह—चारित्रधर्मात् दर्शनाद्वा तं च्युतधर्माणं तत्रैव चारित्रधर्मे सम्यग् दर्शने वा यथोचिते पुनः स्थापयति । एष तृतीयभेदश्चतुर्थभेदमाह—

तस्सत्ती तस्सेव उ चरित्तधम्मस्स वुड्ढिहेतुं तु । वारेयणेसणादी न य गिण्हे सयं हियट्ठाए ॥ ३२० ॥

तस्सेव हियट्ठमब्भुट्ठे (३१९) इति तस्येति तस्यैव चारित्रधर्मस्य वृद्धिहेतोरनेषणादि वारयति । हितार्थमभ्युत्तिष्ठतीति हितार्थाय न च स्वयमनेषणादि गृह्णाति हितार्थायेत्युपलक्षणं तेन हिताय सुखाय क्षेमाय निःश्रेयसाय आनुगामिकोऽभ्युत्तिष्ठतीति द्रष्टव्यं । ततो हितादिपदानां व्याख्यानमाह—

जं इह परलोगे वा हितं सुहं तं खमं मुणेयव्वं । निस्सेयस मोक्खाय उ अणुगच्छते जं तु ॥ ३२१ ॥

यत् यस्मात्कारणात् तदभ्युत्थानमिह लोके वा हितं तेन हितमित्युच्यते । सुखं इह परलोके सुखकरणात् । क्षेममैहिकपारत्रिकप्रयोजनक्षमत्वात् । निःश्रेयसं कल्याणकारिकत्वात् । अनुगामि यन्मोक्षाय अनुगच्छति सम्प्रति दोषनिर्घातविनयमभिधित्सुः प्रथमतो दोषनिर्घातशब्दार्थमाह—

दोसा कसायमादी बंधो अहवा वि अट्ठपयडीतो । निययं व निच्छियं वाघातो विणासो य एगट्ठा ॥३२२॥

दोषाः क्रोधादयः । अथवा बन्धोऽष्टप्रकारो यदि वा पूर्ववद्वा अष्टौ कर्मप्रकृतयो दोषास्तेषां नियतं निश्चितं व्याघातो विनाश इत्येकार्थं दोषनिर्घातः । साम्प्रतमस्य भेदानाह—

कुद्धस्स कोहविणयण दुट्ठस्स य दोसाविणयणं जं तु । कंखिय कंखाच्छेदो आयप्पणिहाण चउहेसो ॥३२३॥

उ. १०. भा. ३२०–३२८ ॥ ४५ ॥

क्रुद्धस्य क्रोधविनयनं, दुष्टस्य यत् दोषविनयनं कांक्षिते कांक्षाच्छेदः । तथा आत्मप्रणिधानमित्येष दोषनिर्घातश्चतुर्धा । तत्र प्रथमं भेदमाह—

सीयघरम्मिव दाहं वंजुलरुक्खो व जह उ उरगविसं। कुद्धस्स तहा कोहं पविणेती उवसमेतित्ति ॥ ३२४ ॥

४ शीतगृहमिव जलयन्त्रगृहमिव दाहं यथा वञ्जुलवृक्ष उरगाविषयं प्रविनयति यथा क्रुद्धस्य क्रोधं प्रविनयति किमुक्तं भवति ? उपशमयति—

दुट्ठो कसायविसए हि माणमाया सभाव दुट्ठो वा। तस्स पविणेइ दोसं नासयए धंसए वत्ति ॥ ३२५ ॥

कषायैर्विषयैर्यादि वा मानमायाभ्यामथवा स्वभावेन दुष्टस्तस्य दोषं प्रविनयति । अस्यैवार्थमाह—नाशयति ध्वंसते इति तृतीये भेद-

८ व्याख्यानार्थमाह—

कंखा उ भत्तपाणे परसमए अहव संखडीमादी। तस्स पवयणेइ कंखं संखडि अन्नापएसेणं ॥ ३२६ ॥

यस्य भक्तपाने कांक्षा परसमये वा । अथवा संखड्यादौ तस्य कांक्षां प्रविनयति स्फेटयति । संखड्यां संखडी कांक्षामन्यापदेशेना-पनयति चतुर्थमात्मप्रणिधानरूपं भेदमाह—

२ जो एएसु न वट्टइ कोहे दोसे तहेव कंखाए॥ सो होइ सुप्पणिहितो सोहणपरिहाणजुत्तो वा ॥ ३२७ ॥

एतेषु क्रोधे दोषे तथा कांक्षायां न वर्त्तते स भवति सुप्रणिहित आत्मप्रणिधानवान् । उपसंहारमाह—

छत्तीसेयाणि ट्ठाणाणि भणियाणणुपुव्वसो। जो कुसलो एएहिं ववहारी सो समक्खातो ॥ ३२८ ॥

व्य. सू. एतान्यनन्तरोदितानि स्थानानि षट्त्रिंशदानुपूर्व्या क्रमशः क्रमेण भणितानि यस्तेषु कुशलः स व्यवहारी आगमव्यवहारी समाख्यातः

३ पुनरपि यादृशा आगमव्यवहारिणस्तादृशानाह—

॥ ४५ ॥ **अट्ठहिं अट्ठारसहिं व दसहिं य ट्ठाणेहिं जे अपरोक्खा। आलोयण दोसेहिं छहियं ट्ठाणेहिं जे अपरोक्खा ॥३२९॥**

१८ **आलोयणठाणेहि छहियं ठाणेहिं जे अपरोक्खा। पंचहि नियंठेहि पंचहि य चरित्तमंतेहि ॥ ३३० ॥**

अष्टसु आचारवत्त्वप्रभृतिषु स्थानेषु अष्टादशसु व्रतषट्कप्रमुखेषु दशसु च प्रायश्चित्तस्थानेषु ये अपरोक्षाः प्रत्यक्षज्ञानिनः तथा दशसु आलोचनादोषेषु वा ये अपरोक्षविज्ञानाः प्रत्यक्षविज्ञानिनः। तथा दशस्वालोचनागुणेषु षट्सु च स्थानेषु अनन्तरभाविषु ये अपरोक्षाः साक्षात् ज्ञानिनस्तथा पञ्चसु पुलकादिषु निर्ग्रन्थेषु पञ्चसु चारित्रवत्सु सामायिकादिसंयमवत्सु ये प्रत्यक्षज्ञानिनस्ते आगमव्यवहारिणः।

२२ एतदेव गाथाद्वयं व्याचिख्यासुराह—

**अट्ठाया खमादी वयछक्कादी एवइ अट्ठरसा। दसविह पायच्छित्ते आलोयण दोसदसहिं वा ॥ ३३१ ॥**

अष्टौ स्थानानि आचारवत्त्वादीनि तानि च प्रागभिहितानि वालोचनार्हत्वानिबन्धनानि। तथा चोक्तं स्थानाङ्गे—अट्ठहिं ट्ठाणेहिं जाति संपन्ने भवति तो आलोयणारिहो तं जहा आयारवमित्यादि। अष्टादशस्थानादिव्रतषट्कादीनि भवन्ति पुनरष्टादशग्रहणमेतेषु अपराधा-

२६ स्तेषु प्रायश्चित्तविधिपरिज्ञानप्रतिपत्त्यर्थं दशस्थानानि दशविधिमालोयणपडिक्कमणेत्यादिरूपं प्रायश्चित्तं आलोचनादोषेषु दशसु अकम्पयिता इत्यादिरूपेषु तथा—

**छहिं काएहिं वएहि व गुणेहिं आलोयणाए दसहिं च। छट्ठाणावडिएहिं छहि चेव उ जे अपरोक्खा ॥३३२॥**

षट्स्विति कायेषु व्रतेषु वा तथा आलोचनायाः सम्बन्धिषु गुणेषु दशसु जातिसम्पन्नप्रभृतिषु । उक्तं च स्थानाङ्गे—दसहिं ठाणेहिं

उ. १०. भा. संपन्ने अरिहइ अन्नदोसमालोइत्तए । तं जहा— जातिसम्पन्ने कुलसम्पन्ने इत्यादि तथा षट्सु स्थानेष्विति षट्स्थानपतितेषु स्थानेषु ये अप-

३२९–३३६ रोक्षाः साक्षाद्वेदितारः कियन्ति षट्स्थानपतितानि स्थानानीत्यत आह—

॥ ४६ ॥ संखादीआ ठाणा छहिं ठाणेहिं पडियाण ठाणाण । जे संजया सरागा सेसा एक्कंमि ठाणंमि ॥ ३३३ ॥

षट्सु स्थानेष्वनन्तभागवृद्धा असंख्यातभागवृद्धा संख्यातभागवृद्धा संख्यातगुणवृद्धाऽसंख्यातगुणवृद्धानन्तगुणवृद्धेषु यानि पतितानि स्थानानि तेषां सम्बन्धिनो ये सरागाः संयतास्ते वेदितव्याः । षट्स्थानपतितेषु सरागसंयता वर्तन्ते इति भावः । तेषां च तानि षट्स्थानपतितानि स्थानानि संयमस्थानानि संख्यातीतानि असंख्येयलोकाकाशप्रदेशप्रमाणानि अत एव सरागसंयतानां केषाञ्चिद्वर्द्धते केषाञ्चित् हीयते केषाञ्चित् वर्धते हीयते च । ये तु शेषवीतरागसंयतास्ते एकस्मिन् स्थाने हि तथाहि न तेषां चारित्रं वर्धते नापि हानिमु-पगच्छति । कषायाणामभावात्, किन्त्ववस्थितमेकमेव परमप्रकर्षप्राप्तं संयमस्थानमिति एतेषां वस्तूनां ये साक्षाद्वेदितारस्ते आगमव्यवहारि-णस्तथा चाह—

एए आगम ववहारी पण्णंता रागदोस नीहूया । आणाए जिणिंदाणं जे ववहारं ववहरंति ॥ ३३४ ॥

रागद्वेषनिभृता रागद्वेषव्यापाररहिता आगमव्यवहारिणः प्रज्ञप्ता ये जिनेन्द्राणामाज्ञया व्यवहारं व्यवहरन्ति ।

एवं भणिते भणती ते वोच्छिन्ना उपसंपयं इहइं । तेसु य वोच्छिन्नेसु नत्थि विसुद्धी चरित्तस्स ॥३३५॥

देंतावि न दीसंती न विकरेता उपसंपयं केई । तित्थं च नाण दंसण निज्जवगा चेव वोच्छिन्ना ॥३३६॥

एवं प्रागुक्तेन प्रकारेण भणिते चोदको भणति व्यवच्छिन्ना खल्विह भरतक्षेत्रे साम्प्रतमागमव्यवहारिणस्तेषु च व्यवच्छिन्नेषु चारि-
त्रस्य विशुद्धिर्नास्ति सम्यक् परिज्ञानाभावतो यथावस्थितशुद्धिदायकाभावात् । अन्यच्च मासिकं पाक्षिकमित्यादि प्रायश्चित्तं ददतोऽपि
न केचित् दृश्यन्ते नापि केचित्तथा रूपं प्रायश्चित्तं कुर्वन्तस्ततो ददतां कुर्वतां वा भावे सम्प्रति तीर्थं ज्ञानदर्शनं ज्ञानदर्शनात्मकमनुवर्तते नानु-
चारित्रात्मकं यतश्चारित्रस्य पर्यन्तसमये निर्यापका एव यथावस्थितशोधिप्रदानत उत्तरोत्तरचारित्रनिर्वाहका एव व्यवच्छिन्नाः । सम्प्र-
त्येतदेव विभावयिषुः प्रथमतश्चारित्रस्यशुद्धिर्नास्तीति भावयति—

**चोद्दसपुधवराणं वोच्छेदो केवलीण वुच्छेए । केसिं वी आदेसो पायच्छित्तं पि वोच्छिन्नं ॥ ३३७ ॥**

केवलिनां व्यवच्छेदे सति तदनन्तरं स्तोकेन काले चतुर्दशपूर्वधराणामपि व्यवच्छेदो भवति । ततः शोधिदायकाभावान्नास्ति
शुद्धिश्चारित्रस्य, अन्यच्च केषांचिदयमादेशो यथा प्रायश्चित्तमपि व्यवच्छिन्नं । एतदेव भावयति—

**जं जत्तिएण सुज्झइ पावं तस्स तहा देंति पच्छित्तं । जिण चोद्दसपुव्वधरा तव्विवरीया जहिच्छाए ॥३३८॥**

जिनाः केवलिप्रभृतयश्चतुर्दशपूर्वधरा यत्पापं यस्य यावता प्रायश्चित्तेन शुद्ध्यति तस्य तावन्मात्रं प्रायश्चित्तं ददति ये तु तद्विपरीताः
कल्पव्यवहारनिशीथधरास्ते आगमव्यवहाराभावात् यदृच्छया प्रायश्चित्तं दद्युः । कदाचिन्न्युनं कदाचिदधिकं वा ततः परमार्थतः सम्प्रति
प्रायश्चित्तं व्यवच्छिन्नं तद्व्यवच्छेदान्निर्यापका अपि चारित्रस्य व्यवच्छिन्ना एतदेव स्पष्टयति—(भावयति)

**पारगमपारगं वा जाणंते जस्स जं च करणिज्जं । देइ तहा पच्चक्खी घुणक्खरसमो उ परोक्खी ॥ ३३९ ॥**

एष संवरीतुकामः पारगामी भविष्यति । एष नेति । पारगमपारगं वा प्रत्यक्षागमव्यवहारिणः सम्यग् जानते यश्च यस्य करणीयं

कर्त्तुं शक्यं तस्य तत् ज्ञात्वा तदेव तथा ददति तथा ते पारापारगादिशानं समस्थितास्ततस्तादृशमुपायमुपदिशन्ति येन स पारगामी भवति । यथा चाराधक उपजायते यस्तु परोक्षी परोक्षज्ञानी स घुणाक्षरसमः किमुक्तं भवति घुणाक्षरवत् । यदृच्छया ततः कदाचित् पापशुद्धि-र्नविश्यामिति । अन्यच्च तस्य परोक्षज्ञानिनः प्रायश्चित्तं ददतो महत्प्रायश्चित्तं पापं तथा चाह—

४ जायऊणाहिएदाणे वुत्ता मग्गविराहणा । न सुज्झेइ वि देंतो उ असुद्धो कं च सोहए ॥३४०॥

स हि परोक्षज्ञानी यदृच्छया व्यवहरन् कदाचिदूनमधिकं वा प्रायश्चित्तं दद्यात् ततो वा ऊनाधिके प्रायश्चित्ते दाने मार्गविराधना मोक्षपथसम्यग्दर्शनज्ञानचारित्रविराधना जिनैरुक्ता तथा स दाता न शुद्ध्यति । स्वयमशुद्धश्च कथमन्यं शोधयेदिति भावः अथ सोऽपि सूत्रबलेन प्रायश्चित्तं ददाति तत्कथं शोधयेदिति भावः तदप्यसम्यक् सूत्रार्थस्याप्यपरिज्ञानात् तथा चाह ॥

८ अत्थ पडुच्चसुत्तं अणागयं तं तु किंचिआमुसति । अत्थोवि कोइसुत्तं अणागयं चेव आमुसति ॥ ३४१ ॥

अर्थं प्रतीत्य किंचित्सूत्रमनागतमेव भवति, किंचित्पुनः सूत्रं स्वस्थानगतं वा अर्थमामृशति, विचित्रासूत्रस्य वृत्तिरिति वचनात् अर्थोऽपि कश्चित् सूत्रमनागतं वामृशति, एतच्च सम्यग् जानति चतुर्दशपूर्वधराः गतान्ये ततः संप्रति सूत्रार्थस्याप्यज्ञानात् न प्रायश्चितदान-शुद्धिस्तदभावाच्चानिर्यापकाणामप्यसिद्धिः संप्रति देंता वि न दीसंती (३३६) इत्यादि व्याख्यार्थमाह ॥

१२ देंतावि न दीसंती मास चउमासिया उ सोहीतो । कुणमाणे य विसोहिं न पासिमो संपइ केइं ॥ ३४२ ॥

मासिकीं चातुर्मासिकीं उपलक्षणमेतत् । पञ्चमासिक्यादिमपि वा शोधिं सम्प्रति केचित् ददतोऽपि न दृश्यन्ते, । नापि काश्चित् तां मासिकीं चातुर्मासिकीं वा कुर्वाणान् संप्रति पश्यामः ।

सोहीए य अभावे देंताण य करेंतगाण अभावे । वट्टइ संपइ काले तित्थं सम्मत्तनाणेहिं ॥३४३॥

उक्तप्रकारेण शोधेरभावे शोधिं ददतां कुर्वतां वा अभावे सम्प्रति काले तीर्थं वर्तते सम्यक्त्वज्ञानाभ्यां ।

एवं तु चोइयम्मी आयरितो भणइ न हु तुमे नायं । पच्छित्तं कहियंतू किं धरती किं व वोच्छिन्नं ॥३४४॥

इदमुक्तेन प्रकारेण चोदिते प्रश्ने कृते सति आचार्यो ब्रूते नहु नैव त्वया ज्ञातं यथा प्रायश्चित्तं प्रथमतः कोक्तं वा संप्रति प्रायश्चित्तस्य धरते विद्यते किं वा व्यवच्छिन्नं तत्र प्रथमतो यत्र प्रायश्चित्तमभिहितं तदभिधित्सुराह—

सव्वं पि य पच्छित्तं पच्चक्खाणस्स ततिय वत्थुंमि ॥ तत्तो वि य निज्जूढा पकप्पकप्पो य ववहारो ॥ ३४५ ॥

सर्वमपि प्रायश्चित्तं नवमस्य प्रत्याख्यानाभिधस्य पूर्वस्य तृतीये वस्तूनि तत एव च निर्व्यूढं दृष्टं प्रकल्पो निशीथाध्ययनं, कल्पो व्यवहारश्च । सम्प्रति किं धरती किं च वोच्छिन्नमित्यस्य व्याख्यानार्थमाह—

सपयपरूवण अणुसज्जणा य दसचोद्दस अट्ठ दुप्पसेह । अत्थि न दीसइ धणिएण विणा तित्थं च निज्जवए॥३४६॥

स्वपदं नाम निजं स्थानं तच्च प्रज्ञापकस्य प्रायश्चित्तं तथा हि चारित्रस्य प्रवर्तकः प्रज्ञापक उच्यते । प्रज्ञापनां चातीवाप्रायश्चित्तदान इति स्वपदं प्रज्ञापकस्य प्रायश्चित्तं तस्य प्ररूपणा कर्तव्या । तथा यावच्चतुर्दशपूर्विणः तावद्दशानामपि प्रायश्चित्तानामनुषंजना अष्टानामन्तिमविकल्पानां यावत् दुःप्रसभ आचार्यस्तावदनुषंजना यदप्युच्यते ददतः कुर्वाणा वा शोधिं न दृश्यन्ते केचनेति तदप्ययुक्तं यत आह—अत्थिति संति तेपि केचन न दृश्यंते उपायेन वहनात् । अत्र च विणोति दृष्टान्तो धनिकेन वक्तव्यः । तथा तीर्थं च चारित्रसहितमनुवर्तते यदप्ययुक्तं निर्यामको नास्तीति तदप्ययुक्तं यत आह—निज्जवएति निर्यापकोऽस्ति । एष द्वारगाथासंक्षेपार्थः । साम्प्रतमेनामेव विवरीषुः सपय-

परूवणेत्यस्य व्याख्यानमाह—

**तं सपयं पि वज्जइ जहा तहा मे निसामेहि ॥ ३४७ ॥**

**पण्णवगस्स उ सपयं पच्छित्तं चोयगस्स तमणिट्ठं ।**

प्रज्ञापकस्य स्वपदं प्रायश्चित्तमेतत् प्रागेव भावितं, । तच्चोदकस्यानिष्टं नास्तीति मा रूढं तथा युक्तं यतः साम्प्रतमपि तद्भ्रियते यथा-
वद्भ्रियते तथा कथ्यमानं निशामय—

**लीलविहूणं नवरं आगारो होइ सो चेव ॥ ३४८ ॥**

**पासाय संउ निम्मं लिहाविहं चित्तकारागहि जहा ।**

चक्रवर्तिनो वर्धकिरत्नेन प्रासादो निर्मापितस्तमन्ये राजानो दृष्ट्वा आत्मीयान् वर्धकीनादिशन्ति यथा चक्रवर्तिनः प्रासाद ईदृशान् अस्माकं प्रासादान् कुरुत ते च ब्रुवते देव स तादृशः प्रासादोऽस्माभिर्न दृष्टस्ततः काप्यालेख्य दर्शयन्तु येन तं दृष्ट्वा तदनुरूपान् प्रासादान्निर्मा-पयामस्ततस्तै राजभिश्चक्रवर्तिनगरे प्रविष्टैः स्वकीयैश्चित्रकरैः प्रासादस्य निर्मापणां फलकेषु लिखापितं निजनिजप्रधानवर्धकीनां समर्पितं तैरपि तदनुरूपाः प्रासादा निर्मापिताः परं यादृशी लीला चक्रवर्ती प्रासादस्य न तादृशी तेषां तथा चाह तेषां प्राकृतवर्धकिनिष्पादितानां प्रासादानां निर्मापणं, नवरं लीलाविहीनं जातमाकारः, पुनर्भवति स एव यादृशश्चक्रवर्तिप्रासादस्य एतदेव किंचिद्भावयति ।

**किं च न कारेइ तहा पासाए पगय जणोवि ॥ ३४९ ॥**

**भुंजइ चक्की भोए पासए सिप्पि रयणनिम्मविए ।**

चक्री चक्रवर्ती शिल्पिरत्ननिर्मापिते वर्धकिरत्ननिष्पादिते प्रासादे स्थितः सन् भोगान् भुङ्क्ते, तं च तथा दृष्ट्वा किं प्राकृतजनोऽपि प्राकृतराजलोकोऽपि तथा प्रासादान् न कारयति कारयत्येवेति भावः, परं न तादृशस्तेषां रूपविशेषः ततः किमित्याह—

**न च तेन होंति गेहा एमेव इमंपि पासामो ॥ ३५० ॥**

**जह रूवादिविसेसा परिहीणा होंति पागयजणस्स ।**

व्य. मू. यथा प्राकृतजनस्य प्राकृतवर्धकिलोकस्य तथारूपः सम्यक् परिज्ञानाभावतो रूपादिविशेषाः कर्तव्यतया परिहीनाः प्रासादानां
३ भवन्ति, न च ते न भवन्ति गेहाः प्रासादा एवमिदमपि प्रायश्चित्तं पश्यामः । एतदेव भावयति—

॥ ४८ ॥ **एमेवय पारोक्खी तयाणुरूवं तु सो वि ववहरति । किं पुण ववहरियव्वं पायच्छित्तं इमं दसहा ॥ ३५१ ॥**

१८ एवमेव वर्धिकी दृष्टान्तगतेन प्रकारेण तदनुरूपं प्रत्यक्षागमव्यवहारानुरूपं परोक्षी परोक्षज्ञानी व्यवहरति किं पुनर्व्यवहर्तव्यमुच्यते
इदं वक्ष्यमाणं दशधा दशप्रकारं प्रायश्चित्तं । तदेवाह—

**आलोयण पडिक्कमणे मीस विवेगे तहा वि उस्सग्गो । तवच्छेयमूल अणवट्ठिया य पारंचिए चेव ॥३५२॥**

आलोचनां प्रायश्चितं प्रतिक्रमणं मिथ्यादुष्कृतप्रदानलक्षणं मिश्रमालोचनाप्रतिक्रमणात्मकं विवेकः परिष्ठापनं व्युत्सर्गः तपश्चतु-
२२ र्थादिषण्मासपर्यन्तं । च्छेदप्रव्रज्यापर्यायस्य दिनैर्मासैर्वा परिहानिः । मूलं पुनर्व्रतारोपणं । अनवस्थाप्यं पाराञ्चितं च अमीषां च दशानां
स्वरूपं प्रपञ्चतः पीठिकायामुक्तं कल्पाध्ययने वा । ततस्तस्मादवधार्यं तदेवं सपयपरूवणेति गतमधुना अणुसज्जणा य दस चोद्दस अट्ठदुप्पसहे
(३४६) इत्यस्य व्याख्यानमाह—

**दस जा अणुसज्जंती चोद्दसपुव्वीए पढमसंघयणं । तेण परेण दुविहं जातित्थं ताव बोधव्वं ॥ ३५३ ॥**

यावत्प्रथमं संहननं चतुर्दशपूर्वी च तावद्दशप्रायश्चित्तानि अनुषजन्तिस्म । एतौ च प्रथमसंहननचतुर्दशपूर्विणौ समकं व्यवच्छिन्नौ
२६ तयोश्च व्यवच्छिन्नयोरनवस्थाप्यं पाराञ्चितं च व्यवच्छिन्नं । ततः परेणानवस्थाप्यपाराञ्चितव्यवच्छेदादर्वाक् अष्टविधप्रायश्चित्तं तावदनु-
षजतु अनुवर्तमानं बोद्धव्यम् । यावत्तीर्थं तीर्थव्यवच्छेदकाले च दुःप्रसभो नाम सूरिर्भविष्यति तस्मिन् कालगते तीर्थं चारित्रं च व्यवच्छे-

ष. १०. भा. ३५१–३५८ ॥ ४९ ॥

दयति। यदप्युक्तं दंता वि न (३४२) दीसन्ति इत्यादि तत्राह—

दोसु उ वोच्छिन्नेसु अट्ठविहं देंतया करेंते य। न वि केई दीसंति वयमाणे भारिया चउरो ॥ ३५४ ॥

द्वयोरनवस्थाप्यपाराञ्चितयोरथवा प्रथमं संहननचतुर्दशपूर्विणो व्यवच्छिन्नयोरष्टविधं प्रायश्चित्तं ददतः कुर्वतो वा केचित् न दृश्यन्ते इति वदति परस्मिन् प्रायश्चित्तं चत्वारो भारिता गुरुमासाः।

दोसु वि वोच्छिन्नेसु अट्ठविहं देंतया करेंता य। पच्चक्खं दीसंते जहा तहा मे निसामेहि॥ ३५५ ॥

द्वयोरन्तिमयोः प्रायश्चित्तयोः प्रथमसंहननचतुर्दशपूर्विणोर्वा व्यवच्छिन्नयोरष्टविधं प्रायश्चित्तं ददतः कुर्वतश्च प्रत्यक्षं दृश्यन्ते यथा तथा मम कथयतो निशामय—

पंचेव य निग्गंथा खलु पुलाग बकुसा कुसील निग्गंथा। तह य सिणाया तेसिं पच्छित्त जहक्कमं वोच्छं॥३५६॥

पंचैव खलु निर्ग्रन्था भवन्ति तद्यथा–पुलाको बकुशः कुशीलः निर्ग्रन्थः स्नातकश्च। एतेषां च स्वरूपं व्याख्या प्रज्ञप्तेरवसेयं। एतेषां प्रायश्चित्तं यथाक्रमं वक्ष्ये प्रतिज्ञां पूरयति—

आलोयण पडिक्कमणे मीसाविवेगे तहेव विउस्सग्गे। एए छ पछित्ता पुलागनियंठस्स बोधव्वा ॥ ३५७ ॥

आलोचना १ प्रतिक्रमणं २ मिश्रं ३ विवेकः ४ तपः ५ व्युत्सर्ग ६ एतानि षट् प्रायश्चित्तानि पुलाकनिर्ग्रन्थस्य बोधव्यानि।

बउसपडिसेवगाणं पायच्छिन्ना हवंति सव्वेवि। थेराण भवे कप्पे जिणकप्पे अट्ठहा होंति ॥३५८॥

बकुशप्रतिसेवकयोर्बकुशस्य प्रतिसेवनाकुशीलस्य च सर्वाण्यपि दशापि प्रायश्चित्तानि भवन्ति। तौ च बकुशप्रतिसेवनाकुशीलौ स्थविराणां

अनवस्थाप्यपाराञ्चितयोरभावात् ।
व्य. सू. कल्पभवतो जिनकल्प उपलक्षणमेतत् । यथालन्दकल्पे च तयोः मायश्चित्तमष्टधा भवति अनवस्थाप्यपाराञ्चितयोरभावात् ।

३ **आलोयणा विवेगो य नियंठुस्स दुवे भवे । विवेगो य सिणायस्स एमेया पडिवत्तितो ॥ ३५९ ॥**

॥ ४९ ॥ आलोचनामायश्चित्तं विवेकप्रायश्चित्तमित्येते द्वे मायश्चित्ते निर्ग्रन्थस्य भवतः । स्नातकस्य केवल एको विवेकः एवमेताः पुला-

१८ कादिषु प्रतिपत्तयः ।

**पंचेव संजया खलु नायसुएण कहिया जिणवरेणं । तेसिं पायच्छित्तं अहक्कमं कित्तइसामि ॥ ३६० ॥**

ज्ञातसुतेन जिनवरेण वर्धमानस्वामिना पञ्चैव खलु संयताः कथितास्तेषां यथाक्रमं मायश्चित्तं कीर्तयिष्यामि । तदेव कीर्तयति—

**सामाइयसंजयाणं पायछित्ता च्छेदमूलरहियट्ठा । थेराण जिणाणं पुण तवमंतं छव्विहं होइ ॥ ३६१ ॥**

२२ सामायिकसंयतानां स्थविराणां स्थविरकल्पिकानां च्छेदमूलरहितानि शेषाण्यष्टौ मायश्चित्तानि भवन्ति, जिनानां जिनकल्पिकानां पुनः सामायिकसंयतानां तपः पर्यन्तं षट्विधं मायश्चित्तं भवति ॥

**छेदोवट्ठावणिए पायच्छित्ता हवंति सव्वेवि । थेराण जिणाण पुण मूलत अट्ठहा होइ ॥ ३६२ ॥**

छेदोपस्थापनीये संयमे वर्त्तमानानां स्थविराणां सर्वाण्यपि मायश्चित्तानि भवंति, जिनकल्पिकानां पुनर्मूलपर्यन्तमष्टधा भवति,

२६ **परिहारविसुद्धीए मूलं ता अट्ठाति पच्छिता । थेराणं जिणाणं पुण छव्विहं छेयादिवज्जं वा ॥ ३६३ ॥**

परिहारविशुद्धिके संयमे वर्तमानानां स्थविराणां मूलान्तान्यष्टौ मायश्चित्तानि भवन्ति, जिनानां पुनः च्छेदादिवर्ज्यं षड्विधं ।

आलोयणा विवेगो य तइयं तु न विज्जती । सुहुमे य संपराए अहक्खाए तहेव य ॥ ३६४ ॥

सूक्ष्मसंपराये यथाख्याते च संयमे वर्तमानानामालोचना विवेक इत्येवं रूपे द्वे प्रायश्चित्ते भवतस्तृतीयं तु न विद्यते, ततः प्रस्तुते किमायातमिति चेदत आह—

बउसपडिसेवया खलु इत्तरिच्छेया य संजया दोण्णि । जातित्थणुसंजत्ती अत्थि हु तेणं तु पच्छित्तं ॥३६५॥

निर्ग्रन्थचिन्तायां बकुशः प्रतिसेवकः प्रतिसेवनाकुशील इत्येतौ द्वौ निर्ग्रन्थौ संयताचिन्तायां इत्वरीत्वरसामायिकवान् च्छेदं च्छेदोपस्थाप्यश्चेति द्वौ संयतौ यावत्तीर्थं तावदनुषजतोऽनुवर्त्तेते तेन ज्ञायते । अस्ति सम्प्रत्यपि प्रायश्चित्तं, गतमस्तीति द्वारमधुना न दीसइ (२४६) धणिएण विणेति व्याख्यानार्थमाह—

जइ अत्थि न दीसंति केइ करेंति तत्थ वणिज्ज दिट्ठंतो । संतमसंते विहिणा मोयंता दोवि मुच्चंति ॥३६६॥

चोदकः प्राह—यद्यस्ति प्रायश्चित्तं ततः कस्मात्केचित् कुर्वन्तो न दृश्यन्ते, । सूरिराह—उपायेन कुर्वन्ति ततो न दृश्यन्ते तथा चात्र धनिकेन दृष्टान्तो धारके सत्यसति च विभवे तौ च धारकौ द्वावपि सद्विभवासद्विभवौ विधिना मोच्यमानौ ऋणान्मुच्येते । एतदेव भावयति—

संभवविभवो उ जाहे मग्गितो ताहे देति तं सव्वं । जो पुण असंतविभवो तत्थ विसेसो इमो होइ ॥३६७॥

धनिकस्य द्वौ धारकौ संभवतस्तद्यथा—सद्विभवोऽसद्विभवश्च । तत्र यः सद्विभवः सदैव याच्यते तदैव तत्सर्वं दातव्यं ददाति । यः पुनरसद्विभवस्तत्रायं वक्ष्यमाणो विशेषो भवति । तमेवाह—

निरवेक्खो तिण्णि चयती अप्पाण धणागमं च धारणगं । सावेक्खो पुण रक्खइ अप्पाणधणं च धारणगं ॥३६८॥

व्य. सू. धनिको द्विधा—सापेक्षो निरपेक्षश्च । तत्र सापेक्षो नाम यो धारकादसद्विभवात् धनमुपायेन गृह्णाति, निरपेक्षः कर्कशग्रहेण धनस्य
३ गृहीता तत्र निरपेक्षस्त्रीणि त्यजति, तद्यथा—आत्मानं धनागमं धारकं च । सापेक्षः पुनस्त्रीण्यपि रक्षयति । आत्मानं धनं धारणकं च

॥ ५० ॥ कथमित्याह—

**जो उ असंते विभवे पाए घेत्तूण पडइ पाडेणं । सो अप्पाण धणंपि य धारणगं चेव नासेति ॥ ३६९ ॥**

१८ यो धनिको निरपेक्षोऽसद्विभवे असद्विभवस्य पादौ गृहीत्वा आत्मीयपादेन सह बध्वा पातेन पतति स आत्मानं धारणकं च नाशयति ततः स क्लिश्यमानो धनिकं जीविताद्व्यपरोप्य नश्येत् । यदि वात्मानं विनाशयेत् यद्वा उभयमपि ततस्त्रयस्यापि विनाशः ।

**जो पुण सहती कालं सो अत्थं लभते रक्खई तं च । न किलस्सइ सयंपी एव उवातो उ सव्वत्थ ॥ ३७० ॥**

२२ यः पुनर्धनिको धारणकमसद्विभवं ज्ञात्वा उपायेनास्माद्धनमुपादेयमिति विचिन्त्य कालं सहते वक्ष्यमाणप्रकारेण कालं विलंबयति सोऽर्थं लभते तं च धारणकं रक्षति, न च स्वयमपि विलश्यति । एवमुपायः पुरुषेण सर्वत्र कर्तव्यः । अथ कथं कालं सहते इत्याह—

**जो उ धारेज्ज वड्ढंतं असतं विभवा सयं । कुणमाणो उ कम्मं तु निव्विसे करिसावणं ॥ ३७१ ॥**

**अणमप्पेण कालेणं सो तगं तु विसोयए । दिट्ठंते सो भणितो अत्थोवणउ इमो तस्स ॥ ३७२ ॥**

२६ यो धारणको रूपकशतं दातव्यं धनिकानुमत्या प्रतिमासं वा काकिनी वृद्ध्या वर्धमानं धारयति । स्वयं वासद्विभवो धनिकस्य गृहे कर्म कुर्वन् कार्षापणं निवेशयति धनिकस्य प्रवेशयति सोऽल्पेन कालेन तत् ऋणं मोचयति । एष दृष्टान्तोऽयमर्थोपनयस्तस्य ।

**संतविभवो वि तुल्ला धिसंघयाण हि जे उ संपन्ना । ते आवण्णा सव्वं वहंति निरणुग्गहं धीरा ॥ ३७३ ॥**

उ. १०. भा. ३६९-३७७ ॥ ५१ ॥

ये धृतिसंहननाभ्यां सम्पन्ना युक्ताः सद्भिभवैस्तुल्यास्ते धीराः सर्वमापन्नप्रायश्चित्तं निरनुग्रहमनुग्रहरहितं वहन्ति ।

**संघयण धिती हीणा असंतविभवेहिं होंति तुल्ला उ। निरवेक्खो जइ तेसिं देति ततो ते विणस्संति ॥३७४॥**

ये पुनर्धृतिसंहननाभ्यां हीनास्ते असद्भिभवैस्तुल्यास्तेषां यदि निरपेक्षः सन् यन्निरवशेषं प्रायश्चित्तं ददाति ततस्ते विनश्यन्ति । तथाहि तत्प्रायश्चित्तं निरवशेषं वोढुमशक्नुवन्तस्तपसा कृशीकृता जीवितादपगच्छेयुः ।

**ते तेण परिच्चत्ता लिंगविवेगं तु काउ वच्चंति। तित्थुच्छेदो अप्पा एगाणि य तेण चत्तो य ॥ ३७५ ॥**

यदि वा ते प्रायश्चित्तभग्ना लिङ्गविवेकं कृत्वा व्रजन्ति ततस्तेन निरवशेषप्रायश्चित्तदात्रा परित्यक्ता यथैवमेके एवमन्येऽप्येवमपरेपि ततः सर्वसाध्वपगमतस्तीर्थस्योच्छेदस्तथा तेनाचार्येण निरवशेषं प्रायश्चित्तं साधूनां ददता प्रायश्चित्तभग्नभयात् साधूनामपगमत आत्मा एकाकीकृतः एकाकितया च त्यक्तश्च शब्दात् गच्छोऽपि त्यक्तस्तथाहि साधूनामपगमे बालवृद्धग्लानादीनामुपग्रहेन कोऽपि वर्तते । ततस्तेऽपि तेन तत्त्वतः परित्यक्तास्तथा अवधाविताः सन्तो ये दीर्घकालं संसारमादि (वि)हिण्डिष्यंते सोऽपि तन्निमित्त इति तस्य महत्पापं तदेव निरपेक्षस्य दोप उक्तः । सम्प्रति सापेक्षस्य गुणमाह—

**सावेक्खो पवयणम्मी अणवत्थपसंगवारणाकुसलो। चारित्तरक्खणत्थं आवोच्छित्ती पउवि सज्झे ॥ ३७६ ॥**

यः पुनराचार्यः प्रवचने सापेक्षोऽनवस्थाप्रसङ्गवारणाकुशलः स चारित्रस्य रक्षार्थं भवति तीर्थस्य चाव्यवच्छेदस्तथोपायेन साधयतीत्यर्थः उपायमेवाह—

**कल्लाणगमावन्ने अतरंते जहक्कमेण काउं जो। दसकारेंति चउत्थे तद्दिगुणायंबिलतते वा ॥ ३७७॥**

**एक्कासणए पुरिमड्ढा निव्विगती चेव विगुणविगुणा उ। पत्तेयासहु वा करेइ वा सन्निगासं तु ॥ ३७८ ॥**

पञ्च अभक्तार्थाः पञ्च आचाम्लानि पञ्च एकाशनकानि पञ्चपूर्वार्धानि पञ्च निर्विकृतिकानि एतत् पञ्चकल्याणं तत् ज्येष्ठापन्ना यथाक्रमेण च कर्तुमशक्नुवन्तस्तान् दश चतुर्थान् कारयन्ति तथाप्यशक्नुवतस्तद्द्विगुणाचाम्लवान् तपः कारयति विंशतिमायामाम्लानि कारयन्तीत्यर्थः। एवमेकाशने पूर्वार्धे निर्विकृतीद्विगुणाः कारयन्ति। किमुक्तं भवति ? विंशत्यायामाम्ले कारणाशक्तौ अशीति पूर्वार्द्धिकानि कारयन्ति। तत्राप्यशक्तौ षष्ठिशतं निर्विकृतिकानां कारयन्ति। एतत् पञ्चसु कल्याणेष्वेकैकं कल्याणं प्रत्येकमव्यवच्छित्त्य कर्तुमर्हस्यासमर्थस्य दातुमुक्तमथवायमन्यो विकल्पः करिति व सन्निगासं तु। सन्निकाशं सन्निभं वा कारयति। इयमत्र भावना—यत्तत्पञ्चकल्याणमापन्नस्तन्मध्यादाद्यं द्वितीयं तृतीयं वा कल्याणकमेकतरं यथाक्रमेण वहति शेषमायाम्लादिभिः प्रदर्शयति। पुनरन्यथानुग्रहप्रकारमाह—

**चउतियदुगकल्लाणं एगकल्लाणगं च कारेती। जं जो उत्तरति तं तस्स देंति असहुस्स भासंति ॥ ३७९ ॥**

यदि वा पञ्चकल्याणकमुक्तस्वरूपं यथाक्रमेण व्यवच्छित्त्या कर्तुमशक्नुवन्तं चतुःकल्याणकं कारयति। तदप्यशक्नुवन्तं त्रिकल्याणकं यथाप्यसमर्थतया द्विकल्याणकं कारयति, किं बहुना यत् यः कर्तुं शक्नोति, तस्य तद्ददति नाधिकमावाधासंभवात् अथैकमपि कल्याणं कर्तुं न शक्नोति तदा तस्यासहस्य सर्वं भाषयित्वा एकभक्तार्थं दीयते। अथवा एकमायामाम्लं यदि वा एकमेकाशनकमथवैकं पूर्वार्धमथवा निर्विकृतिकं अथ न किंचिद्ददति तदा अनवस्थाप्रसङ्गः। एतदेव स्पष्टयति—

**एवं सदयं दिज्जति जेणं सो संजमे थिरो होति। न य सव्वहा न दिज्जति अणवत्थपसंगदोसातो ॥ ३८० ॥**

एवममुना प्रकारेण सदयं सानुकम्पं दीयते प्रायश्चित्तं येन स संयमे स्थिरो भवति न च सर्वथा न दीयते, अनवस्थाप्रसङ्गदोषात्।

अत्र दृष्टान्तो बालकतिलस्तेनकद्वयेन ॥ एको कप्पट्टतो अंगोहलिं काऊण रमंतो तिल्लरासिम्मि निम्मज्जितो बालतिलकाऊण न केइ वारितो

उ. १०. भा. ३७८–३८४ ॥ ५२ ॥ दारगं तिला शरीरे लग्गा ततो सो सतिलो घरमागतो जणणीए तिला दिट्टा पक्खोडिया गहिया य ततो तिललोभेण पुणो अंगोहलेऊण पेसेइ । ततो कालेण तिले वि तेणावेइ । ततो सो पसंगदोसेण तेणो जातो रायपुरिसेहिं गहितो मारितो माउ दोसेण बालो वि एस तेणो जातो ति माऊथणच्छेया इमवराहं पाविया वितितो कप्पट्टगो तहेव अंगोहलिं काऊण रमंतो तिलरासिंमि निमज्जितो सतिलो घरमागतो माऊए वारितो मा पुणो एवं कुज्जा । तिला य पक्खोडेऊण तिलरासिंमि पक्खित्ता सो कालंतरेण जीवियभोगाण अ भोगी जातो नेव जणणी थणच्छेयादियमवराहं पत्ता ॥ एतदेवाह—

**दिट्ठंतो तेण एणं पसंगदोसेण जह वहं पत्तो । पावंति अणेगाइं मरणाइं अवारियपसंगा ॥ ३८१ ॥**

अनवस्थाप्रसङ्गदोषे दृष्टान्तं स्तेनकेन बालकेन तिलापहारिणा यथा प्रसङ्गदोषतो वधं प्राप्तस्तथा साधवोऽप्यनिवारितप्रसङ्गा अनन्तानि मरणानि प्राप्नुवन्ति ।

**निब्भत्थणाए बितियाए वारितो जीवियाणं आभागी । नेव य थणच्छेयादी पत्ता जणणी य अवराहं ॥३८२॥**

**इय अणिवारिय दोसा संसारे दुखसागरमुवेंती । विणियत्तपसंगा खलु करेंति संसारवोच्छेयं ॥ ३८३ ॥**

द्वितीयया बालं तिलान् शरीरे लग्नानादाय समागतं निर्भर्त्सनया वारितस्ततः स जीवितानां जीवितसुखानामाभागी जातो नैव च जननी स्तनच्छेदादिकमपराधं प्राप्ता इति एवमसुना दृष्टांतद्वयगतेन प्रकारेणानिवारिता दोषाः संसारे दुःखसागरमुपयान्ति ॥

**एवं धरती सोही देंती करेंता वि एवं दीसंति । जंपि य दंसणनाणे हि जा तित्थंति तं सुणसु ॥३८४॥**

व्य. सू. एवममुना प्रकारेण धरते विद्यते शोधिः तदा ददतः कुर्वन्तश्च शोधिमेवमुक्तप्रकारेण दृश्यन्ते । यदपि चोक्तं दर्शनज्ञानाभ्यां तीर्थं
३ यातीति तदप्ययुक्तं यथा भवति तथा शृणुत युक्ततामेव कथयति—

**॥ ५२ ॥ एवं तु भणंतेणं सेणियमादी वित्थाविया समणा । समणस्स य जुत्तस्स य नत्थी नरएसु उववातो ॥३८५॥**

यदि नाम ज्ञानदर्शनाभ्यां तीर्थं तर्हि प्रवचनं तच्च श्रमणेषु व्यवस्थितं तत एवं भणता त्वया श्रेणिकादयोऽपि श्रमणा व्यवस्थापिता
१८ स्तेषामपि ज्ञानदर्शनभावान्न चैतदुपपन्नं यत् श्रमणस्य श्रमणगुणैर्युक्तस्य नास्ति नरकेषूपपातः । अथ च श्रेणिकादीनां संभवात् ।

**जंपि जहु एक्कवीसं वाससहस्साणि होहिति तित्थं । ते मिच्छासिद्धी वि सव्वगतीसुं व होज्जाहि ॥ ३८६ ॥**

यदपि सूत्रे च भणितं एकविंशतिवर्षसहस्राणि तीर्थमनुवर्तमानं भविष्यति इति तदपि तन्मतेन मिथ्या प्राप्नोति । षट्स्वपि समासु ज्ञानदर्शनभावतश्चिरकालमपि तीर्थानुषंजनप्रसक्तेः यथा सर्वास्वपि च गतिषु सिद्धिरप्येवमनिवारितप्रसरा भवेत् सम्यग्दर्शनज्ञानयुक्तानां
२२ चारित्ररहितानां सर्वगतिष्वपि जीवानां भावात्, । ये चानुत्तरोपपातिनो देवास्ते नियमस्तद्भवसिद्धिगामिनो भवेयुः तेषामनुत्तरज्ञानदर्शनो-पेतत्वात् । न चैतदिष्टं तस्मादिदमागतं यावच्चारित्रं ( ताव त्तीथम् ? )

**पायच्छित्ते असंतंभि चरित्तंपि ण वट्टती। चरितंमिअसंतंमि तित्थे नो सचरित्तया ॥ ३८७ ॥**

असति अविद्यमाने प्रायश्चिते चारित्रं न तिष्ठति, प्रायश्चित्तमन्तरेण चारित्रस्य शुद्धेरभावात् चारित्रे चासति तीर्थस्य न चारित्रता ।

**अचरित्तयाए तित्थस्स निव्वाणंमि न गच्छइ । निव्वाणंमि असंतंसि सव्वा दिक्खा निरत्थया ॥ ३८८ ॥**

२६ तीर्थस्याचारित्रतायां साधुर्निर्वाणं न गच्छति, असति च निर्वाणे सर्वा दीक्षा निरर्थका—

उ. १०, भा. ३८५-३९२ ॥ ५३ ॥

न विणा तित्थं नियंठेहिं नियंठा वा अतित्थगा। छक्कायसंजमो जाव ताव अणुसज्जणा दोण्हं॥ ३८९ ॥

निग्रन्थैर्विना तीर्थं न भवति, तेनापि निग्रन्था अतीर्थिकास्तीर्थराहिता भवन्ति परम्परव्यवच्छिन्नतया एकस्यापरस्य भावात् निर्ग्रन्थग्रहणं संयतानामुपलक्षणं तत एतदपि द्रष्टव्यं । संयतैर्विना न तीर्थं नापि तीर्थमन्तरेण संयता निर्ग्रन्थाः संयताश्च प्रथमसंहननचतुर्दशपूर्वधरव्यवच्छेदेऽपि विद्यन्ते । यतो यावत् षट्कायसंयमस्तावत् द्वयानामनुषंजनानुवर्तमाना समास्ति षट्कायसंयमश्च प्रत्यक्षतोऽद्यापि लभ्यते ततः सन्ति निर्ग्रन्थाः सन्ति संयता इति प्रतिपत्तव्यं, तत्सत्वप्रतिपत्तौ च तीर्थं सचारित्रमित्यपि प्रत्येकं भव्यं चारित्रे सति प्रायश्चित्तमिति, अन्यच्च,

सव्वण्णुहिं परूविय छक्कायमहव्वया य समितीतो। सच्चेव य पन्नवणा संपति काले वि साहूणं ॥३९०॥

ततो वच्चति तित्थं दंसणनाणेहिं न य सिद्धं तु। निज्जवगा वोच्छिन्ना जंपि य भणियं तु तं न तहा ॥३९१॥

पूर्वसाधूनां सर्वज्ञैश्चारित्रस्य प्रतिपत्तये रक्षणाय च षट्कायानां महाव्रतानि समितयश्च प्ररूपिताः । सैव च प्रज्ञापना सम्यगाराध्यतया सम्प्रति कालेऽपि साधूनामस्ति; तत उपसम्पन्नं सम्प्रत्यपि चारित्रमस्ति । एवं च सिद्धं न तीर्थं ज्ञानदर्शनाभ्यां व्रजति, किन्तु ज्ञानदर्शनचारित्रैरिति; यदप्युक्तं निर्यापका व्यवच्छिन्ना इति तदपि न तथा कथमिति चेदतआह,

सुण जह णिज्जवगत्थीहिं दीसंति जहा य णिज्जविज्जंता। इह दुविहा णिज्जवगा अत्ताण परे य बोधव्वा ॥३९२॥

श्रृणु यथा निर्यापकैर्निर्याप्यमाना दृश्यंते निर्यापकैर्निर्याप्यमाना इह द्विविधा निर्यापकास्तद्यथा—आत्मनः परस्य च उभयानप्याह—

तस्य अगीतार्थस्य पार्श्वे न भक्तप्रत्याख्यातव्यं तथा असंविग्गोत्ति । असंविग्नस्यापि समीपे न प्रत्याख्यातव्यं । तथा एगत्ति एको निर्यापको
व्य. सू. तस्य अगीतार्थस्य पार्श्वे न भक्तप्रत्याख्यातव्यं तथा असंविग्गोत्ति । तथा अन्यो यदि भक्तं प्रत्याख्यातुमुद्यतस्तर्हि यदि
३ न कर्तव्यः । किन्तु बहवः, परतो वा भक्तं प्रत्याख्यातुकामस्य विषये आभोगनं कर्तव्यम् । तथा आचार्येण गच्छस्यानापृच्छया स भक्तप्रत्याख्यानं न प्रतिपादयितव्यः । तथा तेन
॥ ५४ ॥ निर्यापकाः पूर्यन्ते तदा स प्रतीष्यते, शेषकालं नेति, तथा आचार्येण गच्छस्यानापृच्छया स भक्तप्रत्याख्यानं न प्रतिपादयितव्यः । तथा भक्तपरिज्ञां प्रतिपत्तुकामेन नियत आलोचना दातव्या । तथा
१८ भक्तं प्रत्याख्यातुकामेन गच्छस्य गच्छेनापि तस्य परीक्षा कर्तव्या । तथा भक्तपरिज्ञां प्रतिपत्तुकामेन नियत आलोचना दातव्या । तथा चरमकाले तस्य भक्तप्रत्या-
प्रशस्ते स्थाने प्रशस्तायां वसतौ भक्तपरिज्ञा प्रतिपत्तव्याः । तथा निर्यापका गुणसम्पन्नाः समर्पणीयाः । तथा चरमकाले तस्य भक्तप्रत्या-
ख्यातुकामस्य द्रव्यदर्शनं प्रधानसमस्ताहारद्रव्योपदर्शनं विधेयं । हाणित्ति भक्तं प्रत्याख्यातुकामस्य प्रतिदिवसमाहारस्यहानिर्विधेया तथा
अपरिश्रान्ताः सर्वकर्मणि प्रतिचारका वर्तन्ते । निज्जरत्ति निर्जरा वक्तव्या तथा संस्तारको यादृशो भवति कृतभक्तप्रत्याख्यानस्यहाकर्तव्य-
स्तादृशो वक्ष्यते । तथा तस्य कृतभक्तप्रत्याख्यानस्योद्वर्तनादीनि यथा समाधिकरणीयानि तथा प्रथमद्वितीयपरीषहाभ्यां त्याजितः
२२ सारयित्वा स्वं स्वरूपं (मा)नर्थत्वादिलक्षणं कवचं कवचभूतमशनं प्रयोक्तव्यम् । तथा जीवतो मृतस्य च तस्य चिन्हकरणं विधेयं, एतं
निर्व्याघातेन भक्तपरिज्ञाव्याघाताभावेन प्रतिपत्तव्यं । अथान्तर्ग्रामादिबहिरुद्यानादिषु भक्तपरिज्ञाया व्याघातः संजातस्ततोगीतार्थानामुपायो
भवति कर्तव्यः । एष द्वारगाथा । साम्प्रतमेतदेव विवरीषुः प्रथमतो गणनिस्सरणद्वारमाह—

२६ **गणनिसरणंमि उ विही जो कप्पे वण्णितो समासेणं। सो चेव निरवसेसो भत्तपरिण्णाए दसमंमि ॥४०३॥**

गणनिस्सरणे यो विधिः कल्पे कल्पाध्ययने सप्तविधः सप्तप्रकारो वर्णितः स एव व्यवहारे दशमे उद्देशके भक्तपरिज्ञायां भक्तज्ञाना-
धिकारो निरवशेषो वक्तव्यः । गणनिस्सरणं द्वारं गतमिदानीं परगणद्वारं परगणे गत्वा भक्तप्रत्याख्यानं कर्तव्यम् ।

**किं कारणं चंकमणं थेराण इहं तवो किलंताणं । अब्भुज्जयंमि मरणे कालुणिया ज्झाणवाघातो ॥४०४॥**

किं कारणं स्वगणादपक्रमणं क्रिया सूरिराह—स्थविराणामाचार्याणां संलेखनातपोभिः क्लान्तानामिह स्वगणे अभ्युद्यते भक्तपरिज्ञा लक्षणमरणे समुपस्थितानां शिष्याणां आचार्यानुरागेण रोदनक्रन्दनादीनि कुर्युः । रोदनादिकं च तेषामाकर्ण्याश्रुपातं दृष्ट्वा तेषामुपरि कारुण्यमुपजायते । ततो व्याघातः । अन्यच्च-

**सगणे आणाहाणी अप्पत्ति य होइ एवमादीयं । परगणगुरुकुलवासो अप्पत्ति य वज्जितो होइ ॥ ४०५ ॥**

यो गणधरः स्थापितस्तस्याज्ञां केचित् कुर्वन्ति तथा केषांचिदुपकरणनिमित्तमप्रीतिरादिशब्दात् गणभेदो बालादीनामुचिताद्यकरणदर्शनमित्यादि परिग्रहः । तत एवं स्वगणे आज्ञाहानिरप्रीतिरसेवनादिकं ध्यानव्याघातकारणमुपतिष्ठते । ततः परगणे गत्वा भक्तप्रत्याख्यानं प्रतिपद्यते। यत एवं गुरुकुलवास आसेवितो भवति। किं विशिष्ट इत्याह—प्रीतिवर्जितोऽप्रीतिश्च समस्तापि परिहृता भवतीति भावः। अप्रीत्यादिकं यथा स्वगणे भवति तथा प्रदर्शयति ।

**उवगरणनिमित्तं तु वुग्गहं दिस्सवा विगणभेयं । बालादी थेराण व उच्चियाकरणंमि वाघातो ॥ ४०६ ॥**

उपकरणनिमित्तं साधूनामाचार्ये कृतभक्तप्रत्याख्याने व्युद्ग्रहः कलहो भवति । अथवा तं गणधरं केचिन्न मन्यन्ते ततः स्वस्वपक्षे परिग्रहो गणभेदस्तत एवमुपकरणनिमित्तं गणभेदं दृष्ट्वा उपलभ्य तथा बालादीनां बालवृद्धासहग्लानादीनां स्थविराणां चात्र विकरणे उचितकरणादर्शनेऽप्रीतिरुपजायते । तया चाप्रीत्या ध्यानव्याघातः । अयं च परगणे प्रतिपन्ने गुणः ।

**सिणेहो पेलवो होइ निग्गते उभयस्स उ । आहच्च वावि वाघातो वा सेहादि विउब्भमो ॥४०७॥**

**पातोवगमे इंगिणि दुविहा खलु होंति आयनिज्जवगा । निज्जवगा उ परेण उ भत्तपरिन्ना य बोधव्वा ॥३९३॥**

आत्मनिर्यापकाः खलु द्विविधा भवन्ति तद्यथा—पादपोपगमे इंगिनीमरणे च परेण पुनर्निर्यापना भक्तपरिज्ञायां बोद्धव्या ।

**पाउवगमइंगिणि दोन्नि विचिट्ठं तु भावमरणाइं । भत्तपरिण्णाए विहिं वुच्छामि अहाणुपुव्वीए ॥ ३९४ ॥**

पादपस्योपगमो यस्य तत् पादपोपगमं इङ्गिनीमरणं च द्वे अपि तावन्मरणे तिष्ठतः पश्चात् वक्ष्यमाणत्वात् सम्प्रति भक्तपरिज्ञाया-विधिमानुपूर्व्या वक्ष्यामि । प्रतिज्ञातमेव निर्वाहयति—

**पव्वज्जादीकाउं नेयव्वं ताव जा अवोच्छित्ती । पंच तुलेऊणप्पा सा भत्तपरिण्णं परिणतो उ ॥ ३९५ ॥**

प्रव्रज्यामादिं कृत्वा तावन्नेतव्यं यावदव्यवच्छित्ति किमुक्तं भवति ? प्रथमतः प्रव्रज्यां तदनन्तरं ग्रहणासेवनरूपां शिक्षां, ततः परं पञ्चमहाव्रतानि तदनन्तरमर्थग्रहणं ततोऽनियतो वासस्ततः परिपूर्णां गच्छस्य निष्पत्तिं कृत्वा तदनन्तरं तवेण सत्तेणसुत्तेण वलेण य । इत्येवं रूपाभिः पञ्चभिस्तुलनाभिरात्मानं तोलयित्वा भक्तपरिज्ञां प्रति परिणतो भवति ।

**सपरक्कमे य अपरक्कमे य वाघाए आणुपुव्वीए । सत्तत्थजाणएण समाहिमरणं तु कायव्वं ॥ ३९६ ॥**

भक्तपरिज्ञारूपं नाममरणं द्विधा सपराक्रममपराक्रमं च । तत्र सपराक्रमं द्विविधं व्याघातिमं निर्व्याघातं च । तत्र सपराक्रमे एकैकस्मिन् व्याघाते कर्मणि घञ् प्रत्ययानयनात् व्याघातिमे चशब्दान्निर्व्याघाते च समुपस्थिते सूत्रार्थज्ञापकेन समाधिमरणं कर्तव्यं । एतदेव व्याचष्टे—

**भिक्खवियारसमत्थो जो अन्नगणं च गंतु वाएइ । एस सपरक्कमो खलु तव्विवरीतो भवे इयरो ॥३९७॥**

उ. १०. भा. ३९३-४०२ ॥ ५४ ॥

यः स्वस्य परस्य च निमित्तं भिक्षायां विचारे च गन्तुं समर्थो यदि वान्यगणं गत्वा वाचयति सभक्तप्रत्याख्यानं प्रतिपित्सुः परा-
क्रमस्तद्विपरीतो भिक्षादावसमर्थो भवति इतरोऽपराक्रमस्तद्गतं मरणमपि यथाक्रमं सपराक्रममपराक्रमं च ।

**एक्केक्कं तु दुविहं निव्वाघायं तहेव वाघायं । वाघातो वि य दुविहो कालतियरो इयरो वा ॥३९८॥**

तत्सपराक्रमगपराक्रमं च मरणमेकैकं द्विविधं निर्व्याघातं व्याघातं च । तत्र व्याघातो नाम यथा अच्छभल्लेन कालादौ ( ओ? ) घ्रौ च खादितौ, अथवा रोमे व्याघातः ततो मरणं प्रतिपद्यते, । निर्व्याघातं यथोक्तव्याघातरहितं । व्याघातोऽपि च द्विविधः कालातिचार इतरश्च । कालमतिचरति अतिक्रामतीति कालातिचारः कालसहो ।यतश्चिरेण मरणं यथा पूतिगोनाशेन दष्टस्य तं दष्टकालमतीत्य-विंशति रात्रिंदिवादिषु मरणं, इतरः कालानतिचारो यत्तद्दिवसमेव मर्तुकामो भक्तं प्रत्याचष्टे इति ॥

**तं पुण अणुगंतव्वं दारेहिं इमेहिं आणुपुव्वीए । गणनिसरणादिएहिं तेसि विभागं तु वुच्छामि ॥ ३९९ ॥**

तेन पुनर्निर्व्याघातिभिर्वक्ष्यमाणैर्गणान्निःसरणादिद्वारैरानुपुर्व्या क्रमेणानुगन्तव्यं तेषां च द्वाराणां विभागं वक्ष्यामि । तमेव वक्तुकाम आह—

**गण निसरणे परगणे सिति संलेह अगीय असंविग्गो । एगाभोगण अण्णे अणापुच्छपरिच्छ आलोए ॥४००॥**

**ट्ठाण वसहीए सत्थे निज्जवगा दव्व दायणा चरिमे । हाणी अपरियंतनिज्जर संथारुवत्तणादीणि ॥ ४०१ ॥**

**सारेत्तणयकवयं निव्वाघाएण चिंधकरणं तु । अंतो बहि वाघातो भत्तपरिन्नाए कायव्वो ॥ ४०२ ॥**

गणात् स्वगणान्निस्सरणा वक्तव्या परगणगमनं। तथा सितित्ति द्रव्यभावरूपानिःश्रेणिर्वक्तव्या । तथा संलेख संलेखना तथा अगी-

व्य. सू. ३ ॥ ५४ ॥

तस्य अगीतार्थस्य पार्श्वे न भक्तप्रत्याख्यातव्यं तथा असंविग्गोत्ति । असंविग्नस्यापि समीपे न प्रत्याख्यातव्यं । तथा एगत्ति एको निर्यापको न कर्तव्यः । किन्तु बहवः, परतो वा भक्तं प्रत्याख्यातुकामस्य विषये आभोगनं कर्तव्यम् । तथा अन्यो यदि भक्तं प्रत्याख्यातुमुद्यतस्तर्हि यदि तथा तेन निर्यापकाः पूर्यन्ते तदा स प्रतीष्यते, शेषकालं नेति, तथा आचार्येण गच्छस्यानापृच्छया स भक्तप्रत्याख्यानं न प्रतिपादयितव्यः । तथा भक्तं प्रत्याख्यातुकामेन गच्छस्य गच्छेनापि तस्य परीक्षा कर्तव्या । तथा भक्तपरिज्ञां प्रतिपत्तुकामेन नियत आलोचना दातव्या । तथा प्रशस्ते स्थाने प्रशस्तायां वसतौ भक्तपरिज्ञा प्रतिपत्तव्याः । तथा निर्यापका गुणसम्पन्नाः समर्पणीयाः । तथा चरमकाले तस्य भक्तप्रत्याख्यातुकामस्य द्रव्यदर्शनं प्रधानसमस्ताहारद्रव्योपदर्शनं विधेयं । हाणित्ति भक्तं प्रत्याख्यातुकामस्य प्रतिदिवसमाहारस्यहानिर्विधेया तथा अपरिश्रान ताः सर्वकर्मणि प्रतिचारका वर्तन्ते । निज्जरत्ति निर्जरा वक्तव्या तथा संस्तारको यादृशो भवति कृतभक्तप्रत्याख्यानस्यहाकर्तव्य-स्तादृशो वक्ष्यते । तथा तस्य कृतभक्तप्रत्याख्यानस्योद्वर्तनादीनि यथा समाधिकरणीयानि तथा प्रथमद्वितीयपरीषहाभ्यां त्याजितः स्मारयित्वा सर्वं स्वरूपं (मा)नर्थत्वादिलक्षणं कवचं कवचभूतमशनं प्रयोक्तव्यम् । तथा जीवतो मृतस्य च तस्य चिन्हकरणं विधेयं, एतं निर्व्याघातेन भक्तपरिज्ञाव्याघाताभावेन प्रतिपत्तव्यं । अथान्तर्ग्रामादिवहिरुद्यानादिषु भक्तपरिज्ञाया व्याघातः संजातस्ततोगीतार्थानामुपायो भवति कर्तव्यः । एष द्वारगाथा । साम्प्रतमेतदेव विवरीषुः प्रथमतो गणनिस्सरणद्वारमाह—

**गणनिसरणंमि उ विही जो कप्पे वण्णितो समासेणं । सो चेव निरवसेसो भत्तपरिण्णाए दसमंमि ॥४०३॥**

गणनिस्सरणे यो विधिः कल्पे कल्पाध्ययने सप्तविधः सप्तप्रकारो वर्णितः स एव व्यवहारे दशमे उद्देशके भक्तपरिज्ञायां भक्तज्ञानाधिकारो निरवशेषो वक्तव्यः । गणनिस्सरणं द्वारं गतमिदानीं परगणद्वारं परगणे गत्वा भक्तप्रत्याख्यानं कर्तव्यम् ।

उ. १०. भा. ४०३–४०७ ॥ ५५ ॥

किं कारणं चंकमणं थेराण इहं तवो किलंताणं । अब्भुज्जयंमि मरणे कालुणिया ज्झाणवाघातो ॥४०४॥

किं कारणं स्वगणादपक्रमणं क्रिया सूरिराह–स्थविराणामाचार्याणां संलेखनातपोभिः क्लान्तानामिह स्वगणे अभ्युद्यते भक्तपरिज्ञा लक्षणमरणे समुपस्थितानां शिष्याणां आचार्यानुरागेण रोदनक्रन्दनादीनि कुर्युः। रोदनादिकं च तेषामाकर्ण्याश्रुपातं दृष्ट्वा तेषामुपरि कारुण्यमुपजायते। ततो व्याघातः। अन्यच्च-

स्वगणे आणाहाणी अप्पत्ति य होइ एवमादीयं । परगणगुरुकुलवासो अप्पत्ति य वज्जितो होइ ॥ ४०५ ॥

यो गणधरः स्थापितस्तस्याज्ञां केचित् कुर्वन्ति तथा केषांचिदुपकरणनिमित्तमप्रीतिरादिशब्दात् गणभेदो बालादीनामुचिताद्यकरणदर्शनमित्यादि परिग्रहः। तत एवं स्वगणे आज्ञाहानिरप्रीतिरसेवनादिकं ध्यानव्याघातकारणमुपतिष्ठते । ततः परगणे गत्वा भक्तप्रत्याख्यानं प्रतिपद्यते। यत एवं गुरुकुलवास आसेवितो भवति। किं विशिष्ट इत्याह–प्रीतिवर्जितोऽप्रीतिश्च समस्तापि परिहृता भवतीति भावः। अप्रीत्यादिकं यथा स्वगणे भवति तथा प्रदर्शयति ।

उवगरणनिमित्तं तु वुग्गहं दिस्सवा विगणभेयं । बालादी थेराण व उचियाकरणंमि वाघातो ॥ ४०६ ॥

उपकरणनिमित्तं साधूनामाचार्ये कृतभक्तप्रत्याख्याने व्युद्ग्रहः कलहो भवति । अथवा तं गणधरं केचिन्न मन्यन्ते ततः स्वस्वपक्षे परिग्रहो गणभेदस्तत एवमुपकरणनिमित्तं गणभेदं दृष्ट्वा उपलभ्य तथा बालादीनां बालवृद्धासहग्लानादीनां स्थविराणां चात्र विकरणे उचितकरणादर्शनेऽप्रीतिरुपजायते। तया चाप्रीत्या ध्यानव्याघातः। अयं च परगणे प्रतिपन्ने गुणः।

सिणेहो पेलवो होइ निग्गते उभयस्स उ । आहच्च वावि वाघातो वा सेहादि विउब्भमो ॥४०७॥

स्वगणान्निर्गतोभयस्यापि गणस्याचार्यस्य वा स्नेहः परस्परं पेलवः प्रतनुर्भवति । अन्यच्च आहच्च–काचित् प्रथमपरीषहेनत्याजि-
व्य. सू. ३ ॥ ५५ ॥ तस्य भक्तपरिज्ञां यो व्याघातेऽपि विलोपः स्यात्, तस्मिन् व्याघातेन स्वगणात् शैक्षकादीनां व्युद्गमो जायते आघातपरिज्ञानाभावात् । अथवा विपरिणामोऽपि स्यात्, तथाहि स्वगुणे स्थितं भग्नपरिज्ञं जानन्ति । ज्ञात्वा च सर्वा अपि प्रतिज्ञा एतेषामीदृशा एवेति विपरिणामं गत्वा
१८ संयमं लोपयन्ति । सम्प्रति सीतिद्वारमाह—

**दव्वसिती भावसिती अणुयोगधराण जेसिमुवलद्धा । न हु उड्ढगमणकाड्ढा हेट्ठिल्लपयं पसंसंति ॥४०८॥**

**संजमट्ठाणेणं कंडगाणालसाविती विसेसाणं । उवरिल्लपयकमलं भावसिती केवलं जाव ॥ ४०९ ॥**

सितिनाम ऊर्ध्वमधो वा गच्छतः सुखोत्तरोवतारहेतुः काष्ठादिमयः पन्थाः । सा द्विधा–द्रव्ये भावे च । तत्र द्रव्येशितिर्निःश्रेणिः सा
२२ द्विधा ऊर्ध्वगमने च तत्र अधोगमने च तत्र ययाधस्तनात् भूमिग्रहादिष्ववतीर्यते साऽधो गमने, ययोर्ध्वपरिमाणे आरुह्यते सा ऊर्ध्व-
गमने, भावशीतिरपि द्विधा प्रशस्ताऽप्रशस्ता च । तत्र यैर्हेतुभिस्तेषामेव संयमस्थानानां संयमकंडकानां लेश्यापरिणामविशेषाणां वा
अधस्तात् संयमस्थानेष्वपि गच्छति, सा अप्रशस्ता भावशीतिः यैः पुनर्हेतुभिस्तेषामेव संयमादिस्थानानामुपरितनेषूपरितनेषु विशेषेष्वध्या-
रोहति, सा प्रशस्तोच्चोपरितन एव क्रमेण भावशीतिस्तावद्द्रष्टव्यं । यावत्केवलज्ञानं; तत्र येषामनुयोगधराणामाचार्याणामेवं द्रव्ये भावे च
२६ शीतिरुपलब्धा भवति, ते न हु नैव ऊर्ध्वगमने कार्ये कर्तव्येऽधस्तनपदं प्रशंसन्ति । न तासु सपदगमनायाशुभव्यवसायप्रद्यतिमातन्वते
किंतु शुभेषु व्यवसायेष्वारोहन्ति । गतं सीतिद्वारं । संलेखना द्वारमाह—

**उक्कोसा य जहन्ना दुविहा संलेहणा समासेण । छम्मासा उ जहण्णा उक्कोसा बारससमा उ ॥ ४१० ॥**

[illegible]. १०. भा. ४०८–४१३ ॥ ५६ ॥

संलेखना समासेन द्विविधा प्रज्ञप्तास्तद्यथा—उत्कृष्टा जघन्या चशब्दात् मध्यमा च । तत्र जघन्या षण्मासा उत्कृष्टा द्वादशसमा द्वादशवर्षा ।

**चिट्ठउ जाव जहण्णा, उक्कोसं तत्थ ताव वोच्छामि । जं संलहिऊण मुणी साहंती अत्तणो अत्थं ॥४११॥**

तत्र तयोर्जघन्योत्कृष्टयोर्मध्ये जघन्यतो वेति । अनुपश्चाद्वक्ष्यमाणत्वादुत्कृष्टं तावद्वक्ष्यामि यदित्यन्वयं यथा मुनय आत्मानं संलिख्यात्मनोऽर्थं साधयन्ति तामेवाह—

**चत्तारि विचित्ताइं विगई निज्जूहियाइं चत्तारि । एगंतरमायामे नाति विगिच्छेय विगेहे ॥ ४१२ ॥**

चत्वारि वर्षाणि विचित्राणि विचित्रतपांसि करोति, । किमुक्तं भवति ? चत्वारि वर्षाणि यावत्कदाचित् चतुर्थं कदाचित् षष्ठं कदाचिदष्टममेवं दश द्वादशादीन्यपि करोति, कृत्वा च पारणकं सर्वकामगुणितेनाहारेण पारयति ततः परमन्यानि चत्वारि वर्षाण्युक्तप्रकारेण विचित्रतपांसि करोति । विकृतिनिज्जूहितानि किमुक्तं भवति विचित्रं तपः कृत्वा पारणके निर्विकृतिकं भुङ्क्ते । उत्कृष्टरसवर्जं च ततः परतोऽन्ये द्वे वर्षे एकान्तरमायामं करोति । एकान्तरं चतुर्थं कृत्वा आयामेन पारयति । एवमेतानि दश वर्षाणि गतानि एकादशस्य वर्षस्यादेशान् नातिविकृष्टं तपः कृत्वा आयामेन परिमितं भुंक्ते, नातिविकृष्टं नाम तपश्चतुर्थं षष्ठं वावगन्तव्यम् । ततः परमन्यान् विकृष्टं तपः कृत्वा मा शीघ्रमेव मरणं यायासमिति कृत्वा पारणके परिपूर्णप्राण्या आयामं करोति विकृष्टं नामाष्टमादिकं साम्प्रतमेतदेव व्याचिख्यासुराह—

**संवच्छराणि चउरो होंति विचित्तं चउत्थमादीयं । काऊण सव्वगुणियं पारेई उग्गमविसुद्धं ॥ ४१३ ॥**

आदिमानि चत्वारि संवत्सराणि विचित्रं तपः चतुर्थादिकं भवति । तच्च कृत्वा पारयति भुंक्ते सर्वगुणितं सर्वगुणितमाहारमुद्गमविशुद्धम् ।

**पुणरवि चउरण्णे ऊ विचित्तकाऊण विगतिवज्जं तु । पारेइ सो महप्पा णिद्धं पणियं च वज्जेइ ॥ ४१४ ॥**

पुनरप्यन्यानि चत्वारि वर्षाणि विचित्रं तपः कृत्वा स महात्मा विकृतिवर्जं पारयति । तत्रापि स्निग्धं प्रणीतं चोत्कृष्टरसं वर्जयति ।

**अण्णातो दोण्णि समा चउत्थकाऊण पारेति । आयामं कञ्जिएणं तु ततो अवक्कसमं इमं कुणइ ॥४१५॥**

अन्यद्वे समे वर्षे चतुर्थं कृत्वा आयामं पारयति । एवं दश वर्षाणि गतानि । ततः परमन्यामेकां समां वर्षमिमां वक्ष्यमाणां काञ्जिकेनायामपारणकेन करोति, कथमित्याह—

**तत्थेकं छम्मासं चउत्थ छट्ठं तु काउ पारेइ । आयंबिलेण नियमा बिइए छम्मासिए विगिट्ठं ॥ ४१६ ॥**

**अट्ठमदसमदुवालसकाऊणायंबिलेण पारेइ । अन्नेकहायणं तू कोडिसहियं तु काऊण ॥ ४१७ ॥**

तत्र एकादशे वर्षे एकमाद्यं षण्मासं यावत् चतुर्थं षष्ठं वा कृत्वा नियमादायामेन पारयति । द्वितीये षण्मासे विकृष्टमष्टमं दशमं द्वादशं वा कृत्वा आयामाम्लेन पारयति । एवमेकादशवर्षाणि गतानि । अन्यमेकं द्वादशं हायनं कोटीसहितं कृत्वा किमित्याह—

**आयंबिल उसुणोदेण परिहावेंतो आणुपुव्वीए । जह दीवे तेल्लवत्ती खउसमं तह सरीराउ ॥ ४१८ ॥**

आयामो च उण्णोदकेन पारयति । अयमत्र सम्प्रदायो—द्वादशे वर्षे कोटी सहितं प्रत्याख्यानं चतुर्थविषयं कृत्वा प्रथमं पारण-

क्रमायामेनोष्णोदकेन करोति, द्वितीयं पारणकं निर्विकृतिकेन, तृतीयं पुनरायामेन यथोक्तरूपेण चतुर्थं निर्विकृतिकेन। एवमेकान्तरितं पारणकेष्वायामं करोति। कोटीसहितं नाम प्रथमदिवसे पुनरभक्तार्थं कृत्वा पारयति। एतच्चतुर्थे कोटीसहितं प्रत्याख्यानं। एवं षष्ठाष्टमादि कोटीसहितान्यपि भावनीयानि अथवायमन्यो द्वितीयः प्रकार एकस्मिन् दिने चतुर्थं कृत्वा द्वितीये दिवसे पारयति तृतीये दिवसे पुनश्चतुर्थं करोति चतुर्थं दिवसे पारयति, एतच्चतुर्थकोटीसहितमेवं षष्ठं कृत्वा पारयति पुनः षष्ठं करोति, ततः पारयति, एवमष्टमादिकोटीसहितान्यपि भावनीयानि। हावेंतो आणुपुव्वीए इति तस्मिन् द्वादशे वर्षे पारणकेषु यथाक्रममेकैकं कवलं हापयन् पारयति यावदेकं कवलं। ततः शेषेषु पारणकेषु क्रमश एकेन शिक्थेनोनमेकं कवलमाहारयति। द्वाभ्यां शिक्थाभ्यां त्रिभिः शिक्थैरेवं यावदन्ते एकसिक्थमाहारयति। कस्मादेवं करोतीति चेदत आह—यथा दीपे सममेककालं तैलवर्त्तिक्षयं भवति तथा शरीरायुषः समकं क्षयः स्यादिति हेतोः।

पच्छित्तहायणे रूवच्चउरो धारे त्तु तेल्लयं इसा। निसिरेज्जा खलमल्ले किं कारणगल्लधरणं तु ॥ ४१९ ॥

लुक्खता सुहजत्तं माहु खुभेज्जइ तेण धारेइ। माहु नमोक्कारस्स अपच्चलो सो हवेज्जाहि ॥ ४२० ॥

तस्मिन् पश्चिमे द्वादशे हायने येऽन्तिमाश्चत्वारो मासास्तेष्वेकैकस्मिन् पारणके एकान्तरितं तैलं गण्डूषं चिरकालं धारयति। धारयित्वा खेलमल्लके सक्षारे निसृजति त्यजति। ततो वदनं प्रक्षालयति। किं कारणं गल्ले गण्डूषधारणं क्रियते उच्यते—मा मुखयन्त्रं रूक्षत्वाद्वातेन क्षुभ्येतैकत्र संपिण्डीभूयते तथा च सति मा स नमस्कारस्य भणनेऽप्रत्यलोऽसमर्थो भवेदिति हेतोर्गल्ले तैलधारणं करोति।

उक्कोसगा उ एसा संलेहा मज्झिमा जहन्ना या। संवच्छर छम्मासा एमेव य मासपक्खेहिं ॥ ४२१ ॥

एषा अनन्तरोदिताः संलेखा संलेखना उत्कृष्टा भणिता। मध्यमा संलेखना संवत्सरप्रमाणा एव प्रागुक्तेन प्रकारेण द्वादशाभि-

मांसैः परिभावनीया—जघन्या एषा षण्मासा द्वादशभिः पक्षैर्वर्षस्थाने मासान्पक्षांश्च स्थापयित्वा तपोविधिः प्रागिव निरवशेष उभयत्रापि भावनीय इति भावः।

**एत्तो एगतरेणं, संलेहणं खवेसु अप्पाणं। कुज्जा भत्तपरिण्णं इंगिणि पाओवगमणं वा ॥४२२॥**

एतेषामुत्कृष्टमध्यमजघन्यानां संलेखनानामेकतरेण संलेखनेनात्मानं क्षिपयित्वा कुर्यात् भक्तपरिज्ञामिङ्गिनीमरणं पादपोगमनं वा, गतं संलेखनाद्वारमधुना अगीतद्वारमाह—

**अग्गीयसगासंमी भत्तपरिण्णं तु जो करेज्जाहि। चउ गुरुगा तस्स भवे किं कारणिज्जेणिमे दोसा ॥४२३॥**

गीतार्थस्य समीपे भक्तप्रत्याख्यातव्यं, यस्त्वगीतस्वागीतार्थस्य सकाशे समीपे भक्तपरिज्ञा भक्तप्रत्याख्यानं करोति तस्य प्रायश्चित्तं चत्वारो गुरुकाः किं कारणमुच्यते येन कारणेन इमे वक्ष्यमाणादोषास्तेन कारणेन तत्र तानेव दोषानाह—

**नासेती अग्गीतो चउरंगं सव्वलोयसारंगं। नट्ठंमिय चउरंगे न हू सुलभं होइ चउरंगं ॥४२४॥**

अगीतो अगीतार्थो निर्यापकस्तस्यकृतभक्तप्रत्याख्यानस्य चतुरङ्गं चतुर्णामंगानां समाहारश्चतुरङ्गं वक्ष्यमाणं कथंभूतमित्याह—सर्वलोकसाराङ्गं अङ्गवरं प्रधानमित्यनर्थान्तरं सर्वेषामपि त्रयाणामपि लोकानां यानि अङ्गानि तेषां सारमिति विशिष्टमङ्गं प्रधानं सर्वलोकसारांगं नष्टे च चतुरङ्गे न पुनः सुलभं प्रापं भवति चतुरङ्गं, किन्तु चुल्लकादिदृष्टान्तैरतिशयेन दुःप्रापं ततोऽगीतस्य समीपे भक्तं न प्रत्याख्येयम्—

**किं पुण तं चउरंगं जं नट्ठं दुलहं पुणो होइ। माणुस्सं धम्मसुती सद्धा तव संजमे विरियं ॥ ४२५ ॥**

किं पुनस्तच्चतुरङ्गं यन्नष्टं सत् पुनर्दुर्लभं भवति । सूरिराह—मानुष्यं मानुषत्वं धर्मश्रुति धर्मश्रवणं श्रद्धा तपसि संयमे च वीर्यमिति।

किह नासेति अगीतो पढमबितिएहिं अट्टितो सो उ । उहासे कालियाए तो निद्धम्मोत्ति छड्डेज्जा ॥ ४२६ ॥

कथं केन प्रकारेण सोऽगीतार्थस्तस्य चतुरङ्गं नाशयति । सूरिराह प्रथमद्वितीयाभ्यां क्षुत्पिपासालक्षणाभ्यां परीषहाभ्यामर्दितः पीडितः स भक्तप्रत्याख्याता कदाचित् कालिकायां रात्रौ भक्तं च पानं च अवभाषेत, याचेत । ततः सोऽगीतार्थो न कल्पते इति कृत्वा न दद्यात्, चिन्तयति च भक्तं प्रत्याख्याय पुनर्याचते भक्तं तत्रापि रात्रौ एष निर्धर्मा असंयतीभूत इति कृत्वा तं त्यजेत् त्यक्त्वा गच्छेत्।

अंतो वा बाहिं वा दिवा य रातो य सो विचित्तो उ । अट्ट दुहट्टवसट्टो पडिगमणादीणि कुज्जाहि ॥४२७॥

अन्तरुपाश्रयस्य यदि वा बहिरुपाश्रयस्य दिवा वा रात्रौ वा तेनागीतार्थेन विविक्तः सन् आर्तः दुःखार्तः वशार्तः सः प्रतिगमनादीनि प्रतिगमनं नाम प्रतिभञ्जनं व्रतमोक्षमित्यर्थः । आदिशब्दात् मृत्वा कुगतिविनिपातान्वा कुर्यात्तांश्च कुगतिविनिपातानेवाह—

मरिऊण ट्टज्झाणो गच्छे तिरिएसु वणयरेसुं वा । संभरिऊण य रुट्ठो पडिणीयत्तं करेज्जाहि ॥ ४२८ ॥

स आर्तध्यानो मृत्वा तिर्यक्षु वा तिर्यग् योनिषु गच्छेत् यदि वा वनचरेषु वानमन्तरेषु मध्ये स समुत्पद्येतत्र जातिं स्मृत्वा त्यक्तोऽहं तस्यामवस्थायामिति रुष्टः सन् बहुविधं प्रत्यनीकत्वं कुर्यात् ।

अहवा विसवरीए मोयं दिन्नाहि जायमाणस्स । सो दंडियादि हुज्जा रुट्ठो साहे निवादीणं ॥ ४२९ ॥

कुज्जा कुलादि पत्थारं सो वा रुट्ठो उ गच्छे । मिच्छत्तं तप्पयं च दीहं भमेज्ज संसारकंतारे ॥ ४३० ॥

अथवा सर्वपर्यापनीयं याचमानस्य रात्रौ पानीयं नास्तीति प्रोक्तं प्रश्रवणं सोऽगीतार्थो दद्यात् । स च दण्डिकादीनां सम्बन्धी निष्क्रान्तः स्यात् ततः स धातुवैषम्येन रुष्टः सन् अवधावेत् । अवधाव्य च नृपादीनां कथयेत्ततः प्रवचनस्य महानुड्डाहः । यदि वा स राजादिस्तत्पक्षपतितः सोऽपि वा स्वयं रुष्टकुलादिप्रस्तारं कुलस्य गणस्य वा विनाशं कुर्यात् । यद्यपि च एवमादयो दोषा न भवन्ति । तथा प्रथमद्वितीयपरीषहाभ्यां परितप्यमानोऽसमाधिना मृतो दुष्कर(रा)मपि कृत्वान्तक्रियां कल्पविमानोपपत्तिं वा न प्राप्नुयात् । किन्तु वानम-
१८ न्तरादिषूपपद्येत यदि वा कषायपीडितो दृष्टिविषः सर्पो जायेत । गच्छे मिच्छत्तमिति इह भवे वा मिथ्यात्वं गच्छेत् तत्प्रत्ययं च मिथ्यात्व-प्रत्ययं च दीर्घसंसारकान्तारं भ्रमेत्

**सो उ विविंचिय दिट्ठो संविग्गेहिं तु अन्नसाहूहिं । आसासियमणुसिट्ठो मरणो वि पडिवन्नं ॥ ४३१ ॥**

स प्रत्याख्यातभक्तो भक्तं याचमानो अगीतार्थः साधुर्विविक्तः परित्यक्तोऽन्यैः संविग्नैर्गीतार्थसाधुभिर्दृष्टस्ततस्तैराश्वासित आश्वास्य
२२ च अनुशिष्टोऽतिशयेन दूरमुत्साहितस्ततो यत् अभ्युद्यतमरणं त्यक्तं तत्पुनरपि तेन प्रतिपन्नं ततः सुगतिभागी जातः ।

**एए अन्ने य तहिं व दोसा य पच्चवाया य । एएहिं कारणेहिंऽगीयत्थ न कप्पति परिण्णा ॥ ४३२ ॥**

यस्मादेतेऽनन्तरोदिता अन्ये चानुक्ता वहवो दोषाः प्रत्यवायाश्चागीतार्थस्य समीपे भक्तपरिज्ञाप्रतिपत्तौ तस्मादेतैः कारणैरगीतार्थस्य समीपे परिज्ञा भक्तपरिज्ञा न कल्पते । संविग्नगीतार्थानां च समीपे वहवो गुणास्तस्मात्तन्मार्गणा कर्तव्या । सा च द्विधा—क्षेत्रतः कालतश्च ।
२६ तत्र क्षेत्रतस्तामाह—

**पंच व छ सत्तसए अहवा एत्तो वि सातिरेगतरे । गीयत्थपायमूलं परिमग्गेज्जा अपरितंतो ॥ ४३३ ॥**

उ. १०. भा. ४३१-४३८ ॥ ५९ ॥

पञ्च षट् सप्त वा योजनशतान्यथवा इतोऽपि सातिरेकतराणि योजनशतानि संविग्नपादमूलमपरित्रान्तो अनिवृत्तो मृगयते । उक्ता क्षेत्रतो मार्गणा । कालत आह—

**एक्कं च दोव तिन्नि च उक्कोसं बारसेव वासाणि । गीयत्थ पायमूलं परिमग्गेज्जा अपरितंतो ॥ ४३४ ॥**

एको द्वे त्रीणि वा उत्कर्षतो द्वादशवर्षाणि यावदपरित्रान्तो अनिर्विंन्नो गीतार्थपादमूलं परिमृगयते ।

**गीयत्थ दुल्लभं खलु पडुच्च य काले तु मग्गणा एसा । ते खलु गवेसमाणा खेत्ते काले य परिमाणं ॥४३५॥**

गीतार्थो दुर्लभो यस्मिन् काले तं गीतार्थदुर्लभं कालं प्रतीत्याश्रित्य एषानन्तरोदिता क्षेत्रतः कालतश्च मार्गणाभिहिता ते खलु गीतार्थं गवेषयन्तः क्षेत्रविषये कालविषये च परिमाणमुत्कृष्टमेतावत् कुर्वन्ति ।

**तम्हा गीयत्थेणं पवयण गहियत्थ सव्वसारेणं । निज्जवगेण समाही कायव्वा उत्तमट्ठंमि ॥ ४२६ ॥**

यस्मात् क्षेत्रतः कालतश्च गीतार्थमार्गणायामेतावानादरः कृतस्तस्मात्तेन गीतार्थेन प्रवचनगीतार्थसर्वसारेण प्रवचनस्य गृहीतोऽर्थस्य सर्वसारो येन स तथा तेन निर्यापकेण उत्तमार्थे व्यवस्थितस्य समाधिः कर्तव्या । गतमगीतार्थद्वारमसंविग्नद्वारमाह—

**असंविग्गसमीवे वी पडिवज्जंतस्स होइ गुरुगा उ । किं कारणं तु जहिं जम्हा दोसा हवंति इमे ॥ ४३७ ॥**

असंविग्नसमीपेऽपि भक्तपरिज्ञां प्रतिपद्यमानस्य भवन्ति चत्वारो गुरुकाः प्रायश्चित्तं । किं कारणं यत्र यस्मादिमे वक्ष्यमाणा दोषा भवन्ति तानेवाह—

**नासेति असंविग्गो चउरंगं सव्वलोयसारंगं । नट्ठंमि उ चउरंगे न हु सुलभं होंति चउरंगं ॥४३८॥**

व्य. सू. नाशयत्यसंविग्नश्चतुरङ्गं मानुषत्वादिरूपं सर्वलोकसाराङ्गसर्वलोकप्रधानतराङ्गेन तु नैव सुलभं प्राप्तं भवति चतुरङ्गं कथं नाश-
३ यतीत्यत आह—

॥ ५९ ॥ **आहाकम्मि य पाणग पुप्फासीया बहु जणे णायं। सेज्जा संथारो वि य उवही वि य होइ अविसुद्धो ॥४३९॥**

१८ असंविग्नो वहुजनस्य यथा तथा वा ज्ञातं करोति यथा एष कृतभक्तप्रत्याख्यानस्ततः स आधाकर्मिकं पानमानयति पुष्पाणि च ढौकयति। सेचनं च चन्दनादिना करोति। तथा शय्या संस्तारक उपधिश्च तेनानीतोऽविशुद्धो भवति।

**एते अन्ने य तहिं बहवे दोसा य पच्चवाया य; एएण कारणेणं असंविग्गे न कप्पइ परिन्ना ॥ ४४० ॥**

एतेऽनन्तरोदिताऽन्ये चानुक्ता बहवो दोषाः प्रत्यवायाश्च तत्र प्रत्यवायाः प्रागिवासमाधिमरणतो वानमन्तरेभ्यूत्पादितो नृपा-
२२ दिकथनतो वा वेदितव्या एतेन कारणेनासंविग्नेऽसंविग्नस्य समीपे परिज्ञा न कल्पते। किन्तु संविग्नस्यान्तिके ततः क्षेत्रतः काल-तश्च मार्गणामाह—

**पंचेव छ सत्तया अहवा एत्तो वि सातिरेगं। संविग्गपायमूलं परिमग्गिज्जा अपरितंतो ॥४४१॥**

इयं क्षेत्रतः कालत आह—

२६ **एक्कं व दोव तिण्णि व उक्कोसं बारसेव वासाणि। संविग्गपायमूलं परिमग्गिज्जा अपरितंतो ॥४४२॥**

**संविग्ग दुल्लभं खलु कालं तु पडुच्च मग्गणा एसा। ते खलु गवेसमाणा खेत्ते काले य अपरिमाणं ॥४४३॥**

यस्मादेवं क्षेत्रतः कालतश्च मार्गणायामादरः कृतः।

